

# संस्कृतप्रतिभा

# SAMSKRITA PRATIBHA

द्वितीय उन्मेषः
प्रथमो विलासः
एप्रिल् - १९६०

साहित्य अकादेमी, नवदेहली

**संस्कृतप्रतिभा** द्वितीय उन्मेषः प्रथमो विलासः
एप्रिल् १९६०
साहित्य - अकादेमी नवदेहली

## विषयानुक्रमणिका

अनुवादाः—

१९. तितिक्षुर्भूपालः—सत्यव्रतः

२०. 'तिरुक्कुरळ्'—का. स्वा. नरसिंहशास्त्री

२१. रामचरितमानसम्—के. तिरुवेङ्कटाचार्यः

*रवीन्द्रसाहित्यम् :*

२२. ,, परिशोधः—फटिकलालदासः

२३. ,, शैशवम्—कृ. त. पाण्डुरङ्गी

२४. ,, स्वर्गजा—वसन्तपाटील्

२५. अन्तिममामन्त्रणम्—होसे रिसल्—वे. राघवः

२६. अण्डप्रमाणकं धान्यम्—टाल्स्टाय्—वे. राघवः

**निकषोपलः** (पुस्तकविमर्शः)

वासिष्ठवैभवम् (कपालिशास्त्री), गीतमाला (वासिष्ठः काव्यकण्ठगणपतिमुनिः), महाविद्यादिसूत्रग्रन्थावलिः (वासिष्ठगणपतिमुनिः), श्रीमहावीरवैभवम् (एस्. कृष्णताताचार्यः), अमृत-मन्थन अथवा जीवन का दिव्यपक्ष (डा० मङ्गलदेवशास्त्री), प्रतिराजसूयम् (य. महालिङ्गशास्त्री), श्रीधन्वन्तरिजन्मामृतं काव्यम् (पण्डित प्रभुदत्तशास्त्री), श्रीशङ्करगुरुस्तोत्रम् (का. वे. कृष्णमूर्तिशर्मा), शारदा (पत्रिका), साहित्यवाटिका (पत्रिका), तरङ्गिणी (पत्रिका), परिणामः (श्रीचूडानाथभट्टरायः), सिनेमाशतकम् ('पद्म' शास्त्री), कामायनी (भगवानदत्तशास्त्री), भाषणसङ्ग्रहः (आदित्यनाथ झा), संक्षिप्तसंस्कृतसाहित्यचरित्रम् (गौरीनाथशास्त्री) ।

**लेखकपरिचयः**

**शुद्धिपट्टिका**

**'संस्कृतप्रतिभा'**—संपादकः (तृतीयावरणपृष्ठे)

## सम्पादकीयम्—

उद्गच्छतानेन द्वितीयोन्मेषपल्लवेन अभिनन्दनीयः संस्कृतप्रतिभायाः प्रथमाब्दपूर्तिमहस्संपद्यत. इति यत्सत्यं प्रमोदत एव सर्वतः संस्कृतप्रणयी लोकः। अस्याश्चोपचये यानि शुभानि सूचकानि पूर्वस्यां सञ्चिकायां निर्दिष्टानि तान्यविच्छिन्नं दृश्यमानानि बहुलीभवन्ति च व्यवसायस्यास्य सम्यक्तां प्राप्तावसरत्वं शुभोदर्कतां च निरूपयन्ति ।

संप्रति हि केन्द्रीयानुग्रहेण सर्वत एव संस्कृतयोगक्षेमवार्ता कामपि कुशलोन्मुखीं दशामुपसर्पतीव । याश्च देशे साप्ताहिकमासिकादिसंस्कृतपत्रिका इतः पूर्वं स्वावलम्बेनैव प्राचलन्, ताभ्योऽस्मिन्वत्सरे केन्द्रसंस्कृतसमित्याः पुरुषकारेण केन्द्रीयद्रव्योपकारः संपादितः। एवमाचार्यादिपरीक्षा उत्तीर्णानां संस्कृतपण्डितानां पुनश्च स्वकीयपाण्डित्यप्रसाधनार्थं केन्द्रीयवृत्तयोऽधुना दास्यन्ते । अनुपलभ्यमानानि बहून्यनर्घाणि संस्कृतपुस्तकानि पुनर्मुद्रणार्थमुपात्तानि । पत्रतन्त्रीसन्देशविभागेन कविसार्वभौमस्य कालिदासस्य सत्कारार्थं मेघदूतशाकुन्तलवस्तुचित्रितं मुद्राद्वयमवतारितम् । वार्ताप्रचाराकाशवाणीमन्त्रालयेन स्वीये वार्षिकग्रीष्मनाटकोत्सवे संस्कृतनाटकस्य स्थानं दत्तम् । राष्ट्रपतिभिश्च स्वातन्त्र्यदिवसोत्सवावसरे चत्वारः संस्कृतपण्डिताः संमानं प्रापिताः ।

साहित्य-अकादमीपरिषदः संस्कृतसमित्या गतेऽधिवेशने चैतन्निरणायि यत् संस्कृतप्रतिभाया इतोऽप्यधिका पत्रसंख्या, तथा प्रतिवर्षं वारद्वयादधिकं प्रकाशनं च यद्यपेक्ष्यते तत्क्रियतां नाम यथासम्भवमिति । ईदृशः प्रतिभाया अस्याः प्रविकासो यथा नचिरादेव सिद्धावस्थामनुभवेत् तथा संस्कृतरसिका संस्कृतश्रद्धालवः संस्कृतनिबन्धारश्चानुस्यूततया आत्मनि प्रेम निबध्नीयुरिति विश्वसित्येषा द्वितीयहायनप्रवेशमङ्गलसमेधमानसौभाग्या संस्कृतप्रतिभा ।

## बुद्धस्मरणम्

चि. द्वा. देशमुखः

मानुष्यं नवलक्षवत्सरवयोऽतिष्ठत्पुरान्तर्हितं
प्राक्तत्त्वज्ञगवेषणोत्खननतोऽदृष्टावशेषं पुनः ।
तत्रालम्भि परं न कापि करुणासाम्राज्यलक्ष्मीवहा
दीनानाथजनार्तिसंविदनघा शान्तिप्रदा संस्कृतिः ॥ १ ॥

लक्ष्मास्याः किमपि प्रकाशमगमन्नव्ये युगे केवलं
तत्राप्याविरभून्नरात्प्रतिनरं कृच्छ्रे ह्युदासीनता ।
संसारस्य गुरू रथो मृदितवान्पङ्गूनपङ्गूंस्तथा
यूनो वृद्धजनाञ्जडांश्च विबुधानन्धाननन्धान्समम् ॥ २ ॥

आर्द्रान्तःकरणाः परार्तिहरणा आसंश्च सन्तोऽवनौ
किन्तु स्नेहपरेण नैजकरुणा केनापि नोज्ज्वालिता ।
यावन्नाजनि पञ्चविंशतिशताब्दीतःपुरा कोऽप्यसौ
लुम्बिन्यां महितेऽन्वये नरपतेः श्रीगौतमो भारते ॥ ३ ॥

सिद्धार्थस्य यथातितप्तपृषता स्नेहेन विस्फूर्जथुः
सिद्धार्थस्य तथाऽभवत्स्फुटपुटं हृत् तप्तपुंदर्शनात् ।
राज्यस्त्रीतनुजादिभौतिकसुखं त्यक्त्वा समृद्धं गणं
योगध्यानतपःपरो निरगमज्जीवातुबोधैकदृग् ॥ ४ ॥

अश्वत्थमूले प्रणिधानमूर्तिः लेभे स बोधेन समं सुकीर्तिम् ।
स्फुटं प्रपद्याखिलविश्वमर्म धर्मानुबन्धि व्यचिनोत् स्वकर्म ॥ ५ ॥

स्वयं प्रबुद्धो जगतीमबूबुधत् स्वयं प्रकाशो भुवनान्यदीदिपत् ।
स्वयं च निर्वाणमुपेत्य जन्मनः स्वयन्त्रणायाः स्वजनानमूमुचत् ॥ ६ ॥

रुजं जरामाधिमघान्यपायवत् त्रुटिभ्रमं मोहविलोभनं च सः ।
नृणां शरण्यो धृतबोधसाधनो व्यनोदयत् संघभुजां सधर्मणाम् ॥ ७ ॥

समादिदेशान्यजनानुशासने दिशासु देशेषु च पार्श्वयायिनः ।
प्रसारिसन्देशवशाद्धरातले लभामहे बुद्धवशंवदान् बहून् ॥ ८ ॥

विलीयते वारिणि वारिविक्रिया यथा च शब्दः खगतो विलुप्यते ।
तथार्हतोऽध्यापनमार्यसंस्कृतौ सहस्रवर्षावधिनात्मसादभूत् ॥ ९ ॥

पश्चादस्याविरासन् मनुजगुरुवराः ख्रिस्तगान्ध्यादयो नो
लोकानां यैर्व्यधायि स्फुरितनवरसं जीवनोद्बोधकार्यम् ।
सैवाहिंसा दया च प्रतिपदममितैर्मानवैर्नव्यशिक्षा-
व्याजेनालम्बनीया भवति तनुभृतां पूर्णनिर्वाणदात्री ॥ १० ॥

बुद्धः शरण्यः शरणोन्मुखानां निवारकश्चैष रणोन्मुखानाम् ।
नेता च धर्माचरणोन्मुखानां शान्तिप्रदोऽयं मरणोन्मुखानाम् ॥ ११ ॥

जयतु जयतु बुद्धः पुण्यकीर्तिर्महात्मा
जयतु च सुगतोऽसौ प्राणिनिर्वाणधुर्यः ।
जयतु गुरुधुरीणः सर्ववित् सर्वशास्ता
जयतु रुचिरधीरो भारतीयप्रदीपः ॥ १२ ॥

## अनर्घभारतम्[1]

य. महालिङ्गशास्त्री

अक्षैः पञ्चभिरग्राह्यं पञ्चभूतबहिःस्थितम् ।
पञ्चत्वरहितं धाम ध्येयं चञ्चत्प्रपञ्चकम् ॥ १ ॥

काश्मीरशीर्षां हिमशैलमूर्धजां भागीरथीहारविशोभिकन्धराम् ।
विन्ध्यस्तनाभोगवतीं, सुमध्यमां काञ्चीनिवेशेन, नमामि मातरम् ॥ २ ॥

पृथ्वीयं पृथुभरतप्रभावक्लृप्ता मन्वादिप्रवरनृपानुशिष्टशीला ।
रामाद्यैर्मुहुरविता विपत्सु, भूपैर्भोजाद्यैरतिविततप्रथापताका ॥ ३ ॥

अस्यां पराशरसुतावनिकर्णजातश्रीकालिदासशुकभारविमाघहर्षैः ।
साकं कुलैः शतसहस्रपरैः कवीनामस्थापि वाङ्मयमहार्घनिकेतजातम् ॥ ४ ॥

अस्यामकारि बहुदुर्गमदुर्गकोटिः शास्त्रव्रजो बहुषु दिक्षु बहुप्रकारः ।
यत्संश्रयास्त्रिभुवनोर्जितसार्वभौमसाम्राज्यलालनचणा गुरवः प्रथन्ते ॥ ५ ॥

विद्याश्चतुर्दश च ता गुणिताश्चतुर्भिस्ताः षोडशापि च कलाः सुकृतोपभोग्याः ।
शंसन्ति भारतमहीवलयस्य यस्य सर्वातिरिक्तसुभगत्वमनन्यसिद्धम् ॥ ६ ॥

रजतगिरिकिरीटा कण्ठिकाभूतकाशीधरणिरमरवेणीलम्बितोदारहारा ।
सविधलसदवन्तीजातनीवीनिबन्धा कटितटकृतकाञ्ची भारती पुण्यभूमिः ॥ ७ ॥

सविश्वनाथमन्दिरा सचित्सभेशमन्दिरा सवेङ्कटेशमन्दिरा सरङ्गनाथमन्दिरा ।
सबुद्धशङ्करा च नः किलावनी प्रपावनी प्रभावती प्रभाविनी महालयैर्महात्मभिः ॥८॥

नलो बत युधिष्ठिरो जनकनन्दिनी सत्यवत्सती शिबिरिति प्रथामधिययौ स सा भारते।
महापुरुषसत्कथाश्रवणकीर्तनैदंपरैर्नरैः खलु निसर्गतो न हि विलङ्घ्यते सत्पथः ॥९॥

---

[1] १९६०-आकाशवाणी-साहित्यसमारोहे पठितमिदम् ।

नमो वेदान्तिभ्यो जयति स जनः कर्मनिरतो
नमः सन्यासिभ्यो जयति च गृही धर्मनिरतः ।
गुरुभ्यः साधुभ्यो भगवति नवाभिन्नविधया
प्रपन्नेभ्यो भक्त्या दिनमनु महद्भ्यो नम इदम् ॥ १० ॥

परपरिभवकर्तृहूणाधिराज्यव्यथादायिनं
भरतधरणिपारवश्यावधूतिक्षमोदाहृतिम् ।
निखिलजगति गीतकीर्तिप्रभाभासुरं सुव्रतं
स्मरति जनगणोऽत्र गान्धिं महात्मानमस्मिन् दिने ॥ ११ ॥

लोके शाम्यतु वैरमान्तरमथ प्रत्यन्तदेशान्तर-
व्यापि, प्रस्फुरदूष्मणापि जरयद् यन्नो वसून्यप्यसून् ।
मा भूत्प्रज्वलताद्य वैशसम्, उदेत्वाह्लदि शीतद्युति-
प्रख्यं प्राणिषु सौमनस्यमभितः सार्वत्रिकश्रेयसे ॥ १२ ॥

सर्वार्थोत्पत्तिहेतोरुपकरणचणैर्यन्त्रस्थपतिभिः
स्वातन्त्र्येणोज्जिहानाविरतपरिकरैः सौभाग्यभरिता ।
अन्यूनद्धर्याऽप्यपर्णा परदिशि महिता रक्षाविधिपटुः
क्षिप्रं सौराज्यभोक्त्रीमुदितनिजजना स्याद्भारतमही ॥ १३ ॥

आ सेतोराहिमाद्रेरनितरसुलभां व्याप्तिमास्थाय सैषा
कालादेवाप्रमेयादपरिमितकविग्रन्थकृत्संभृतर्द्धिः ।
आचन्द्रार्कस्थितीनि प्रथितपृथुजगन्मङ्गलान्यङ्गलक्ष्म्या-
माविष्कुर्वत्यपारा जगति विजयते वैबुधी नः परा गीः ॥ १४ ॥

# आलोकतिमिरवैरं नाम खण्डकाव्यम्

कालीपदतर्काचार्यः

(२)

**मध्यमवैरम्**

तिमिरं बहु निन्दितं ततो मलिनं मानसविप्लवादिव ।
खरशान्तसयुक्तिकोक्तिभिः कियदालोकयशो व्यनाशयत् ॥ १ ॥

अयि किन्नु विकत्थसे मुधा कथया ते व्यथते मनः सताम् ।
अपराधलवेन विच्युते मयि ते द्वेषमतिः किमीदृशी ॥ २ ॥

अहमस्मि भवद्भयोदयाद् बहुदूरे प्रसृतं स्वशर्मणे ।
परमङ्गलकातर! त्वया सुसहा किं न ततोऽपि मे स्थितिः ॥ ३ ॥

गृहगर्भमुपैमि शङ्कया मिहिरात् प्रातरवेक्ष्य ते जनिम् ।
त्वमिहापि गवाक्षवर्त्मना मिलितो मामपसार्य वीर्यभाक् ॥ ४ ॥

गहनं गहनं विशाम्यहं हृदि सम्भाव्य शिवं तदास्पदम् ।
द्रुलताद्यवकाशवर्त्मना परमत्रापि विशन् दुनोषि माम् ॥ ५ ॥

प्रबलाद् भवतो भिया क्रमादधिकारं विजहत्ततोऽप्यहम् ।
गिरिगह्वरमेव संश्रये विजितः क्षुद्रधराधिपो यथा ॥ ६ ॥

न बहिर्मुखशैलकन्दरं मम तत्रापि भवत्युपाश्रयः ।
यदिदं न बहिस्तवौजसः शरणं गर्भदरी ततस्तदा ॥ ७ ॥

गिरिसम्मुखगह्वरं विशन् मणिभित्तिप्रतिघातचालितः ।
अपि पार्श्वगुहां प्रवृण्वतः कुरुषे क्रूर! ममाहितं परम् ॥ ८ ॥

अधिकारमपास्य सर्वतो मयि दूरेऽपि गते दरीगृहे ।
मणिमात्मसहायमाश्रयन् कुरुषे हन्त ममापसारणाम् ॥ ९ ॥

अथ तत्र विचित्य संश्रिते मणिमुक्तेऽपि गुहागृहान्तरे ।
निवसामि नितान्तशङ्कया खलवृत्तिर्भयदा हि सर्वदा ॥ १० ॥

प्रथिता तव शुभ्रता भवे जनकास्ते मिहिरादयोऽर्चिताः ।
स्थितिमानसि चेति नानृतं परनिन्दां तनुषे ततः कथम् ॥ ११ ॥

सति दोषशतेऽपि साधवो न हि निन्दामितरस्य कुर्वते ।
गुणलेशमपि स्थितं ततो बहुलीकृत्य वदन्ति संसदि ॥ १२ ॥

खल एव परस्य सद्गुणानपवार्य प्रतनोति दूषणम् ।
खलता खलतेव तेऽसती बत चित्राय विचित्ररूपभृत् ॥ १३ ॥

कतिचित् स्वगुणावबोधका गुणवाचा परनिन्दया परे ।
द्विविधा निजगौरवेप्सवः प्रथमे तत्र वरं मता बुधैः ॥ १४ ॥

न हि तद्विहितेन कर्मणा लघुतान्यस्य लघु प्रतीयते ।
परनिन्दनतः परः पुनस्त्वरितं हीनतयावधार्यते ॥ १५ ॥

न भवान् प्रथमप्रकारभागितरत्वं त्वयि सम्प्रतिष्ठितम् ।
इतरत्वमृते कथं भवान् परनिन्दां श्रयतां स्वशस्तये ॥ १६ ॥

निजदूषणजं नु लाघवं भवताच्छादयितुं प्रवर्त्तिता ।
मम दोषकथाथवोच्चकैश्चतुराणां गतिरीदृशी मता ॥ १७ ॥

अथवा खलकृत्यकारणं न विचार्यं विदुषा विशेषतः ।
नियमाद् बहिरेव तत्कृतिस्तदलं ते कृतिबीजचिन्तया ॥ १८ ॥

अथ दोषकथां ममोदितां प्रतिहन्तुं प्रतिवाचमाश्रये ।
अवधानपरेण चेतसा परिचिन्त्यं भवता वचो मम ॥ १९ ॥

मनुजादिषु हिंस्रसम्भवा तमसा व्यापदुदीरिता त्वया ।
तव तेषु हि पक्षपातिता किमपक्षस्य न विस्मयावहा ॥ २० ॥

मनुजा इव धातृनिर्मिता भुवने हिंस्रशरीरिणोऽप्यमी ।
मनुजेष्विव तेषु निष्ठितः सुखदुःखानुभवो भवोचितः ॥ २१ ॥

तृषिताः क्षुधिताश्च किं न ते समभीप्सन्ति जलं तथाशनम् ।
शयनस्वपनप्रजागराः किमु तेषामपि नो मनुष्यवत् ॥ २२ ॥

तदुदारधिया नृणां यथा हितमेषामपि किं न भाव्यताम् ।
भवतत्त्वविदां मतिः सती समतामेव समेषु मन्यते ॥ २३ ॥

दिवसे प्रभयान्धताभृतो न विहर्तुं प्रभवन्ति कौशिकाः ।
तिमिरेण निशासमागमे दधते दृष्टिमथो चरन्त्यमी ॥ २४ ॥

न पदे प्रभया प्रभासिते मृगराजोऽपि भिया विराजते ।
द्विपदां मतिगौरवादितो दिवसे बिभ्यति वन्यजन्तवः ॥ २५ ॥

घनकाननलुप्तविग्रहा गिरिगर्भावसथा दिवाथवा ।
समयं क्षपयन्ति हिंस्रका रतिमन्तो निजजीवनावने ॥ २६ ॥

शितशस्त्रहुताशगोलकप्रतिभापूर्वधना हि मानवाः ।
विफलं किल हिंस्रदेहिनां तदुपान्ते नखदन्तमायुधम् ॥ २७ ॥

क्षुधया तृषया च दुर्बला बलवन्तोऽपि पुराद् बहिः स्थिताः ।
निशि मामुपगत्य मङ्गलं समुपायान्ति सुखेन साहसम् ॥ २८ ॥

प्रविशन्ति च सुप्तमानवे नगरे भीतिलवेन वर्जिताः ।
जनयन्त्यपि चित्ततर्पणं निजकाम्यैरशनैः पृथग्विधैः ॥ २९ ॥

निशि सुप्तवतां गृहे सतां न विपत् कापि ततोऽप्रमादिनाम् ।
विपदापतने प्रमादतः कथमन्यः किल दोषभाग् भवेत् ॥ ३० ॥

अशनं निजयोग्यमाश्रिता इह जीवन्ति विभिन्नदेहिनः ।
यदि ते तदविघ्न माश्रिता न हि जह्युः किमिवात्र दूषणम् ॥ ३१ ॥

अहितस्य ततो निवृत्तये मतिमानेत्यवधानमुत्तमम् ।
मृगयुः कवचेन संवृतो वृणुते हिंस्रचयाचितं वनम् ॥ ३२ ॥

समयं किल खण्डशः कृतं यमहोरात्रमयं विदुर्बुधाः ।
मनुजा हि तदर्द्धभागिनः पशुमुख्याश्च तथा विधेर्नये ॥ ३३ ॥

तदहं निजभागसेविनां कथमत्र प्रतिकूलतां श्रये ।
नयबाह्यमिदं विदां मते विधिवैरादहितस्य चास्पदम् ॥ ३४ ॥

विधिनेदृशमावयोर्मिथः समयार्द्धार्द्धविभाग आहितः ।
त्वमनार्यनृपोपमः पुनः परभागाधिकृतिं समीहसे ॥ ३५ ॥

अणिमादिविभूतिभागिनः शिवकाम्याः खलु भूतयोनयः ।
न हिताय तदीयशात्रवं तदरातेस्तव का शिवैषणा ॥ ३६ ॥

शिशिरांशुमथांशुमालिनं त्वमसौ संश्रितवान् यथाक्षणम् ।
गगने ग्रहतारकादिजां रुचिमारादुपहंसि मांसलः ॥ ३७ ॥

रुचिमल्पतमां समीयुषां परिभूतिं प्रविधाय तादृशीम् ।
भजसे बहुनिन्दनीयतां बलिनां दुर्बलपीडनं न सत् ॥ ३८ ॥

निशि दीप्रसुधाकराकरः करजालेन दिवाकरोपमः ।
विरहानलतापितं जनं नयसि प्रेतपतेर्निकेतनम् ॥ ३९ ॥

सरसीसलिलप्रसाधनं त्रिदशानामपि चित्तरञ्जनम् ।
कुमुदं मिहिरं गतस्तथा कमलं हंसि विधुं त्वमाश्रितः ॥ ४० ॥

दिवसे मिहिरानुवृत्तिमान् निशि शीतांशुगतः प्रकाशकः ।
अभिसारविधौ विरोधकृत् कथमास्तां भुवने सुखो भवान् ॥ ४१ ॥

प्रियतान्त्रिकमन्त्रसिद्धयः सुधियः पूर्णिमया न हर्षिणः ।
तिमिरावृतदर्शयामिनीमनुगच्छन्ति महाविभूतये ॥ ४२ ॥

पुरुषार्थचतुष्टयप्रदा तिमिराभा दनुजप्रमर्दिनी ।
अभया परिपूज्यते चिरात्तिमिराच्छन्नकुहूनिशागमे ॥ ४३ ॥

निखिलाहितशातनक्षमा बुध! शक्तिः परिपूज्यते यदा ।
तिमिरे समपेक्षिते तदा किमहं नैव दधीय धन्यताम् ॥ ४४ ॥

जनकास्तव यान्त्यगण्यतां न वलक्षः सततं त्वमीक्ष्यसे ।
न सतां हि विभिन्नरूपता किमपीतं दहनेऽपि काञ्चनम् ॥ ४५ ॥

जननं जगतो यदाभवद् भवतो जन्म तदुत्तरं भवे ।
मम तत्पुरतः स्थितिः स्मृता बहुदर्शी जगति प्रशस्यते ॥ ४६ ॥

प्रलयात् परतोऽपि मन्मयं निखिलं स्थास्यति नित्यतायुतम् ।
तदिह प्रलयेऽप्यवर्जनाद् विजयो मे किमु नोह्यते त्वया ॥ ४७ ॥

यदवैषि च तस्करोद्यमे तिमिरस्यैव दुरन्तदूषणम् ।
विहिते निरपेक्षवीक्षणे तदिदं किं न मृषोपपद्यते ॥ ४८ ॥

प्रचिता परदोषभावना निजमागः परमावृणोति ते ।
यदि सूक्ष्ममिहाभिलक्ष्यते न हि दोषेण भवान् विमुच्यते ॥ ४९ ॥

दिवसे धनिनां निकेतने वसु पश्यन्ति पुरा हि तस्कराः ।
नयनेन तदा तदीक्षणं कथमालोकसहायतां विना ॥ ५० ॥

बहिरास्तृतवैभवेक्षणादनुमायापि धनं यदा तु ते ।
प्रविशन्ति गृहं स्वकर्मणे किमु बीजं न हि तत्र दर्शनम् ॥ ५१ ॥

तिमिरे विषयो न दृश्यते हरणं दर्शनपूर्वकं तथा ।
अत एव तवापराधतो दुरिते मज्जति पश्यतोहरः ॥ ५२ ॥

यदिहात्महनः शरीरिणः परिमुञ्चन्ति सुखं निजानसून् ।
तिमिरे स्वजनैरनीक्षिता न हि तत्राप्यहमेव दोषभाक् ॥ ५३ ॥

स्वहतौ शरणं शरीरिणां विषमुद्बन्धनमन्यदेव वा ।
न विना भवतः सहायतां तदिदं सर्वमितीव लक्ष्यते ॥ ५४ ॥

भवदागमवीक्षितं पुरा विषमाहृत्य पिबन्ति मानवाः ।
गलपाशमृतास्त्वयान्यदा परिचिन्वन्ति कृतिक्षमं पदम् ॥ ५५ ॥

परतस्तिमिरेण पूरिते भुवने बन्धुदृशामगोचराः ।
निजदुर्वहदुःखशान्तये गलपाशेन जहत्यसून् निजान् ॥ ५६ ॥

यदिहान्यदपि स्वघातिनां शरणं जीवनहानिकर्मणि ।
न ततोऽपि भवान् विमुच्यते त्वयि तत्पापमतः प्रयोजके ॥ ५७ ॥

तिमिरे न सहायकं विना गतिरेतन्नहि लाघवाय मे ।
त्वयि सत्यपि किन्तु देहिनः परिपश्यन्ति विनैव लोचनम् ॥ ५८ ॥

तिमिरे कटुरावि कौशिका अहितं भावि वदन्ति तद् वरम् ।
अधिगत्य यतः क्रियाविदः प्रतिकर्तुं तदलं किलाशिवम् ॥ ५९ ॥

तिमिरे क्षपयन्ति कौशिका द्रुमवल्लीप्रसवान्न तन्मृषा ।
भवता दिवसे प्रदीव्यता किमु शक्यापरपक्षिबाधना ॥ ६० ॥

अधमाभिधयाधमात्मतेत्यपि ते नैव सयुक्तिकं वचः ।
अपि दर्दुरवाचिनामभाङ् मधुवैरी हरिरेति हेयताम् ॥ ६१ ॥

असितं नियमेन नाशिवं व्यभिचारस्थलसत्तयाभितः ।
सशिवोऽसितनन्दनन्दनः सशिवा चाप्यसिता हि कालिका ॥ ६२ ॥

किमु सुप्तिगतं तमस्त्वया निकृतं बोधकलावियोगतः ।
अतिमांसलता न ते मतेः किमु तस्मान्नहि सम्प्रकाशते ॥ ६३ ॥

विरते पतिपुत्रजीवने यदि शोकेन विदीर्णमानसा ।
न सती समुपैति सुप्तिकामथवा मोहमहो हता हि सा ॥ ६४ ॥

पतिता व्यसने सुदुस्तरे गुरुशोकादिकरे तथा क्वचित् ।
जनता तमसैव धार्यते घनसुप्त्यादिगतेन विक्लवा ॥ ६५ ॥

मनुजा गदवेदनार्दिता दधते सुप्तिकया शमं परम् ।
अत एव दिशन्ति वैद्यकाः सरुजां सुप्तिकरं महौषधम् ॥ ६६ ॥

वपुरेति रुजामनिद्रया जनशान्तिं प्रतनोति सुप्तिका ।
समये तनुधातुसाम्यकृत् सुतरां सा विबुधैः प्रशस्यते ॥ ६७ ॥

नरकेषु मम स्थितिर्भवे वृजिनं नेतुमतीव हेयताम् ।
नरको यदि नैव कष्टदो विबुधः किन्नु ततो निवर्त्तताम् ॥ ६८ ॥

युधि जीवगणोपमर्दने तव दृष्टा प्रभुता चिरं परा ।
वसुधापि यतः शुचा वृता दिवसान्ते मलिनावभासते ॥ ६९ ॥

तपनो भवदाकरोऽप्यसौ बहु दृष्ट्वा भवदाहितां क्षतिम् ।
त्रपया क्षिपति स्वकं वपुर्ध्रुवमत्यायतपश्चिमार्णवे ॥ ७० ॥

तव दीपजनैः प्रलोकनादुपकृष्टाः पतिताः प्रदीपके ।
अचिरादुपयान्ति पञ्चतां कति कीटाः कति वा पतङ्गकाः ॥ ७१ ॥

गगने चरतो विमानतः प्रतिपक्षाः प्रसमीक्ष्य दूरतः ।
प्रतिपक्षपदं त्वदर्चिषा प्रतिमुञ्चन्ति किलाग्निगोलकम् ॥ ७२ ॥

रिपवो न हि तेन केवला लयमायान्ति परं परेऽपि च ।
अपराधविहीनदेहिनः पुरसम्पत्तिचयश्च नश्यति ॥ ७३ ॥

अत एव विपन्निवृत्तये परराष्ट्रे गुरुवैरमाश्रिते ।
परितो निजराष्ट्रमिष्यते तिमिरं दृष्टिविरोधि नैतिकैः ॥ ७४ ॥

सुखहेतुवितानशेखरे प्रिययोः सङ्गविशेषमङ्गले ।
तम एव सतामपेक्षितं तदहं क्षेमकरं न किं भवे ॥ ७५ ॥

भुवने विधिनानुमोदनान्मम सत्त्वस्य तमेष निन्दसि ।
मम सत्त्वमृते त्वमप्यसन्निति किं नाम विमृष्टवानसि ॥ ७६ ॥

विरहव्यतिरेकरूपता कथिता हि प्रतियोगिता बुधैः ।
त्वमसौ मदभाव एव तन्मदसत्त्वे विरहस्त्वमप्यसन् ॥ ७७ ॥

श्रुतिमानसुदाहृतं त्वया तमसो ज्योतिषि सङ्गमार्थने ।
किमु सेति निषेधबोधनाद् विपरीतार्थपरा न सा श्रुतिः ॥ ७८ ॥

तदहो रिपुनाशहेतवे विनियुक्तः शर एष तावकम् ।
वधमेव विधाय वक्ति ते शरसन्धानविधौ सुदक्षताम् ॥ ७९ ॥

मयका चिरमेव साध्यते भुवने मङ्गलकोटिरीप्सिता ।
यदि तत्र किलानुषङ्गतो लवमात्राकुशलं ततः किमु ॥ ८० ॥

श्रुतिबोधितयागकर्मणां बहुकल्याणफलप्रदायिनाम् ।
अपि हिंसनदोषचिन्तया विबुधा निन्दनमाचरन्त्यहो ! ॥ ८१ ॥

अशिवस्य लवो हि मत्कृते शिवसङ्घे सुतरां प्रलीयते ।
ललितोज्ज्वलभूरिदीधितौ हरिणाङ्के हरिणो न गण्यते ॥ ८२ ॥

तदलं परदोषवार्त्तया निजदोषान् परिचिन्तयात्मना ।
परदोषकथातिरोहिता यदि दोषः परिलक्ष्यते निजः ॥ ८३ ॥

असतां नय एष सर्वतो निजदोषे यदिमेऽन्धदृष्टयः ।
परगौरवबोधवर्जिताः परदोषेषु सहस्रलोचनाः ॥ ८४ ॥

नयमसदुपयुक्तं तत् किमेवं दधानः
परिवदसि मृषा मां वैरबुद्ध्या समृद्धः ।
विरम विगुण ! लज्जा किं न ते सत्समाजे
परगुणनिजदोषौ मुष्णतः कृष्णवृत्तेः ॥ ८५ ॥

इति वचनमुदीर्य तीक्ष्णशान्तं तिमिरमगात् त्वरितं महाद्रिकुक्षिम् ।
लघुचरितमहस्विवैरिभीता महदनुगा हि भवन्ति बुद्धिमन्तः ॥ ८६ ॥

इत्यालोकतिमिरवैरे खण्डकाव्ये तिमिरलपितं नाम मध्यमवैरं समाप्तम् ।

# इतालीयमहाकवेः 'दान्ते'नाम्नः प्रशस्तिः

ना. पा. गुणे

श्रुतं मधुरमेव गीतमिति संशयो नात्र मे
तथापि मनुतेऽश्रुतं मधुतरं मदीयं मनः।
त्वदीयकविता मया न कलिता न चाकर्णिता
तथापि तव मूर्तिबद्धनयनस्य हृद्यास्ति मे ॥ १ ॥

प्रभातघनपाण्डुरं तव विलोक्य लोलाननं
स्मृतेः सरणिमेति कापि रमणी 'बियात्रीगि'ति।
सखीसहचरी च सा हिमकरांशुशुभ्रांशुका
तडिन्नयनमेषिणी च भवतः समीपाद्ययौ ॥ २ ॥

विवृत्तवदनो भवान्नयनरम्यपानस्थिरः
विलोलनयना च सा विलसदिन्दुमन्दस्मिता।
प्रशान्तगगनाङ्गने नवचतुर्दशीचन्द्रमाः
भवांश्च, कमलानना सरसि सा तथा पद्मिनी ॥ ३ ॥

अलभ्यनयनामृताञ्जननिधानमेवंविधं
खिलीकृतगतिः प्रयातुमधुनासमर्थो भवान्।
मुदा स्तिमितहृत्तरङ्गरमणीयदृश्याकृतिः
भवत्प्रतिकृतिर्नितान्तकुशलेन निर्मापिता ॥ ४ ॥

तथापि रुचये बभूव न कविर्युवत्यास्तदा
गता न नवमल्लिका सहचरं विधुं नेन्दिरा।
स्त्रियः किल बहिर्मृणालदलकोमलाङ्ग्यः कथं
तथापि हृदयं कठोरमिव वर्ततेऽस्मिन् पथि ॥ ५ ॥

उभावपि च शैशवे सुपरिरक्षितावन्तिके
"तवास्मि दयिता प्रिये"ति कतिधा तया चुंबितः।

तथाऽपि भजते स्म कंचिदपरं च सा यौवनेऽ-
पृथग्जनितया निबद्धहृदयेषु वामो विधिः ॥ ६ ॥

विधावशुचिकारिणि, ज्वलति कामवह्नौ तथा
विधास्यति परं नु किं निहननाद्दुराकोऽन्तकः ।
दहन्तु किल भौतिकं रुधिरपिण्डमद्धानला
अलं न खलु दिव्यकाव्यमपि ते तव ध्वंसितुम् ॥ ७ ॥

त्वदीयकवितार्चिरेव मदनेन संदीपिता
ज्वलत्यधिकमेव वा विचलितेन्धनः पावकः ।
अमर्त्यपदवीमवाप कवनं तव प्रातिभं
रतिस्तव 'बियात्रिचि' प्रभवति स्म चात्मप्रदा ॥ ८ ॥

सुधासरसकाव्यगीतरसने मनो लालसं
परासु सुमनो हिमेतरकरैर्भृशं पीडितम् ।
निपातय निपातय स्वकृतकाव्यकादम्बरीं
मुखेऽतितरुणातपेऽकरुण जीवितं व्याकुलम् ॥ ९ ॥

चकोर इव चन्दिरे निखिलमाधुरीमन्दिरे
नवेऽम्बुकणवर्षिणीव जलदे यथा चातकः ।
बिसाशन इवाम्बुजे मधुकरोऽरविन्दे यथा
मनो व्रजति मोदमेव कवितासुकान्तानने ॥ १० ॥

त्वदीयकविता पतिष्यति कदा श्रुतौ मे कवे
न मे प्रतनु पुण्यमस्त्यवितथं पितुर्नो वचः ।
इहैव यदि नो, परत्र,—बहुना हि किं ते पुरा
मदीयमतिचुम्बिनी भवति काव्यकादम्बिनी ॥ ११ ॥

## लोकबन्धुः

**पराशरं गोपालकृष्णमूर्तिः**

हसन्ति पद्मानि लसन्ति नद्यो नृत्यन्ति मेघा विहगा रणन्ति ।
प्राच्या दिशः पुत्रकजन्मवेलासन्तोषसक्ता स्मयते त्रिलोकी ॥ १ ॥
तदोदितं स्नापयति द्युगङ्गा तथाविधं क्रीडयति प्रवातः ।
रसायनं पाययतीह सन्ध्या स हृष्टपुष्टो जननीं जहाति ॥ २ ॥
यो वा नरान् वानरमात्रबुद्धीन् यो वा नरान् दिव्यविमानयानान् ।
यो वा नरांश्चन्द्रपथानुषक्तान् पश्यन् स्थितो नस्स उदेति साक्षी ॥ ३ ॥
रात्रिंदिवं यः सृजति स्वगत्या भूम्यादिकान् भ्रामयति स्वशक्त्या ।
विष्णोः पदं यः क्रमतेऽतिभक्त्या कविः कृतार्थः खलु तं स्तुवानः ॥ ४ ॥
अन्यत्र लोके प्रबला तमिस्रा कान्तिस्तदीया प्रविसारितापि ।
परत्र जीवन्ति नृमांसभक्षकास्सृष्टे महर्वेधिगणे[1]ऽपि कैश्चित् ॥ ५ ॥
पद्मोत्पले मुदं खेदं लभेते प्रभयैकया ।
विद्यते सहजो भेदस्साम्यवादे वृतेऽपि च ॥ ६ ॥
सर्वत्रापि समो दत्ते कान्तिं स्वीयां प्रभाकरः ।
गुरुर्विद्यां यथा वक्ति साफल्यं पात्रभेदतः ॥ ७ ॥
द्रष्टुं महर्न वा शक्ताः श्रोतुं चापि न वा रवान् ।
प्राप्तुं नापि पदं; तेऽद्य विक्रमेरन्नरा रविम् ॥ ८ ॥
कृतोद्यमान् वैदिकधर्महान्यै विलोक्य कांश्चिद् भरतस्य खण्डे ।
सक्रोध एवारुणतां बिभर्ति निर्वीर्यकोपस्त्वधरं निहन्ति ॥ ९ ॥
लोकोपकारं तनुते हि तावद् मृत्योर्मुखं यावदनुप्रविष्टः ।
स लोकबन्धुर्मतिदाक्ष्यदृष्टीः दिनेदिने वर्धयतीति मन्ये ॥ १० ॥
तत्सवितुः प्रसादेन गायत्रीमन्त्ररूपिणः ।
विश्वामित्रोऽपि संप्राप ब्रह्मत्वं विश्वमित्रताम् ॥ ११ ॥
प्राचीनकालेऽथ नवीनकाले तद्ध्यानयोगप्रवणात्मधीराः ।
नानाविधं ज्ञानविशेषमापुः प्रत्यक्षमर्को ननु दैवतं नः ॥ १२ ॥

---

[1] महर्वेधिगणः = Lunics.

# न वेद्मि तावत् किमहं प्रतीक्षे

रामकरणशर्मा

(१)

यथा यथाप्नोमि सुखं चिरायुर्बलं पदं स्वर्णमभिज्ञतां वा ।
तथा तथैधन्त इमाः पिपासाः न वेद्मि तावत् किमहं प्रतीक्षे ॥ १ ॥

(२)

करद्वयं चापि पदद्वयं च मनो महच्चैव निजं दधानः ।
इतस्ततो व्यर्थमहं चरामि चाञ्चल्यचञ्चूरितचित्तवृत्तिः ॥ २ ॥

'इदं कृतं तच्च पुनः करिष्ये जितस्त्वयं तं च पुनर्विजेष्ये' ।
नखैश्च दद्भिश्च शरैश्च वज्रैश्छलैश्च युध्ये परमाणुभिश्च ॥ ३ ॥

लिप्सुर्जगत् कृत्स्नमहं बलेन जगन्न मां वाञ्छति लेशतोऽपि ।
स्वकीयघातैर्विचरामि तुष्यन् न वेद्मि तावत् किमहं प्रतीक्षे ॥ ४ ॥

(३)

अयं रसालः सुतरां स्वसंस्थः स्वकीयपत्रैः परिवर्धमानः ।
सदा समाधिं भजते सगीतं न कुत्रचिद् धावति दूयते वा ॥ ५ ॥

स्वयं वसन्तस्तमुपैति काले स्वयं समीरः समुपास्त एनम् ।
स्वयं सितांशुः सितसूत्रजालैर्महाम्बरं तस्य विनिर्मिमीते ॥ ६ ॥

स्वयंव्रतोऽयं स्वयमेव लब्ध्वा फलान्यमूनि त्वरितं विसृज्य ।
सुखं शयानः परिशोभतेऽत्र न वेद्मि तावत् किमहं प्रतीक्षे ॥ ७ ॥

(४)

अयं पुनस्तालतरुः पुरस्तादुदारतामण्डित ऊर्ध्वगामी ।
मधु स्वकीयं विसृजन्नजस्रं महाध्वनिर्व्योमनि खेलतीह ॥ ८ ॥

स्वचामरच्छत्रनिषेव्यमाणः कदाप्यहो रागमयं न याति ।
दुष्कण्टदण्डैरतुदंश्च कश्चिन्महत्तया रक्षति नैजराज्यम् ॥ ९ ॥

जयत्ययं यद्यपि नो जिगीषा फलत्ययं यद्यपि नाभिलाषः ।
विवर्धते यद्यपि नोन्निनीषा महाधनो यद्यपि नैव लुण्ठा ॥ १० ॥

बृहत्तमो यद्यपि वक्रता नो महाबलो यद्यपि नाभिसन्धिः ।
सुसंहतो जीवति दीर्घमेष सुविस्तृता यद्यपि नैव शाखाः ॥ ११ ॥

पुत्रः पृथिव्या अयमेष शान्तः प्रेयानृजुः प्रांशुरहीनगात्रः ।
महाँस्तितिक्षुर्जयतीह मौनी न वेद्मि तावत् किमहं प्रतीक्षे ॥ १२ ॥

(५)

इयं सरिन्निर्मलवारिधाराप्रवाहिणी निर्मलरम्यतीरा ।
परःसहस्राणि निजार्जितानि प्रमोदकल्लोलकलानि धत्ते ॥ १३ ॥

न याचते कश्चिदपीयमन्यं झरोदिता सागरमात्रलक्ष्या ।
पुष्णाति सर्वान् शरणार्थिनोऽपि स्वयंकृतैर्नीरभरैर्नितान्तम् ॥ १४ ॥

स्वयंवहा नीरधिलीयमानाऽप्यहर्दिवं वृद्धिमतीयमास्ते ।
न कापि चिन्ता न च केऽपि शोकाः न वेद्मि तावत् किमहं प्रतीक्षे ॥ १५ ॥

# अर्जुनोर्वशीसंवादः

विधुभूषणभट्टाचार्यः

स्ववीर्यसन्तोषितभूतभावनः सहासनैर्गोत्रभिदातिमानितः ।
यथेष्टभोगोचितदिव्यसाधनः स्थितः प्रहृष्टस्त्रिदिवे धनञ्जयः ॥ १ ॥

अथैकदा चारुवपुःप्रसाधना मनःप्रमाथोचितसाधनाधना ।
स्वचित्तसम्भावितपार्थकामना गतोर्वशी जिष्णुगृहाग्रतो निशि ॥ २ ॥

अमन्दमन्दानिलनन्दिता मुहुः सुचारुराकेशकराभिरञ्जिता ।
सुसज्जितेव प्रणयाभिसारिका मनःसमुन्मादकरी तदा क्षपा ॥ ३ ॥

समुच्चनिःश्वासनिपातशब्दतः प्रसुप्तमाज्ञाय धनञ्जयं गृहे ।
अथोर्वशी तत् प्रतिबोधनेप्सया चकार सन्नद्धकपाटताडनम् ॥ ४ ॥

तदङ्गुलीक्षेपसमुत्थनादतस्तदा किरीटी सहसा व्यबुद्धयत ।
कुतूहलाक्रान्तमनाः सविस्मयं जगाद पार्थः "किमिदं समागतम्" ॥ ५ ॥

ततो विलज्जीकृतकोकिलस्वरा समुल्लसन्मन्मथचञ्चलान्तरा ।
सगद्गदं वाचमुवाच सा मुदा तवास्मि काचिच्छरणागताबला ॥ ६ ॥

निशम्य चैतद् रमणीति निश्चितः निशीथकालागमनातिविस्मितः ।
विपन्नरक्षाव्रततत्परोऽर्जुनो द्रुतं समुद्घाटितवान् गृहार्गलम् ॥ ७ ॥

ततः सितार्चिःकमनीयविग्रहां त्विषा सनाथीकृतधामगोपुराम् ।
सुमध्यमां बिम्बफलाधरश्रियं ददर्श तां कामवधूमिव स्थिताम् ॥ ८ ॥

अवेक्ष्य किञ्चित् क्षुभितामिवापगां प्रवृद्धनिःश्वाससमीरकम्पिताम् ।
निषादबाणव्यथितां यथा मृगीं नतभ्रुवं तां समुवाच फाल्गुनः ॥ ९ ॥

त्वमत्र भद्रे कथमागता कुतो महामनस्तापयुतेव लक्ष्यसे ।
मयि स्थिते दुष्टजनैकशासने न चास्ति दुर्वृत्तभयं कदापि ते ॥ १० ॥

कुतोऽसि वा त्वं भृशमुन्मना नु किं दुरात्मना वापि कृतावमानना ।
स्खलन्मनःशान्तिविधानकर्मणि क्षमो जनोऽयं निखिलं निगद्यताम् ॥ ११ ॥

इति ब्रुवत्पार्थवचःप्रणोदिता शशिप्रवृद्धोर्मिकसागरोपमा ।
मनोऽतिवेगप्रचलस्वरानना ततो बभाषे सुभगा वराङ्गना ॥ १२ ॥

अये महावीर समग्रवाञ्छित श्रुतप्रभाव प्रमदाजनप्रिय ।
विवृद्धसन्तापविनाशिना त्वया यदुक्तमस्मिंस्त्वयि युज्यते हि तत् ॥ १३ ॥

सुनाथ केनापि दुरन्तकर्मणा कृतातितापप्रशमोत्सुकान्तरा ।
त्वदाश्रया सिद्धमनोरथा यथा त्वयैव धीमन्निह तद्विधीयताम् ॥ १४ ॥

त्वदर्थिवाञ्छापरिपूरणव्रतं प्रसिद्धमेवास्ति तवेष्टकर्मणः ।
प्रपन्ननारीप्सितसाधनं सतां मनीषिणः श्रेष्ठतमं प्रचक्षते ॥ १५ ॥

अथैतदाकर्ण्य तयोदितं वचो विपन्नबन्धुर्मतिमान् सदग्रणीः ।
जितेन्द्रियः क्षत्रियपुङ्गवो गुणी स सव्यसाची निजगाद भारतीम् ॥ १६ ॥

महानिशा सम्प्रति भीतमानसे विविक्तगेहं शयनोचितं च मे ।
तथापि ते कार्यविशेषगौरवात् प्रवेशनं तत्र मया समर्थ्यते ॥ १७ ॥

अतोऽर्हसि त्वं भवनान्तरागता सुखोपविष्टा गदितुं वचः शुभे ।
दुरात्मसंपीडनखिन्नचेतसो न शोभते द्वारि विडम्बना तव ॥ १८ ॥

ततोऽर्जुनाह्वानसमुल्लसन्मनाः प्रविश्य नाकोचितदिव्यमन्दिरे ।
स्थिता सुखं पार्थनिवेदितासने मनो दधौ जिष्णुवचःसमुत्तरे ॥ १९ ॥

ततः सलज्जाभिनवा यथा वधूः मुहूर्तमात्रं मदिरायतेक्षणा ।
निरीक्ष्य तद्वक्त्रमथानतानना कृतस्मितोवाच सुधाक्षरं वचः ॥ २० ॥

किमत्र वाच्यं भवदन्तिके मया बुधो भवानार्तमनःप्रवेदकः ।
निरीक्ष्य सञ्जातविशेषविक्रियां पुरःस्थितां मामवगन्तुमर्हसि ॥ २१ ॥

तथाप्यधीरां हृदयप्रमाथिना महामहिम्ना मुखरीकृतामिमाम् ।
अयुक्तमप्युक्तवतीं मनोजवात् त्वदाश्रयां क्षन्तुमिहार्हसि प्रभो ॥ २२ ॥

समाधिसिद्धिव्यतिपातनिर्मितां सुरान्तरामोदविधानजीविताम् ।
समुल्लसच्छ्रीस्थिरयौवनान्वितामवेहि देवस्त्रियमुर्वशीं हि माम् ॥ २३ ॥

सगीतलास्याश्रितदेवसंसदः सुसज्जिताया मम चित्तवल्लकी ।
तव प्रसन्नाक्षिनिपातनान्मुहुः ससप्ततालं गुणिवर्य झङ्कृता ॥ २४ ॥

त्वयैव यस्तान इह प्रसाधितः समाप्तिरप्यस्य विधीयतां त्वया ।
स्वयं जलोच्छ्रायविवर्द्धिताम्भसां पुनर्ग्रहीताम्बुधिरेव नापरः ॥ २५ ॥

स्वनाभिगन्धैर्हरिणीवदुन्मना मनीषितोद्दामविलासचञ्चला ।
लतेव वृक्षं तटिनीव सागरं भवन्तमस्मि स्वयमागता सखे ॥ २६ ॥

दुरापवाञ्च्छातरलीकृतं भृशं मया पुरस्ते हृदयं प्रसारितम् ।
अथाङ्गनाचित्तविचारपण्डितो भवान् प्रमाणं सुविधेयसाधने ॥ २७ ॥

अथाप्सरश्चित्तगतामधीरतां विदन्नसौ किञ्चिदिवोन्मनाः क्षणम् ।
दृढस्वभावोचितधैर्यमावहन् जगाद तां शुद्धमना धनञ्जयः ॥ २८ ॥

असाधुवृत्तं समुपस्थितं शुभे न वेद्मि कस्मादिदमार्यगर्हितम् ।
सविस्मयं त्वाममरेषु पश्यतो न चास्ति मे चेतसि कापि कामना ॥ २९ ॥

मदीयपूर्वोद्भवसम्भवास्पदा त्वमेव भद्रे विदितं मयेति यत् ।
तदर्थमस्मिन्नवलोकिता भृशं विशुद्धभावेन समृद्धयौवना ॥ ३० ॥

सुनीतिसद्भावपरेण चेतसा निरीक्षमाणो भवतीं यशस्विनीम् ।
श्रुतप्रभावोदितशुद्धभावनो भवत्सपर्याविधयेऽहमुत्सुकः ॥ ३१ ॥

अपुण्यभावोचितभोगसाधने न मे स्पृहा स्वर्गगतस्य मानसी ।
तपोबलाच्छक्तियुतोऽपि केसरी न वाञ्छति प्राणिवधं तपोवने ॥ ३२ ॥

वरप्रभावेण सदासि मानिनी वरेण्यदेवेन्द्रमनःप्रमोदिनी ।
सुराभिषङ्गोचितदिव्यसम्पदस्तवेदृशी वृत्तिरहो नरे कथम् ॥ ३३ ॥

अयुक्तनिर्बन्धपरं सलालसं मनो नृणां धावति गर्हितेष्वपि ।
ततः पवित्राङ्गि विशुद्धितत्पराः सुरा नयेयुः पथि सङ्गते नरान् ॥ ३४ ॥

विशुद्धभावोच्चमनाः प्रशंसिते त्वमुत्तमेप्सा सुरलोकवासिनी ।
अलोभिनं मामशुभे निरुद्यमं प्रवर्त्तयेः कर्मणि कुत्सिते कथम् ॥ ३५ ॥

किमत्र वा वच्मि मनस्विवाञ्छिते क्षमो जनोऽयं न हिते मनीषिते ।
शुभे ततोऽस्मादसदीप्सितान्मनो निवर्त्यतां क्षेमविधिर्भवेच्च नौ ॥ ३६ ॥

अथार्जुनोक्तिश्रवणेन विक्लवा शुचान्विता निद्रितपद्मिनीव सा ।
समीरनिर्वापितदीपसन्निभं मलीमसं कृष्णरुगाननं दधौ ॥ ३७ ॥

क्षणं विमृश्याथ किरीटिनोऽन्तरं सकाममप्यद्भुतधर्मभावतः ।
मदीप्सिते कर्मणि संशयाकुलं किलेति निश्चित्य जगाद सा पुनः ॥ ३८ ॥

वृथैव चिन्ता तव धर्मवेदिनो मदीप्सितं धर्मविगर्हितं न हि ।
परानुरागप्रवणैकजीविता वराङ्गनाहं बहुवल्लभा सदा ॥ ३९ ॥

न चास्मि माता कुलकन्यका न वा न वा वधूर्भक्तिमती पतिव्रता ।
समुल्लसद्यौवनसिद्धिसाधिका स्थितोर्वशी नित्यमनन्तयौवना ॥ ४० ॥

यथा सरोजं भ्रमरैः क्रमागतै रसग्रहं यावदिहोपभुज्यते ।
तथैव फुल्लाम्बुजवृत्ति जीवितं वराङ्गनानां विदितं त्वया न किम् ॥ ४१ ॥

गतस्पृहा नाम मुनीन्द्रसंज्ञका महातपस्याफलदानतोऽपि माम् ।
कटाक्षमात्रोत्तरलीकृताखिलां सदैव वाञ्छन्ति सुदुर्लभां सुरैः ॥ ४२ ॥

सुधार्मिकाः संयमशुद्धमानसा नृपालवर्यास्तव पूर्ववंशजाः ।
स्वपुण्यकर्मार्जितनाकमागता मनोरमां मामभजन्त सादरम् ॥ ४३ ॥

न धर्मभीतिः सुतरां प्रबाधिका मदीप्सिते कर्मणि ते नरोत्तम ।
सुरालये स्वीकृतदिव्यसम्पदो न वा वितृष्णं विषयेषु ते मनः ॥ ४४ ॥

निशातिरम्या कुसुदेशरञ्जिता मनोज्ञसम्पत् तव निर्जनं गृहम् ।
पुरःस्थिता यौवनदृप्तविग्रहा त्वदुत्सुका ते किमहं न रोचये ॥ ४५ ॥

युवा बली मन्मथसुन्दरो भवान् यथेष्टभोगोचितशक्तिमण्डितः ।
गृहे स्वयं त्वद्गतचित्तया स्त्रिया प्रयाच्यमानो विमुखः कथं पुनः ॥ ४६ ॥

किमत्र पञ्चालसुतां मनःप्रियां विचिन्त्य कान्ताप्रिय दुर्मनायसे ।
अहो सुभद्राधरपानकौतुकिन् न चैकपत्नीगतमानसो भवान् ॥ ४७ ॥

मदाहृतां नाथ मनःप्रमाथिनीं मदप्रसूतिं मम यौवनोपमाम् ।
सुरेन्द्रकाम्यां मदिरां सुधाप्लुतां पिबन्मुदा दीप्तमना भवाधुना ॥ ४८ ॥

प्रमुग्धहृद्गीतविचित्रवन्दना त्रिलोककाम्या सुलभा न यद्यपि ।
तथापि ते वीर विशेषगौरवात् समागतास्मि स्वयमेव साम्प्रतम् ॥ ४९ ॥

मनःसमीक्षानिपुणः कुशाग्रधीः जनार्तिनाशव्रततत्परो गुणी ।
नते दयार्द्रीकृतनम्रमानसो न वेत्सि किं त्वं रमणीमनोव्यथाम् ॥ ५० ॥

अधीरता स्याद् रमणीकृतात्मनः स्वचेतसो वा विवृतौ मदन्तिके ।
प्रकाशितातो लघुतां नु कल्पसे भ्रमः किलासौ न हि याचको भवान् ॥ ५१ ॥

प्रियोत्सुकानन्दविशेषदायिनी परस्परं चित्तगतैव कामना ।
न सानुरागे प्रणयप्रकाशनं कदापि दोषाय सुखाय तत् पुनः ॥ ५२ ॥

स्वयं समागम्य मनःप्रकाशनं मनस्विनीनां परमः पराभवः ।
सखे नवप्रेममहामणीच्छया स चापि तारल्यवशान्मया वृतः ॥ ५३ ॥

अहो स्वचित्तोन्नतिगर्वित त्वया न केवलं मे तरलीकृतं मनः ।
त्वदन्तरामोदविधौ समुत्सुका सयत्नचेष्टाः कतिधा व्यकल्पयम् ॥ ५४ ॥

सितैर्नवैर्नन्दनकाननोद्भवैः सुगन्धगन्धीकृतनाकमण्डलैः ।
प्रफुल्लपद्मै रचितां स्रजं स्वयं त्वदर्हणार्थं दधती समागता ॥ ५५ ॥

तथा सुवेणीकृतचारुकुन्तला स्फुरन्महारत्नविशेषमण्डिता ।
प्रभासमृद्धारुणवस्त्रधारिणी त्वदर्थमस्मिन् रुचिमन्नुपस्थिता ॥ ५६ ॥
समीक्ष्य मां नाथ वशीकृतान्तरां प्रसाधिताङ्गीं त्वदधीनजीविताम् ।
प्रसन्नचित्तः सदयो भवाधुना त्वदाश्रयां नार्हसि मामुपेक्षितुम् ॥ ५७ ॥
दृढा प्रतिज्ञा विदिता त्वया कृता ममार्तिनाशाय भवान् प्रतिश्रुतः ।
तदर्थनाभङ्गकृतेन पाप्मना विडम्ब्यतां मा विमलं यशस्त्वया ॥ ५८ ॥
निशां शशाङ्को नलिनीं यथा रविस्तरुर्लतां विष्णुरिवाथवा रमाम् ।
गिरीशकन्यां गिरिशो यथा पुनस्तथा सनाथीकुरु मां त्वदर्थिनीम् ॥ ५९ ॥
इति प्रगल्भं बहुजल्पितं तया निशम्य पार्थो धृतिमान् जितेन्द्रियः ।
विनीतवाग् दुःखमयेन चेतसा जगाद तां युक्तिमनोरमां गिरम् ॥ ६० ॥
अहो बतेयं महती विडम्बना कृतं यतोऽस्थानगतं मनस्त्वया ।
अयुक्तकामेऽङ्कुरजन्मसिद्धये न कल्पते बीजमनुर्वरक्षितौ ॥ ६१ ॥
त्वदीप्सितं यद्यपि सुष्ठु ते मतं मया तदभ्यर्थयितुं न शक्यते ।
वरं हितञ्चापि मनोज्ञमौषधं न गृह्यते नाम कदापि नीरुजैः ॥ ६२ ॥
दृढं मनो यत्तव वन्दनोचितं तदन्यथाभावयुतं न मे पुनः ।
स्पृहा विरक्तिश्च निसर्गजा सदा न चित्तवृत्तिर्वचनं प्रतीक्षते ॥ ६३ ॥
ममानुरागार्जनकामया त्वया पितामहानां चरितं प्रकीर्त्तितम् ।
न साध्वि लोकान्तरवर्तिभिश्च तैः समानवृत्तिर्मम चापि युज्यते ॥ ६४ ॥
स्वधर्मरक्षार्थमहं समुत्सुको न गर्हितो लोभ इहाद्य मां पुनः ।
शुभाध्वनश्चालयितुं क्षमो भवेत् गिरिं समुन्मूलयितुं यथा करी ॥ ६५ ॥
न केवलं पञ्चशरोत्थकामना परस्परं चित्तनिबन्धकारणम् ।
पवित्रसद्भावमयास्तथापरे लसन्ति भावा विविधाः शुचिस्मिते ॥ ६६ ॥
कृता प्रतिज्ञा तव दुःखनाशने यदुक्तमेतन्नहि तच्च युज्यते ।
प्रतिश्रुतिः क्षत्रिययोग्यकर्मणे न पुष्पबाणं विषयीकरोत्यसौ ॥ ६७ ॥

सदासि मान्या जननीव वन्दिता मदीयवंशप्रभवे यशोवहे ।
अतोऽर्हसि स्नेहमयेन चक्षुषा सुतोपमं द्रष्टुमिमं जनं सदा ॥ ६८ ॥

असाधुभावात्तदितो विरम्यताममङ्गलाभ्यासरता न देवता ।
मनोभ्रमस्ते मम तथ्यभाषणात् तमो यथा नश्यतु भास्करोदये ॥ ६९ ॥

ममैव सौभाग्यवशात् समागतो भवत्सपर्यासमयः प्रतीक्षितः ।
गृहाण देवि! प्रणतिं पदाम्बुजे मयि प्रसन्ना भव हृष्टमानसा ॥ ७० ॥

प्रसीद मातः प्रणिपातवन्दिता ममासि कुन्तीव हितार्थतत्परा ।
व्यपेतचाञ्चल्यविशेषमानसा स्थिरा मयि स्नेहमयी भवाधुना ॥ ७१ ॥

ततोऽर्ज्जुनेनेत्थमुपेक्षिता सती विविच्य पार्थेन कृतां विमाननाम् ।
पराभवोद्दीपितरोषदारुणा समुज्ज्वलद्वह्निशिखेव सा बभौ ॥ ७२ ॥

अथाहतैषा फणिनीव दर्पिता जगाद तीक्ष्णप्रतिघातमानसा ।
अहो सुभद्राहरणे यशस्विनस्तवेतिवृत्तं विदितं तपस्विनः ॥ ७३ ॥

चित्राङ्गदावदनपङ्कजषट्पदस्त्वं नागात्मजाङ्गपरिरम्भणतृप्तचेताः ।
नारीसमागमपटोर्बहुकामिनस्ते किं नाम सन्मतिरियं सहसाद्य जाता ॥ ७४ ॥

मर्त्यास्वधन्यरमणीषु हि तृप्तिभाजो दिव्याङ्गनाविमुखता तव नाम युक्ता ।
नेच्छन्ति पङ्कसुखिनः शुचितां वराहाः श्वानोऽपि यज्ञहविषां ग्रहणे न योग्याः ॥७५॥

तद्यातु नाम विलयं मम वासनासौ नैतादृशाधमजनैरहमस्मि लभ्या ।
नान्धाय रोचत इहोज्ज्वलदीपमाला मुक्तावली च कपये कविताङ्गपुंसे ॥ ७६ ॥

वीराभिमानिहृदयोऽप्यबलाभयार्त्तः किन्त्वत्र गर्वितमनाः सुरराजमानात् ।
नाम्नोर्वशीमपि च मामवमन्यसे यत् किञ्चित् फलं समुचितं तदितो लभेथाः ॥७७॥

लज्जां विहाय पुरतो विवृताभिलाषा क्लीबोपमेन भवता विफलीकृताहम् ।
तस्माद् विनष्टपुरुषोचितवीर्यवृत्तेः क्लीबत्वमस्तु भवतो ननु वर्षमेकम् ॥ ७८ ॥

इत्यर्जुनं दृढमतिं स्थिरनेत्रपद्मं शप्त्वोर्वशी गतवती तरसोग्रयाना ।
ध्यायन्निवास्तमितवाक् स बभूव पार्थः चन्द्रो गतोऽस्तशिखरं स्तिमितांशुजालः ॥७९॥

# सुभाषितानि

श्या. न. पुणेकरः

(१)

व्यायामं स्वयमातिष्ठेत् स्वयमेवौषधं पिबेत् ।
स्वयमेवार्जयेद्विद्यां भृत्यस्तत्र न योज्यते ॥ १ ॥

(२)

कालस्तदासीत् प्रतिवत्सरान्तो यदा युवत्वं प्रति मामनैषीत् ।
ज्ञानाभिवृद्धेः द्रविणाभिवृद्धेः चिन्ता तदाभूत् सुखिताभिवृद्धेः ॥ २ ॥
उपागतोऽन्यः परिवर्तितास्यः कालोऽधुना येन दिनेषु यात्सु ।
क्रमैः क्रमैः प्राग्रसरी जरा मां निनीषति प्राङ्गणमन्तकस्य ॥ ३ ॥
अन्ने च पाने शयने श्रमे च न जातु वर्ते समय व्यतीत्य ।
तदेव सेवे रुचये यदस्ति ; भूतं प्रभूतं, सुकृशं भविष्यम् ॥ ४ ॥

(३)

हन्ता मामिति दुर्बलो न भजते देवं निराशाकुलः
यत्नो मामवतीति नास्ति बलिनो देवे महानादरः ।
देवः कस्य कृते ? विचारय सखे, मुग्धस्ततो मा स्म भूः
आत्मानं स्वजनं च पाहि सततं सर्वैः प्रयत्नैर्निजैः ॥ ५ ॥

(४)

चित्तस्य शुचिनः कामं बन्धनेऽपि स्वतन्त्रता ।
दुराशयस्य चित्तस्य मुक्तावपि नियन्त्रणाः ॥ ६ ॥

(५)

सर्वो नमयते भारो मनुजस्य शिरोधराम् ।
गर्वभारस्तु तामेव करोत्यत्यन्तमुन्नताम् ॥ ७ ॥

(६)

मधुरवचनं मन्दो हासः चहादिसमर्पणं
विपदि च लघुस्त्यागोऽपीत्थं वशीकृतमानसः ।
विशति सहसा मोहाविष्टः स्वकार्यवशाज्जनः
कृतकसुहृदा न्यस्तां युक्त्या स्वयं बत वञ्चनाम् ॥ ८ ॥

(७)

भवत्युद्यमहीनस्य निर्विनोदमनस्कता ।
आत्मनोऽपि न संज्ञा स्यादुद्यमव्यग्रचेतसः ॥ ९ ॥

## मम मञ्जुलः सुदेशः

श्यामनन्दनशास्त्री

दिनकरभास्वरकिरणविराजितहिमनगशेखरवेशः
शाश्वतयौवनविलसितसर्गः कलवैभवपरमेशः

गङ्गामाल्यसुवेशः!
मम मञ्जुलः सुदेशः!

तिमिराच्छन्ने विश्वस्मिन्नयमेवासीद् [illegible]वदीपः
शान्तिधर्मविज्ञानसुगायकदेशचये जगतीपः

भूसुरनगरविशेषः!
मम मञ्जुलः सुदेशः!

दुर्मदनिशिचरवंशविनाशकराघवविहितविलासः
गोकुलकुलमणिवरमाधवकृतगीतासुधाप्रकाशः

पुण्यमूर्तसन्देशः!
मम मञ्जुलः सुदेशः!

समरायासितसंसारे ह्ययमेव भवेन्नयजेता
शान्तिमहालक्ष्यं प्रति सर्वेषां लोकानां नेता

राष्ट्राणामखिलेशः!
मम मञ्जुलः सुदेशः!

सुधाघटं निजकमलकोमले करे निधायायाति
मानवतायाः शुष्के कण्ठे दातुं द्रुतं प्रयाति

हरशिवनयनोन्मेषः!
मम मञ्जुलः सुदेशः!

# श्लिष्टप्रकीर्णकम्

वे. राघवः

स्वात्मैकध्यानसक्तानां स्वीयान्यमतिमुज्झताम् ।
निर्गुणे चरतां मार्गे क्व निषेधः क्व वा विधिः ॥

★

सुवृत्ता गौरवादुच्चैःशिरसस्साधवोऽपि यत् ।
मर्दनीयाः स्तना यद्वत् अहो दुष्टमिदं जगत् ॥

★

वारुणीसेवनादेवमादित्यो भ्रष्टतां गतः ।
भर्त्सितो द्विजराजेन करोत्यम्भोधिमज्जनम् ॥

★

गुणे दत्तेऽपि ये भूयो वक्रतामेव बिभ्रति ।
चापाः पापाश्च ते सृष्टाः मर्मभेदाय केवलम् ॥

★

दीर्घसूत्रिणि सच्छिद्रे नाले कोशो महान् यदि ।
अलमुद्योगसंक्लेशैः स्वैरिणी रचना विधेः ॥

★

प्राप्य विष्णुपदप्रान्तं प्रत्यक्प्रवणितात्मना ।
एष हंसोऽधुना शान्तमूर्तिर्निर्वाणमृच्छति ॥

★

जायतेऽस्य बलं रात्रौ नररक्तं पिबत्यसौ ।
हतोऽसौ शतधा जातो नूनं रक्षो हि मत्कुणः ॥

★

स्नेहार्पणे तु मलिनः प्रसन्नो रजसाहतः ।
करोत्यनुकृतिं नस्स दुर्जनो दर्पणो यथा ॥

# समागतो वसन्तः

गोस्वामी हरिकृष्णशास्त्री

विकसति कलिकाद्य पाटलायाः सरति समीरण एष गन्धवाहः।
विहरति निभृतं द्विरेफमाला प्रतिकुसुमं नु समागतो वसन्तः ॥

किं नु खलु वसन्तः समागतः? कः कथयति 'समागतो वसन्तः' इति निगदन्ती सरोजिनी सहसैव च किलोत्थिताभूत्। सुचिरनिवासिता सा तदीया धृतिरप्युच्चचाट। यथाकथञ्चित् समाराधिता हृदयनिवासिनी शान्तिरपि धृतिमनुससार। सम्प्रति सापि चिरमेकत्र स्थातुं परवशाभूत्। यासां बलेन समाश्वासनेन च अधुनावधि धैर्यं विधृत्य स्थिताभूत्, तास्तु स्वयमेव एकाकिनीं तां विहाय सुदूरं पलायिताः। यासां वा यन्त्रणया साहाय्येन च मौनं मानं वा आरचय्य अविचलमानसा आसीत्, ता अपि सर्वा एनां समुत्सृज्य विनिर्गताः। तासां च मानसानि स्वयमेवोद्वेल्लितान्यभूवन्।

एकाकिनीयं परित्यक्तसकलपरिजना सरोजिन्यपि स्वकीयं सहजं मौनं परित्यज्य स्वयमपि प्रियतमसन्देशवाहिना परमानन्दमहाह्रदावगाहिना गभीरेण मन्दसमीरेण सह समालापं विदधती तदीयसुखस्पर्शेन आन्दोलितान्तस्तला तरलतया नवनर्तनमिव प्रकटयन्ती विलसितुमुत्सुकाभूत्। सपदि समागतेन प्रियतमसुहृदा समीरेण निवेदिताखिलदयितोदन्ता विकसितकोरकदन्ता दुरन्तां चिन्तामपहाय सहसैव सा विजहास। अधुनावधि मौनं मानं च समाकलय्य विमनस्कां तामवलोक्य दूर एव विचरन् भयचकितो मधुकरवरः—

अद्यत्वेऽपि प्रणयसुभगा मानमासाद्य मौनं
धृत्वा सेयं किमिति विमनस्कायमाना स्थिताभूत्।
यातः सोऽयं शिशिरसमयो यस्य जाड्येन खिन्ना
म्लानासीत् तां सुरभिविभवोल्लासतो हासयामि ॥

इत्यालोच्य प्रणयभरितः स्नेहसञ्चारभारं
निर्वोढुं मेऽधिकपरवशः सेवते स्मान्तिके ताम् ।
मन्दं मन्दं श्रुतिमुपगतः कालसम्मोहनार्थं
गुञ्जन् मन्त्रं कमपि मधुपो लब्धवान् तत्फलं सत् ॥

सम्प्रति प्रसादसुमुखीं विकसिताननां तामालोक्य प्रणयभरितः सरभसमुपाजगाम । तत्कर्णान्तिकं मधुरं गुञ्जन् कमपि सम्मोहनमन्त्रमिव तत्कान्तसंमोहनाय शिक्षयन्निव समीपमुपचचार । तस्याश्च चिरप्रसुप्तानामनुपमभावानामभिनवसर्जनमिव कलयामास । सरोजिनी च तदीयं निजकोमलकेसरपरागरागरञ्जितं श्मश्रुलं कपोलफलकं निजमृदुपल्लवकरेण परामृशन्ती प्रणयकुपितेव "अपसर चपल दूरमपसर; किमेवं चपलयसि मुग्धानामपि मनांसि? कथमिव औद्धत्यमाचर्यते? अलमलमतिचापल्येन" इति कथयन्ती विकसितवदना विजहास । इत्थमीषद्विकसितवदनायाः स्मेरास्यायाः सरसमुखामोदमुपाघ्राय लब्धमनोरथोऽपि मधुपो निभृतमात्मानं कृतकृत्यमिव मन्यते स्म ।

तदर्थमेतावदेव पर्याप्तमासीत् । इत्थ सप्रणय उपालम्भस्तु तस्मै चिरतृषितचातकाय सुधावृष्टिरिव समभूत् । सरोजिन्या एतावत् कथनं तु तस्मिन् अभिनवविद्युत्सञ्चारमिव प्रणयिजीवनसञ्चारणमकरोत् । स च प्रणयवारुणीं निपीय उन्मत्त इव क्वचित् गुञ्जन् क्वचित् विघूर्णयन् क्वचित् प्रस्खलन् कदाचित् प्रलपन् तत्रैव परिक्रामति स्म । नितान्तकामुक इव न स क्षणमपि सरोजिनीं विहातुं कामयते स्म । नासीत् तदर्थं सरोजिनीं विहाय कोऽपि मनोविनोदस्य हेतुः । प्रणयिजनकृते तु प्रणयिनीसमं ब्रह्मैव कथंकथमपि निःसीमानन्दतुलां निधत्ते । साम्प्रतं च सरोजिन्येव तस्य प्राणभूता, स च सरोजिन्यास्तथा । किमतः परं परतरमवशिष्टमिति मत्वा प्रावर्तत तयोः परस्परं प्रणयसँलापः ।

यदा हि सरोजिनी किञ्चिदपि स्ववदनं विकासयति स्म, मधुपोऽपि सहसैव याचक इव मधुलोलुपः कलक्वणितगर्भेण कण्ठेन विघूर्णितेन नयनेन च

किमप्यावेदयितुं नृत्यन् पारावत इव प्रणयभिक्षां याचते स्म। तदर्थमासीच्च सा प्रणयभिक्षा केवलं मधु—

यदासीत् तस्य सर्वस्वं कामिनां चिरमीप्सितम्।
प्रणयोत्कर्षसञ्जातं ह्युभयो रतिवर्धनम्॥

यत्कृते एव स सर्वान् स्वपरजनान् लोकलज्जां वा विहाय प्रतिसवनं तत्सान्निध्यमेव सन्ध्यावन्दनमिव समुपसेवते स्म। सापि तत्प्रणयिनी सरोजिनी स्वशारीरिकं कर्मापि विस्मृत्य स्वकामुकाय निजस्नेहसुवर्णनिर्मितया कुञ्चिकया हृदयकोशस्य दृढमपि रजतमयं तालकं समुद्घाट्य समपेक्षितं तत्सर्वस्वं मधु सद्यो निष्कास्य प्रयच्छति स्म। निभृतं च तत् निपीय सोऽपि सफलमनोरथमात्मानमापेदे।

यदा हि सरोजिनी स्वप्रणयिनं निजाधरसुधासवेन मधुदानेन समुन्मत्तं सुकृतफलभाजं कलयति स्म, तदानीमेव सैव सुपरिचिता पदावली नैकशः श्रुतिपथमुपगता पुनरपि श्रवणविषयतामगात्। इदानीं तु सा स्वमनोरथानां सुसज्जितमुद्यानमालोकते स्म। यदा हि स्वचक्षूंष्युन्मील्य समन्ताद्विलोकयामास तदानीं सर्वत्रैव भगवतो रतिनायकस्य कुसुमसायकस्य सुकुमारकुमारस्नेही तन्मन्त्री मलयमारुतः सकलसाधनसम्पादनदत्तक्षणः प्रतिक्षणं विजृम्भमाण इव प्रतिभाति स्म। तत्प्रबन्धे च सकलं जगत् सुसज्जितमिव समभूत्। सकलाः पादपाः समस्ता व्रतितितयः सर्वाणि च वनोपवनानि नवनवमृदुलदलैः सुमनःसम्पत्तिभिश्च समलङ्कृतानीव समभवन्—

मन्दं मन्दं प्रसरणपटुः शीतलो गन्धवाहः
पुष्पालीनां प्रियसहचरः स्वैरलीलालसश्रीः।
स्पर्शोल्लासात् कुसुमकलिकां हासयंश्चुम्बितास्यो
मार्गायासात् पथिकनिवहं मोचयन् वाति वायुः॥

ततश्च सलिलकणानादाय मन्दं मन्दं प्रसरन् समीरणः समन्तादवनितलं सुरभिमयं चकार। अभिनवारुणकोमलपल्लवैः परिवृतांशुका विविधकुसुमराजिपरिमण्डिताङ्गलतिका वनराजिः प्रियतमसङ्गमसमुत्कण्ठिता चिरविलासोन्मुखी सुमुखी वासकसज्जेव शोभते स्म। निजमनोरथनायकस्य कुसुमसायकसहायकस्य स्वागतार्थमेव सुसज्जितभुवनतला प्रकृतिकामिनी सद्य एव परमरमणीयां रङ्गस्थलीं रचयामास।

वीणावादी मधुपनिकरः कोकिलो गायकेश-
स्तालं धत्ते शुचिचलद्दलः पल्लवैर्वातलोलैः।
रागोत्साहाः सकलविहगाः कुञ्जरङ्गस्थलीषु
प्रोद्यल्लास्यांशुकमृदुदला वल्लरी पुष्पभूषा॥

मधुकरनिकरो वीणावादी, कोकिलकलापस्तदानीं मधुरालापी, वनवल्लर्यश्च नर्तक्यो नियुक्ताः समभूवन्। सद्य एवाभिनवोऽभिनयः प्रारब्धः। यदा च मधुपवरः स्वकीयं जनमनोमोहकं सङ्गीतं स्वगुञ्जारवेण समारब्धवान्। सरोजिनी सपद्येव हृदयावर्जकं तदीयं कलगुञ्जनं श्रुत्वा परवशाभवत्। सा त्वेवं विमोहिताभूत् यथा स्वात्मानं तादृशीमवस्थां गतमपि न सस्मार। तदन्तराल एव रसालमञ्जरी कलकण्ठकुलविक्रीडितं सकलकाकलीसनाथमालोक्य सहसैव प्रोवाच—'अहो प्रणयसहचर, पुनरप्येकवारं निदर्शय निजवैभवम्' इति।

पुंस्कोकिलोऽपि रसालमञ्जरीमुखान्निष्यन्दितां मधुरवचनमधुझरीं प्रणयपरागरागसम्भृतां स्वकर्णपुटैः सरसं निपीय मदमत्त इव भृशं ननर्त। मुग्धश्च स माकन्दे शाखातः शाखामुत्प्लुत्य निजानन्दस्य चरमं सीमानमवाप। तस्य च मनोरथकल्पद्रुमोऽपि पल्लवितः पुष्पितः सहसैव फलितोऽप्यभूत्। अधुना कोकिलः अन्धो नेत्रयुगललाभमिव पुरुषार्थसिद्धिमवाप्तवान्। स च स्वकाकलीं प्रति समाकृष्टहृदयां रसालमञ्जरीमालोक्य द्विगुणतरेणोत्साहेनोच्चैः सकलजनकर्णपुटेषु श्रवणामृतं पूरयन्निव तमेव सरसमधुरं रागं गायति स्म।

(वसन्तरागेण गीयते)

म . . . ञ्जु . . . ल . . . व . . . स . . . न्त ।

प्रियवरवसन्त
आयाहि रे वसन्त
सुललितवसन्त
मञ्जुलवसन्त ।

१. मधुमयमिलनकान्त
तृप्यच्छ्रुतियुगस्वान्त
आनन्दितनयनप्रान्त
विरहिणीकुलदुरन्त
मञ्जुलवसन्त ।

२. सुरभितरसालमाल
चञ्चिततमालताल
कोकिलकलापचाप
संयोगिनि विपदन्त
सुरभितवसन्त ।

३. किंशुककदम्बकुञ्ज
गुञ्जितमधुपपुञ्ज
लोचनललामलोक
मानहरवसन्त
प्रियवरवसन्त

४. आलि! घनश्यामसङ्ग-
मासाद्य प्रणयरङ्ग-
मङ्गमङ्गमभिसरण!
सुरभीकृतदिगन्त ।

आयाहि रे वसन्त
मञ्जुलवसन्त ।

परिसमापिते च सङ्गीते समन्ततो विटपिविटपेषु विराजमानाः विहगवराः सहसैव 'धन्य धन्ये'ति प्रशंसाशंसनानि कलकूजितानि कलयन्ति स्म। अभिनवदलान्यपि शाखासु लास्यान्यारभन्त। कुसुमकोरका अपि विकासमुपयान्ति स्म। रागानुरञ्जितो रसिकसमाजोऽपि विविधविलासोल्लासभाजां वरवर्णिनीनां विभ्रमैः समावर्जितहृदयः तदानीन्तन्या रमणीयताया

दिव्यदर्शनेन मुग्ध इवासीत्। सुभगसरांस्यपि प्रसन्नसलिलान्यभूवन्। तदा नद्यश्च मलयानिलजनितसुखस्पर्शेनान्दोलितहृदया समुद्भूतसन्तततरङ्गावलिव्याजेन हर्षोत्कर्षं दर्शयन्ति स्म।

प्रकृतिनट्याः परिवर्तनशीलजवनिकापसरणसमकालमेव तद्वदनप्रावरण-पटोऽपि सहसापसरति स्म। सकलस्यैव मानवधनस्य संरक्षणोत्तरदायित्वमधुना-वधि तु हेमन्तशिशिरशिरस्येव निक्षिप्तमासीत्। किन्त्वद्य तावपि प्रकृतिदेव्याः समक्षमेव स्वकीयं कार्यभरं स्वस्वामिनो महाराजस्य सकलर्तुनायकस्य पादयोः समर्प्य चिन्ताविमुक्तावास्ताम्। प्रकृतिरपि यथादेशं भगवतः परब्रह्मणो विलासस्थलीं समस्तां वसुमतीं वासन्तिकीभिश्च्छटाभिः सकलां व्रततिततिं च कोमलप्रवालपटलैः पुष्पपुञ्जैश्च समलङ्कृत्य वस्तुतो वसुमतीं वसुमतीमेव विदधे। इयमपि शेषं कार्यजातं भगवतः कुसुमायुधस्य मन्त्रित्वमाचरतस्तत्सुकुमारकुमारस्य 'ऋतुराजस्य' उपरि विन्यस्य निश्चिन्ता बभूवेव। साम्प्रतं सकलजीवनिकायस्य सर्वस्वभूतां विनोदसामग्रीं सर्वस्वं वा सौरभं मधु वसन्ताधीनमेवासीत्।

यदा हि हेमन्तशिशिरादिनां शासनमासीत् तदानीं सकलं प्रबन्धसूत्रं सकला च लोकशोभाव्यवस्थापि तदधीनैवासीत्। किन्त्वद्य तज्जाड्यभरखिन्न-विग्रहः सकललोकः सविग्रहं सौख्यशासनं सुरभेः समवाप्य सकलां पुरातनीं परिपाटीं परित्यज्य यथादेशं नवीनामेव तामङ्गीकुरुते स्म। किं बहुना जडा वनस्पतयोऽपि नवनवान्येवारुणमृदुलदलवसनानि धारयित्वा विविधचित्र-विचित्रैः सुरभिसुमनोमण्डनैः स्वात्मानं मण्डयित्वा च चिरात् समागतस्य निज-वल्लभस्य स्वागताय सुसज्जिता बद्धपरिकरा राजते स्म। तदानीन्तनसञ्चालकैः शिशिरादिभिः जाड्यजडीकृतसकलावयवाः परमवृद्धा अपि स्वृद्धास्तरवो नवयुवका इव समुपलब्धनवशोभासम्भारभासुराः स्निग्धनवदलकुसुमसज्जिताः समभूवन्।

तरुवरलवलीषु विद्यमाना शिशिरसुशासकपक्षपातपूर्णा।
प्रियतमगमनान्वितान्तजीर्णा विलुठति भूमिगताद्य पल्लवालिः॥

याश्च व्रततितरुततिषु राजमाना हेमन्तशिशिरपक्षपातिन्यः पल्लवमालाः आसन् ताः सर्वास्तदीयप्रियतमागमोदन्तजातमाकर्ण्य नितान्तखेदचिन्तापरितापतापजीर्णाः सहसैव निजदयितगमनसमकालमेव सती योषिदिव स्वस्थानं परित्यज्य तस्यैव पदवीमनुवर्तमाना विरहव्यथामसहमानाः सद्यो मूर्च्छिता भूमिशायिन्यः सुदीर्घनिद्रामवापुः ।

शिशिरं स्वकीयकान्तं यान्तं दृष्ट्वा विशीर्णहृदयैव ।
योषित् सतीव दीर्घं पल्लवराजिः क्षितौ शेते ॥

हेमन्तशिशिरावपि समस्तां वानस्पतिकीं श्रियमपहृत्य लुण्टाकशासक इवापहृतश्रीकं भुवनं विहाय समपहृतवस्त्राभरणां लवलीललनां विधाय निर्गतौ । तथा हि लुण्टाकशासकविलुण्ठनपरिक्लिष्टां शिष्टामवशिष्टां प्रकृतिमिव समाश्वासको नवशासकः स्वस्वरूपानुरूपप्रसाधनैः प्रणयमधुरैः वचनविन्यासैः सन्तोष्य पुनरपि तां सुभगवसनालङ्करणैः सम्मानयति, तथैवाऽयं महाराजो ह्यशेषर्तुराजोऽपि निखिलवनोपवनखेटखर्वटवाटीषु विराजमानां तरुराजिं लवङ्गादिलवलीपटलीमभिनवारुणमृदुलपल्लवांशुकपटलैः सम्मान्य नैकविधकुसुमकोरकहारैः समलङ्कृत्य किञ्जल्कैः परागरागरञ्जितां स्वालानं प्रत्यनुरञ्जितां च तां विधाय सर्वत्र स्वसाम्राज्यवैभवं विस्तारयामास ।

स्वप्रियतमप्रयुक्तप्रणयोपहारमिव मन्वानाः प्रमोदभरतुन्दिला अपि सम्पादिताभिनवयौवनोद्गाराः पादपाः रुचिरचीनांशुकैरिव परिवृतां नवारुणपल्लवपटलैः सम्पन्नां सहसोद्भूतकुसुमगुच्छकैः परिमण्डितां सञ्जातपुलकोत्कराञ्चितां सुमनःसमुल्लासविकसिताननां समासादितनवानुरागपरागां वासन्ती-मधुमाधवी-लवङ्गिकाप्रभृति लतिकाततिं प्रेमातिशयनिर्भरं समालिङ्ग्य दोहदमङ्गलं समारब्धुं स्वपरिकरनिकरमाकारयति स्म—

हास्योल्लासविलासिनोऽद्य विहगाः पुष्पन्धयाः सत्वरं
ह्यागच्छन्तु, सुमेषु भाति मधु सद्वासन्तिकं सौरभम्

माकन्दे मधुमण्डिता मधुकरीवोत्कण्ठिता मञ्जरी
नृत्यन्ती सरसीषु सम्भृतरसा मन्दस्मिता पद्मिनी ॥

सुरभिसुषमां समन्तात् प्रसृतामवलोक्य मधुपानलोलुपो मधुकरनिकरोऽपि स्वप्रियतमां सम्प्रति विकस्वरां भास्वरां सरोजिनीमन्वेष्टुकामः कुञ्जं कुञ्जं मधुरं गुञ्जन् सञ्चरति स्म। सरससहकारसमूहे च मोदमानां मञ्जुलमञ्जरीं निज-परागपूरपूरितदिगन्तरालां रसालयमालोक्य सुभगरसलम्पटः परभृतपटलोऽपि निज-काकलीप्रसरपरिसारितसुरभिवैभवः स्ववाङ्माधुरीसमाकृष्टसकलहृदयः सहृदयेषु सुरभिसन्देशं निवेदयन्निव प्रतिवनं प्रतिपादपं शाखातः शाखामुत्प्लुत्य सामोदं प्रमोदमातनुते स्म रसिकानाम्। गायति पुनः पुनश्च सरसमधुरं तदेव सङ्गीतम्—

"मञ्जुलवसन्त, सुरभितवसन्त, आयाहि रे वसन्त, प्रियवरवसन्त" इति।

श्रुत्वैव मन्दमलयमारुतान्दोलिता सरोजिनी सहसैव हर्षोत्फुल्लहृदया प्रहसितवदनाभूत्। स्वयमप्यमन्दमकरन्दं निष्यन्दमाना सानन्दमुच्चैराजुहाव वासन्तिकमहोत्सवं सम्मानयितुं स्वरसिकान्। समुद्घोषयति स्म च "समागतो वसन्त" इति।

## सुदायो नाम कथानकम्

रामकिशोरमिश्रः

(१)

"विसर, विसर माम्" इति कथयन्त्याः प्रेमायाः करकमलं "कथमेवं वदसि" इत्युत्तरं ददानो न्यपीडयत्स्वकीयेन कर्कशकरेण किशोरः। "किन्न जानासि यदहं निर्धनविप्रकुले संभूता बाला, परं भवतो धनाढ्यवंशे जन्म, तत्सुदायप्रथाप्राबल्यात्कथं स्वीकरिष्येते मां तव पितरौ स्ववधूत्वरूपेण? पुनश्च मयि प्रेमपथं त्वं निरन्तरं विस्तारयसि" इति कथितवत्या तया किशोरस्य ग्रीवायां निपातिते स्वकीये बाहुलते।

किशोरेण तस्या मुखचुम्बनं गृहीत्वा तदीययोश्च नयनयोः स्वदृष्टिं निपात्य समन्दस्मितं कथितम्—"कियती प्रकृतिस्ते सुकोमला! आकृतिश्च मनोहरा, का लावण्यमयी सौन्दर्यमाला! परमेतत्सर्वं दृष्ट्वाऽऽश्चर्यं मयि जायते यत्त्वया शिक्षितयापि सत्या कथमित्थं कथ्यते?" इति।

"शिक्षितानामेवैवं विचारा भवन्ति, न तु तेषां ये शिक्षारहस्यं न जानन्ति, तथा च स्वशिक्षितस्य पुत्रस्य परिणयकाले धनाधिक्यं याचन्ति" इति जगाद प्रेमा। "परमावयोस्तु यौतुकप्रथां दूरीकर्तुमेव जन्म" इति किशोरावस्थावस्थितेन तेन तस्याः प्रेम द्विगुणीकर्तुं स्वीयेन विशालेन वक्षसा किञ्चिदुन्नत-कुचाग्रोपरि चूचुकांशुकपरिभूषितं तदीयमुरः "आवां स्वयोरन्यतरं विना जीवितुं नार्हावः; आवयोस्तु संयोगः स्वयमेव प्रकृत्यैव कल्पितः; आस्माकीने शरीरे एव पृथग्भूते, परं तयोर्हृदयं त्वेकमेव; न कापीदृशी शक्तिर्यया तत्पार्थक्यं यास्यति" इति कथयता गाढं समालिङ्गितम्।

"परं किशोर! आवयोः प्रेम समाजो न सोढा, न चापि स सुखीभवितुं समयं दास्यति" इति प्रेमयोक्तं निशम्य "जानामि प्रेमे! समाजोऽयमास्माकीने पथि समवरोधको भविष्यति किन्तु नासावस्मदीयमार्गात्पराङ्मुखीकर्तुमावां शक्ष्यति। त्वय्यहं सर्वं त्यक्ष्यामि" इति स्ववचनं तस्याः स्वीकृत्यात्म-

केन हुँकारेण सह सम्मेल्य ससाहसं, सवीर्यं, सप्रेमस्थिरीकारिसामर्थ्यः किशोरो निजगाद।

अद्य तस्य वाण्यां प्रेमस्थिरीकारि तदोजो विद्यते, यत्समाजं तद्बन्धनान्युल्लंघयद् वदिष्यति यदिदं प्रेम किमस्ति तद् वस्तु? मनसा किमपि चिन्तयन् पारस्परिकनमस्कारविनिमयं कुर्वन् प्रियतमायाश्च सितच्छविं हृदि धारयन् सवेगं स कक्षान्निःसृत्य गतः। प्रेमा च तं निर्निमेषया दृष्ट्या पश्यन्ती तत्रैव स्थितवती।

अस्ति प्रभातवेला। वाति मन्दशीतलसुगन्धो वायुः। समुदेति सूर्यः। कूजन्ति नानाविधा विहगाः। तेषामेव स्वभाषायां, तस्य परमपितुः परमात्मनो गतिचक्रमवलोकयतां, 'स्वतंत्रतायामेवास्ति जीवनानन्दः' इति समुद्घोषयतां, सम्बोध्य च संसारिणः, "श्रूयतां श्रूयतां भो लोकानुसारिणः! दत्तकर्णैरेव सद्भिः श्रूयतां भोः! स्थानमिदं न भवतां निवासयोग्यम्। तेषामेवात्र स्थितिर्भविष्यति, ये समाजयागे स्वात्माहुतिं कर्तुं शक्नुवन्ति। परं युष्माकमात्मनः समाजभारं सहमाना इयन्तो भ्रष्टाः संजाताः, ये युष्मान् समाजबन्धनान्युल्लंघ्याग्रे गन्तुमवसरं न ददति। यः समाजानुसारेण परिवर्तते, तस्मिन् किं मनुष्यस्य वास्तविकी शक्तिर्वर्तते? नैव, नैव। ये समाजाय स्वजीवितार्पणं कर्तुमसमर्थाः सर्वथैव, नाधिकारस्तेषां मध्येसमाजमावासस्य। तैस्तु स्वजीवनकालो विन्ध्याचलकान्तारेषु यापनीयः, येन वनजन्तव एव तद्जीवनानुदानं लभेरन्। अत्र तु जीवनानन्दं स एव प्राप्नोति, यः स्वनिश्चये स्थिरीकृतबुद्धिः समाजसाम्मुख्यमायाति। तस्यैव च स्वागतार्थं भगवान् भास्करोऽपि स्वकर्तव्यपथं प्रयाति" इति प्राकृतिकसंगीतसंगिनां विहंगमानां 'चैं चैं' इति मधुरकलरवेण भग्ना किशोरनिद्रा।

'वत्स! भगवानयं सूर्यः समुदितः' इति जनन्या कथितोऽपि स्वप्रेमिकां संस्मरंश्चित्ताङ्कितया च तया सह संजाते मधुरप्रेमालापे निमग्नो भवन्, शयने पार्श्वपरिवर्तनमादाय 'किशोर! ओ किशोर!! आगत एष आगतः' इत्येवंविधेन स्वाप्निकव्यतिकरेण स प्रतिदिनमुत्थितो भवति। सम्प्रति स विंशति-

वर्षीयः शास्त्रिपरीक्षाया द्वितीयवर्षेऽधीते। कक्षायाञ्च दक्षतमः, प्रियगुरुः गुरुप्रियः, सत्कृतच्छात्रः छात्रसत्कृतः, मित्रप्रियः प्रियमित्रश्च। तस्य विवाहस्य वार्तापि इतस्ततो बहुविधा भवति। परमिदं न केऽपि जानन्ति यत्तस्य प्रेमैकस्यां बालायां साकाररूपेण परिणतमिति। तत्तु तावेव जानीतः, यौ तस्मिन् प्रेम-पथे पुरःसरौ भूतौ। अस्मात्तेन विवाहविषये स्वसम्बन्धी वार्तालापो यदा कर्ण-गोचरीक्रियते तदा तन्मनसि विचारोऽयं स्थिरीभवति यत्स स्वपितरौ विवाह-विषये वार्तानिषेधार्थं स्वकीयं प्रेम निगदेदिति। परं लज्जावशात्सम्प्रति कार्ये-ऽस्मिन् साफल्यं न सोऽवाप्नोति। किशोरस्य पितुर्विचार इत्थमस्ति यत् तद्विवाहः तस्मिन् 'शास्त्री'त्युपाधिधारिणि संजाते करिष्यते, यस्माद् यौतुकादि द्रव्यमपि प्रचुरं प्राप्येत।

परं किशोरस्य रुचिः सम्प्रति नातिदूरे परीक्षाकालेऽपि पठने लेखने च न जायते। निरन्तरं तेन प्रेमायाः प्रेमपाठ एव पठ्यते स्मर्यते च। तस्मै च सैव विशेषेणापि रोचते। प्रेमाया मधुराकृतिस्तस्यैका क्रीडेव जाता। यानि पुस्तकानि प्राणेभ्योऽपि प्रियतराणि स मन्यन्ते, तानि तस्याधुना घृणया प्रपीड्यन्ते। प्रेमायाः सान्निध्याभावे तेन जगच्छून्यमिव ज्ञायते। निरन्तरं तेन प्रेमागृहं गमनीयं न भवेत्, तथैव तदीये भवने स्थिरतया निवासः क्रियेत— इति विचाराः तस्मिन् सततमेव गतागतं कुर्वन्ति। पिताऽपि तत्प्रेममार्गे धन-लोभेन बाधकोऽपि भवितुमर्हति। अस्मात्तस्य धनेऽपि घृणा प्रादुर्भूता। "मम विवाहस्तु प्रेमया सह प्रकृत्यैव कारितः। आवामन्योन्यं विना जीवितुं नार्हावः। न कापीदृशी शक्तिः, याऽऽवां पृथक् कर्तुं समर्था भवेत्" इति विचारेषु निमग्नस्य तस्य एकैकमपि दिनं सदिवसकरमस्तंगतमेवासीत्।

(३)

"प्रेमे! ऐ प्रेमे! किशोरः समायातः किशोरः" इति श्रुत्वा प्रेमा द्रुतगत्याऽऽगता मन्दगत्या च तेन साकं तदीयं गृहारामं प्रविश्य शिलातलञ्चैक-

मलङ्कृत्य प्रेमालापे निमग्ना जाता। क्षणं विरम्य किशोरेणोक्तम्—"प्रेमे! कामद्य कथां श्रावयिष्यसि?" इति। "किमद्याहम्? नहि नहि कथामद्य श्रावयितुं ते कालः" इति सा कथितवती। "न कापि कथा मे स्मृतिपथमायाति, तत्किमहं श्रावयाणि? अद्य कामपि त्वमेव श्रावय"—इति कथितवति किशोरे "नाहं श्रावयिष्यामि, नाहं श्रावयिष्यामि" इत्येव कथितवती। परं वारंवारं स्वप्रियतमस्याग्रहे सति 'स्मरामि तावत्' इति कथयन्ती किमपि श्रावयितुं सोद्यताभवत्।

**प्रेमा**—आमेवम्! किशोर! अन्या तु न कापि रोचिका कथा स्मृतिपथमायाति, परं यो वार्तालापो मदीयेन जनकेन सह मे गृहं समागतानां पण्डितप्रवराणां श्रीमतां गिरिराजव्यासमहाभागानां ह्यो जातः, स मया श्रावयितव्य एवासीत्। तमेव श्रावयाणि यदि श्रीमतामनुमतिर्भवेदिति।

**किशोरः**—कं विषयमधिकृत्यासीत्?

इति श्रुत्वा प्रेमया स्वशिरःकम्पनेन निजं प्रति संकेतितम्।

**किशोरः**—तत्कथंकारम्? श्रावय।

**प्रेमा**—व्यासपादा मम पितुः परममित्राणि सन्तीति भवतो विदितमेव। किशोरेणापि स्वीकृतिमस्य शिरःकम्पेनैव दत्त्वा 'पुनः किम्?' इत्युक्तम्।

**प्रेमा**—ते गृहमागताः। तैश्च मामकं पितरं सम्बोध्य शब्दः कृतः 'त्रिवेदिनः!' इति। तच्छ्रुत्वा पितृपादा नीचैरागताः।

**किशोरः**—नीचैरागताः? पूर्वं ते क्वासन्?

**प्रेमा**—अट्टालिकायाम्।

**किशोरः**—पुनः किम्?

**प्रेमा**—पुनस्तैस्तान् सत्कृत्याऽऽसनं दत्तम्। ते च मित्रे परस्परमित्थमालपतः।

**गिरिराजव्यासः**—त्रिवेदिनः! अपि भवन्तः कुशलिनः?

**भैरवदत्तः**—ईश्वरेच्छया निखिलानि कार्याणि साफल्यं यास्यन्ति, व्यासपादाः!

**गिरिराजव्यासः**—शुभमेतत्। अस्माभिरपि भगवन्त एतदर्थमेव प्रार्थ्यन्ते यन्नः पुत्र्याः प्रेमायाः विवाहसम्बन्धस्समुचिते कुटुम्ब एव भवेदिति।

**भैरवदत्तः**—पण्डितप्रवरा ये श्रीकृष्णदत्तमिश्राः सन्ति, तेषामेव पुत्रः किशोरो नाम, सुशीलोऽतिसुन्दरो दयाशीलश्च, शास्त्रिकक्षायामधीते साम्प्रतम्।

**गिरिराजव्यासः**—किशोरपितरस्तु धनाढ्याः, क्व सन्ति निर्धना भवादृशाः पुनश्च तेषामद्वितीयः पुत्रः सः। तदीये विवाहे ते 'सुदाय' रूपेण भूरि धनं कामयिष्यन्ते। यतस्ते अतीव कृपणाः। परं किशोरो वस्तुतः किशोर एव। तादृशो न प्राप्यतेऽस्माभिरन्यः। परमेशकृपया संबन्धोऽयं निश्चितश्चेत्, तदितः परं किमन्यद् वरम्?

**किशोरः**—इत्युक्तं व्यासपादैः! (विहस्य) ततः किम्?

**प्रेमा**—ततः किम्? (सहर्षम्) मदीयेन जनकेन कथितं यत् किशोरेण प्रेमां परिणेतुं स्वयमेव अभ्युपगतम्।

**किशोरः**—वार्तेयं कथं ज्ञाता जनकेन?

**प्रेमा**—मदीयवचनात्।

**किशोरः**—शुभमेतत्सम्पादितम्। अहमप्यद्यैव गृहं गत्वा स्वपितरं स्पष्टं कथयिष्यामि 'यदहं प्रेमां परिणेष्ये इति'। यदा त्वया मया सह विवाहविषये निवेदितं तदा जनकेन किञ्चिदनिष्टं तु नामन्यत?

**प्रेमा**—उदरदशां ज्ञात्वा कथमित्थं करिष्यति?

**किशोरः**—उदरदशायाः का वार्ता?

**प्रेमा**—क्रीडायामेवाऽऽवां मातापितरौ भविष्यावः।

**किशोरः**—किमित्थम्? तदावयोस्तु विवाहः प्रकृत्यैव कारितः। अधुना तु तेन कालेन भाव्यं, येन मदीयं गृहं श्रीमतीशोभयाऽलङ्कृतं भवेदिति।

**प्रेमा**—स कालः कदा भावी?

**किशोरः**—नातिदूरे सः; परमिदं तावत्कथ्यतां यदुदरदशा कथं ज्ञाता जनकेन?

**प्रेमा**—जनन्या पृष्टया मया तत्सर्वं वृत्तं कथितम्। जनन्या च तत्सर्वं जनकाय निवेदितम्।

**किशोरः**—अस्तु तावत्। मदीयं भवत्या सह विवाहविषये निश्चयं श्रुत्वा किमुक्तं ततो व्यासपादैः?

**प्रेमा**—आवयोः परिणयविषये जनकवचनमाकर्ण्य यत्पूर्वं कथितं तैः, तदेव भवदीयनिश्चय इति निशम्य साम्प्रतमपि निगदितम्। परं किशोर! यदर्थं ते समागता गृहं,—या च तैर्भविष्यद्वाणी कृता मद्भाग्यविषये सा तु मया श्राविता नैव।

**किशोरः**—का सा भविष्यवाणी?

**प्रेमा**—(विहस्य) तैर्व्यासपादैर्निगदिता मे पितृचरणा यत्—"त्रिवेदिनः! भवत्पुत्रीभाग्यरेखा संप्रति धनयोगे प्रबला। यदि भवद्भिरेतर्हि प्रेमानाम्ना 'डर्बी-लाटरी' योजना क्रियेत, तज्ज्योतिःशास्त्रानुसारेण तदीयां भाग्यरेखां दृष्ट्वा मदीयोऽयं विश्वासः सुनिश्चितो भवति, यत्तत्र तस्या भवेत्प्रथमपुरस्कारप्राप्तिरिति।

**किशोरः**—किमुक्तं ततो जनकेन?

**प्रेमा**—उक्तं किम्? धनाभाव एव तत्र प्रबलः।

**किशोरः**—अस्तु तावदहं तत्कार्यं सम्पादयिष्यामि।

**प्रेमा**—मैवं मैवम्।

**किशोरः**—किं कारणम् ?

**प्रेमा**—न किमपि ।

**किशोरः**—तत्कथमिव ?

**प्रेमा**—पुरस्कारो नैवागतश्चेत्, तानि चतुर्दशरूप्यकाणि वैयर्थ्यमेव यास्यन्ति ।

**किशोरः**—यद्यागतः, तत्सार्धसप्तलक्षमुद्राभिस्त्वज्जनकेन 'लक्षपति'रित्युपाधिर्धारयिष्यते ।

**प्रेमा**—तदा श्रीमतां पितरो मे जनकाय निवेदयिष्यन्ति यदस्मदीयेन किशोरेण सह भवता स्वपुत्रीविवाहः कार्यः ।

**किशोरः**—कथमिव ?

**प्रेमा**—तदाहं लक्षपतेः कन्यात्वं प्राप्स्यामि ।

तदित्थं स्वयौवनेन क्रीडन्तौ शिलातलादुत्थाय परस्परं दत्तहस्तौ तौ साट्टहासं दिनावसाने स्वं स्वं गृहं गतवन्ताविति ।

(४)

यदा किशोरो गृहमागतस्तदा घटिकायां सार्धसप्तवादनसमय आसीत् । किशोरस्य पिता चाकाशवाणी (रेडियो) यन्त्रादागतानां गीतानां श्रवणे दत्तचित्त आसीत् । किशोरे दृष्टिं गते आकाशवाणीसमाप्तिं विधाय तेनोक्तम्—"किशोर! क्व गत आसीः ।"

**पुत्रः**—न कुत्रापि पितः ।

**पिता**—त्वया न ज्ञातमस्ति यत्—मामकीनोऽयं परीक्षाकालः, सम्प्रति न कुत्रापि गन्तव्यमिति ।

**पुत्रः**—मस्तिष्कं स्वस्थीकर्तुमगमम् ।

**पिता**—किं मस्तिष्कं होराचतुष्टयेऽतीते स्वास्थ्यं प्रयाति? त्वं तु मध्याह्ने त्रिवादनसमये गतोऽधुना रात्रौ सार्धसप्तवादनकाले गृहमायातः ।

पुत्रः—सम्प्रति तु सन्ध्यैव जाता ।

पिता—कालोऽयं यदि संध्येति मन्येत तद्वरद्रष्टारो जनाः कथं वरमदृष्ट्वैव गच्छेयुः ?

पुत्रः—किमुक्तम् ?

पिता—उक्तं किम् ? तव विवाहार्थं त्वामवलोकयितुं जनाः समायाताः, बहुकालं यावदवस्थिताः । परमियतीं दैर्घकालिकीं तावकीमनुपस्थितिं ज्ञात्वा सायं सार्धपञ्चवादनकाले गताः। तेषां निश्चयो विवाहे भूरि धनं प्रदातुमासीत् ।

पुत्रः—धनेन मे किं प्रयोजनम् ? बालया सुशीलया योग्यया च भवितव्यम् ।

पिता—पुत्री तेषां सुशीला योग्या चापि वर्तते ।

पुत्रः—किं तया मे अनीप्सितया प्रयोजनम् ?

पिता—किं पुनः ?

पुत्र—नैव किमपि । किन्तु . . . . . . , भवद्भिरधुना मे विवाहसंबन्धे वृथैव चिन्ताशीलैर्न भाव्यम् ।

पिता—कथमिति ?

पुत्रः—मम विवाहस्तु प्रेमया सह निश्चितः ।

पिता—कया सह ?

पुत्रः—प्रेमया सह ।

पिता—(सभ्रूभङ्गम्) कया प्रेमया ?

पुत्रः—अनयैव प्रेमया—भैरवदत्तत्रिवेदिनः सुतया ।

पिता—"किं भैरवदत्तत्रिवेदिनः पुत्र्या ? तस्य निर्धनस्य पुत्र्या ? यस्य समीपे दातुं चत्वारः पणका अपि न सन्ति, तस्य पुत्र्या ! नहि, नहि, तस्य पुत्र्या सह तव विवाहं न करिष्यामि । मयि प्राणान् धारयति त्वं को

विवाहं कर्तुम्? यस्मान्नगरान्मया ते विवाहः करिष्यते, तस्मादेव भविष्यति। किं वीथिकायामेव? सोऽपि निर्धनपुत्र्या! पितुः सम्मुखे स्वयमेवेत्थं निगदन्तं त्वां लज्जापि न बाधते। अवहितो भव, त्वद्विवाह-विषये तस्य पुत्र्या नाम कदापि मे न कर्णगोचरं कर्तव्यम्।

इति तारस्वरेण कथयन् कक्ष्यातः स बहिर्जगाम।

(५)

किशोरं विवाहार्थं द्रष्टुं बहूनामेव जनानां तत्र गतागतमभूत्, किन्तु तस्योत्तरं तेषु नकारात्मकमेवासीत्। भैरवदत्ते विवाहविषयंप्रति पृष्टवति 'परीक्षानन्तरमेव करिष्यामि' इति तस्य स्वनिश्चयं कथितवान् किशोरः। 'डर्बी-लाटरी' योजना तेन प्रेमाया नाम्नैव साकारीकृता न वेति तस्य प्रेमिकाया अप्यविदितम्। तस्य प्रेमिका कस्मिंश्चित् साधारणगृह उत्पन्नेति पाठकानां विदितमेव। परं तया सह सम्पर्कस्तस्य कथङ्कारमजायतेति भवतामविदितं प्रायेण। अतस्तद्विषये लेखनमप्रासङ्गिकं न भवेत्।

प्रेमाया एकः सहोदरो भ्राताप्यासीत्परमीश्वरस्य गतिचक्रात्तस्य साम्प्रतमनुपस्थितिरेवाभवत्। तस्य नामधेयं 'सुरेन्द्रमोहनः' इत्यासीत्। सुरेन्द्र-मोहनः किशोरस्य परमं मित्रमभूत्। तस्मादेव कारणात् किशोरस्तस्या गृहे बाल्यकालादेव गतागतमकार्षीत्। किशोरस्य प्रेम्णा तस्याः पितरावियन्तौ वशीभूतावास्ताम्, यत्पञ्चत्वं गतेऽपि सुरेन्द्रमोहने तस्य तत्र गतागते कोऽपि नागतो विरोधः। तौ सुरेन्द्रमोहनस्य क्षतिपूर्तिं किशोरस्य स्वगृहे गतागतेन प्रेमया सह बाल्यादेव क्रीडनेन चामन्येताम्। यस्यायं परिणामोऽभवद् यत्तौ, प्रेमा किशोरश्च, अन्योन्यस्य तारुण्यादियद्दूरमाकृष्टावभूताम्—यत्तयोः क्रीडाप्रेम दाम्पत्यरूपेण स्वभावत एव परणितमभूत्। पूर्वं तु प्रेमायाः पितरौ तां किशोरस्य सहवासान्निवारयितुं प्रयत्नमकुर्वाताम्, किन्तु तस्या गर्भदशां ज्ञात्वा, तस्माद्

विरक्तिं प्राप्य परमेशं प्रार्थयेतां—यत्प्रेमायाः विवाहः समाजदृष्ट्यापि किशोरेण सार्धं शीघ्रमेव भवेदिति ।

प्रेमापि स्वपितुरद्वितीया पुत्री । सम्प्रति सा षोडशवर्षीया मध्यमापर्यन्तं शिक्षिता च । सा स्वपितुरेकैव सन्ततिः स्नेहस्यैकायनीभूता । तस्याः पितरौ स्वजीवनमपि बलितया दत्वापि तां सुखिनीमीक्षितुमभिलषतः । अविवाहितदशायां तस्या गर्भावस्थां दृष्ट्वा तयोर्हृदि परमं दुःखमस्ति, किन्तु किशोरस्य 'प्रेमयैव सह विवाहं करिष्ये' इति वचनात्तौ स्वीयं दुःखं, दुःखं न मन्येते । पुनश्च तस्य परीक्षाकालं प्रतीक्षेते, यतः तदनन्तरं किशोरस्तयोः पुत्रीं परिणेष्यतीति ।

परीक्षाकालोऽप्यागतः । किशोरः स्वप्रेमिकाया मधुरालापे निमग्नः । तस्य मनः स्वप्रेमिकां विना शूकरक्षेत्रात्परीक्षायै मथुरां गन्तुं अनुमतिं न ददाति । परं प्रेमयाऽत्यन्तमाग्रहे कृते पारस्परिकमङ्गुलीयकं परिवर्त्य येन केनोपायेन परीक्षां दातुमगच्छत् ।

(६)

"किं निर्धनजनाः परमात्मनः प्रतिमूर्तयो न? किं तेषामस्ति न किमपि स्थानमस्मिञ्जगति? आः! यो धनवानस्ति, स किं श्वो निर्धनीभवितुं नार्हति? यश्चाद्य धनहीनावस्थया प्रपीडितः, स किं कालान्तरे धनवान् भवितुं न शक्नोति? अरे! प्रेमे! आः प्रेमे! येन सह त्वया स्वकीयं प्रेम सम्पादितं, तदीयेन जनकेनाद्य किशोरेण सार्धं तव विवाहसम्बन्धे स्पष्टं निषेधः कृतः; किमिदं तेन विदितम्? तेन च विविधमप्रासङ्गिकमपि निगदितं, तस्माच्चेखिद्यते मे चेतः, यस्य श्रवणस्य न काप्याशासीन्मामकीने हृदि । हा पुत्रि! किमधुना कर्तव्यम्? अविचार्यैव त्वया यो गान्धर्वविवाहो विहितः, तस्यैवायं परिणामो भुज्यते सम्प्रति । गर्भदशायाः प्राबल्यात्तव शरीरमनुदिनं सपाण्डुच्छवि कार्श्यमायाति । त्वदीया देहस्थितिर्गर्भावस्थाया ज्ञानमपि कारयति दूरत एव । आः पुत्रि! प्रेमे!! अहह!!! त्वया किमित्थं कृतम्? प्रतिवेशनिवासिनो यदा

त्वां द्रक्ष्यन्ति, तदा किं कथयिष्यन्ति ते? कथय पुत्रि! कथय, न हि, न हि, सम्प्रति नैवात्र वत्स्यामि, नैवात्र वत्स्यामि। ऐ किं, किमिदं, किमिदमुक्तम्—"किशोरस्य विवाहं तव पुत्र्या सह नैव करिष्ये, नैव करिष्ये। मामन्तरेण स विवाहस्य कर्ता कः? नासि त्वं चतुर्णां पणकानामपि पतिः! कः सम्बन्धो धनवन्निर्धनयोः?"। इत्थंप्रकारेण, गृहमागतेन किशोरजनकेन विवाहविषये भर्त्सितस्य भैरवदत्तस्य मनसि विचारपरम्परया स्वनिवासः कृतः। तेन तद्धृदयं प्रपीडितं बहु।

सुताया दोषममुमाच्छादयितुं बहिरेव गमनमुचितमिति प्रेमायाः पितरौ सम्यग् व्यचारयताम्। तथा चैकस्मिन् दिने तौ स्वीयं प्रियनगरं शूकरक्षेत्रं परित्यज्य स्वपुत्र्या सह बहिरगच्छताम्। कतिपयैरहोभिः प्रेमाया एकःपुत्रोऽभवत्। परं समयोचितवस्तुलाभाभावात्तस्या दशा शोचनीया जाता। ज्वरेण, कासेन प्रपीडिता सा स्वप्रियस्मृतौ निरन्तरं विरहवशाद् गलितकायाभूत्। मातुर्नेत्रे पुत्रीदशावलोकनात्सन्ततमश्रुपातेन निस्तेजसी जाते। पिता यद्धनं समस्तदिवसपरिश्रमेण प्राप्नोत्तत्सर्वं तस्याश्चिकित्सायां व्ययीभवति स्म, इदानीं भोजनचिन्तया ते सुतरामबाध्यन्त।

अन्ते च प्रेमाया दशा त्वियती शोचनीयाभवत् यद् वैद्येन कथितम्—"प्रेमाऽधुना यक्ष्मरोगेण प्रपीडिता" इति। अस्यां दशायां तस्याः पितरावपि जर्जरितकायावभूताम्। यदा प्रेमया स्वरोगमुक्तिकालः कथमपि न दृष्टस्तदा तयैकं पत्रं किशोराय व्यलेखि। "किं किशोरस्य दर्शनमपि न भावि? किमेतदर्थमेव तेन मदीयं शिरोऽलकेषु सिन्दूरेण पूर्णीकृतम्? संबन्धेऽपि जाते विवाहकालस्य प्रतीक्षया परस्परं 'प्रिये! आर्यपुत्र!' इति संबोध्य न कदापि कथितमावाभ्यामित्येव चिन्तया सम्प्रति बाध्यते मे चेतः। अन्तिमोऽभिलाषोऽपि नास्मादतिरिक्तो मामकीनोऽन्यः" इति चिन्तयन्ती किशोरेण सह स्वजातं मधुरालापं स्मरन्ती परमेशं चाभ्यर्थयन्ती सा तदागमनं प्रतीक्षितवती।

(७)

पठितं किशोरेण पत्रम्। स्वप्रेमिकायाः पत्रं विलोक्यैव तस्य ज्वरो गतप्रायोऽभवत्। प्रेमाया वियोगे सोऽपि विरहावस्थया प्रपीडितोऽभूत्। तेन प्रेमातिरिक्तया कयाचिदन्यया सह विवाहो न स्वीकृतः। अस्मादेव तस्य पितरावपि तया सहाधुना विवाहकार्यं संपादयितुमुद्यतावास्ताम्। किन्त्वस्मात्पत्रात्पूर्वं प्रेमायाः कोऽपि संकेतो नासीत्। ह्य एव तस्या लाटरीप्रथमपुरस्कारस्य तारसन्देशोऽप्यागमत्। तं गृहीत्वा सोऽधुना शीघ्रमेव बाष्पयानेन 'प्रेमे! प्रेमे!' इति तारस्वरेण विलपन्देहलीमागत्य पत्रानुसारेण तस्या निवासस्थानं प्राप्नोत्।

तेनावलोकितम्—यदीदृशेन रोगेण ग्रस्ता सा यत्तस्याः प्राणाः समागतं व्याधं विलोक्य क्षणमेव विरमन्तः पक्षिण इव खमुत्पतितुं समुद्यता इति। तस्मिन्नेव क्षणे—"प्रेमे! प्रेमे! अहमागतः प्रेमे! मया त्वं बहुविधमन्वेषिता परं त्वदीयं संकेतचिह्नमपि न लब्धम्। कथं न प्रेषितं त्वया पत्रादस्मात्पूर्वं किमपि पत्रम्? प्रेमे! त्वं ममानुपस्थितौ प्रेमे! शूकरक्षेत्रं विहाय कथमत्र समायाता? प्रेमे! कथय, कथय, किं त्वदीयः प्रत्ययो मयि गताशोऽभवत्। प्रिये! हा!! प्रिये!!! त्वामन्तरेण कथमहं जीवितुं शक्तः? त्वदीयो 'लाटरी'-प्रथमपुरस्कारोऽप्यागतः, यस्य तारसन्देशो मम कराग्रे विद्यते; पश्य, पश्य। किं स मधुरालापस्ते स्मृतिपथं नायाति? कथय, प्रेमे! कथय, वद, वद, मया सह वार्तालापं कथं न कुरुषे प्रिये! प्रियतमे!! मदीये प्रेमे!!!" इत्थं स बहु विलप्य विह्वलो जातः।

मुहूर्तकानन्तरं प्रेमया स्वनेत्रे स्फुटीकृते, किशोरं च दृष्ट्वा तया तारस्वरेण कथितम्—"किशोर! किशोर! किं त्वमागतः? किं त्वमागतः? किमहं स्वपिमि, स्वपिमि?" इति।

"न हि, न हि, प्रेमे! त्वं नैव स्वपिषि, अहमागतः प्रिये! त्वदीयो 'लाटरी'प्रथमपुरकारोऽप्यागतः, यस्य तारसन्देशः मम काराग्रे विद्यते, पश्य, पश्य।"

"किमुक्तं किमुक्तं "प्रिये!" इति। "पुनः कथय, आर्यपुत्र! पुनः कथय, अमुमेव शब्दम्।"

"प्रिये!"

"आर्युपुत्र!"

"प्रिये!"

"आर्यपुत्र!"

"सम्प्रति मया बहुकालं नैव स्थीयते आर्यपुत्र! शोभनमेवमापतितं यदन्तिमे क्षणे भवदीयदर्शनमपि जातम्।"

"कथमित्थं कथयसे?"

"सत्यमेव जानीहि, गृहाण तावदमुं स्वपुत्रम्। अयमेव मेऽन्तिममभिज्ञानम्। अस्यैव कृते समाजदृष्ट्याहं पतिता जाता। अतीवावधानेनायं पालितः पोषितश्च त्वयाऽधुना सम्यक् सुरक्षणीयः। अङ्गुलीयकं दृष्ट्वा तदा तदा त्वहं स्मरणीया। सम्प्रति पुनर्ममालकान् सिन्दूरस्य लोहितरेखयाऽलंकृतान् कुरु। स्वकीयं चरणस्पर्शमपि कारय। पुनश्च कथय तमेव शब्दम्—एकवारम्।"

इत्थं कथयन्त्याः प्रेमायाः स्वरो मन्दीभूतः। पुनरपि तस्या मुखादिमे शब्दा निःसृताः—

"यश्च पुरस्कारः प्राप्तः, स स्वपितुश्चरणयोः 'सुदाय'रूपेण समर्पणीयः; आ र्य पु त्र! प्र . . णा . . मः।"

इति निशम्य किशोरस्तारस्वरं चुक्रोश—"प्रिये! प्रिये! मां विहाय क्व गच्छसि" इति। एवं कथयता यदा तेन तस्याः शरीरस्पर्शः कृतः, तच्छरीरं तदा पञ्चत्वं गतमासीत्।

## सुवर्णपुरीया न्यायवादिनी

को. ल. व्यासराजशास्त्री

कमलाकरः पितृभ्यां वात्सल्येन कुमार इत्याहूतः तेनैव नाम्ना प्रथितोऽभवत्। तस्य पिता धनपतिः कोटीश्वरोऽपि शतच्छिद्रशाटीधरः, अतीव कृपणः। यदा कुमारो माध्यमिकपरीक्षायामुत्तीर्णः तदा तस्य पिता 'उपरिकक्ष्यास्वध्ययनाय प्रभूतं धनमपेक्ष्यते, तावद्धनं व्ययीकर्तुं नाहं क्षमः, तेनाधीता विद्या वाणिज्यनिर्वाहाय पर्याप्ता भविष्यति' इत्याकलय्य कुमारमुपरिविद्याभ्यासात् न्यवर्तयत्। तदारभ्य कुमारो निरुत्साहः कदाचिदापणे कदाचित् क्रीडोद्याने कदाचित् सुहृदां गोष्ठ्यां च कथञ्चिद्वर्षद्वयमनैषीत्।

शैशवादारभ्य देशान्तरदर्शने महत् कौतूहलं कुमारस्य। तस्य पितरौ तु तद्वियोगं न मृष्यतः। स खल्वेक एव पुत्रस्तयोः। तस्यैका लीला नाम भगिनी हीरपुरे कस्मैचित् वणिक्पुत्राय दत्ता तत्रैवास्ते। विवाहसमये धनपतिना प्रतिज्ञातं वरशुल्कं न निःशेषतया दत्तमिति हेतोः कुपितो जामाता न लीलां पितृगृहं प्रेषयति। विवाहानन्तरं गता सा नैव प्रत्यागता। इत्थं पित्रोर्वात्सल्यस्य कुमार एक एव पात्रमासीत्। तत्कथं सह्यतां ताभ्यां तस्य विदेशवासः।

पित्रोरनुमतिमन्तरा कुमारो विदेशं प्रस्थातुं नापारयत्। यतो हि तस्य हस्ते काकिण्यपि नासीत्। तस्य पिता सर्वमपि धनमयोमय्यां पेटिकायां सुगुप्तं रक्षति। कुञ्चिकां न कस्यापि हस्ते यच्छति। धनविषये स्वभार्याऽपि न तस्य विश्वासभूमिः। अतस्तस्या वशेऽपि न किञ्चिद्धनमासीत्। अन्यथा तामश्रुधाराभिः प्रतार्य तस्याः सकाशात् धनमग्रहीष्यत् कुमारः। अतः स कर्तव्यमूढः कालमनयत्।

यदा कुमारो विंशे वयसि पदं चकार तदा धनपतिस्तस्य विवाहे मनो बबन्ध। न धनपतेः पुत्रस्योद्वाहे दृष्टिः किन्तु धनोपार्जने। तथा हि—सुवर्णपुर एवान्यः कश्चित् कनकाचलो नाम वणिक् महाधनः। तस्य राजहंसी नाम एकैव तनयाऽष्टादशवर्षदेशीया। नान्या सन्ततिस्तस्य। कनकाचलः सुवर्णानां

दशसहस्रं विवाहशुल्कत्वेन धनपतये प्रतिजज्ञे। अन्ते चापुत्रत्वात् कनकाचलस्य सर्वमप्यर्थजातं धर्मतः कुमारमेव प्राप्स्यति। अनेन वित्तसञ्चयेन समाकृष्टमभूत् धनपतेश्चेतः। किं बहुना, विवाहो निश्चितः।

वृत्तान्तमिमं पित्रोः सँल्लापादधिगत्य भृशं व्याकुलोऽभूत् कुमारः। आत्मनो मनोरथव्योमयानं भग्नं मेने। स हि बाल्ये वयसि न विवाहबन्धने पतनमैच्छत्। न तु राजहंस्यां तस्य विरागः। सा हि कृतविद्या स्पृहणीयशीला च कलधौतमयी मूर्तिरिवासीत्। सुवर्णपुरेऽन्यत्र वा तादृशी लावण्यवती दारिका दुर्लभैव। नापि कुमारः सर्वात्मना दारपरिग्रहात् विमुखः। किन्तु देशाटनेन लोकज्ञानं सम्पाद्य ततः परं विवाहः कर्तव्य इति तस्य सङ्कल्पः। यद्यपि स स्वीयं मनोगतं मात्रे माता च पित्रे न्यवेदयत् तथापि तौ तद्वचनं न कर्णे चक्रतुः। अतृणे पतितो वह्निरिव निर्वाणतामगात् तस्याभ्यर्थना। जालपतितो मत्स्य इव परित्राणोपायमपश्यन् भृशं ततापं कुमारः।

विवाहदिवसः सन्निहितः। उभयोरपि गृहयोः वैवाहिकाः सज्जाविधयो महता धनव्ययेन परिकल्पिताः। धनपतिरपि सहजां कृपणतामपहाय विपुलं धनं व्ययीकृतवान्। पञ्चषा एव दिवसा अवशिष्यन्ते विवाहस्य। कुमारः कथञ्चिदात्मनः सङ्कल्पं साधयितुं दृढचित्तोऽभूत्। कनकपुरे तस्य कश्चित् प्रियङ्करः सुहृदास्ते। तस्य सकाशात् पर्याप्तं धनमादाय देशाटनं करिष्यामीति निश्चिकाय कुमारः।

मातापितरावनिवेद्य गमने स्वस्यादर्शनेन तौ शोकसलिलावर्ते निमज्जेतां जीवितं च जह्यातामित्यज्ञासीत् कुमारः। न स कुपुत्राचरिते पथि गन्तुमैच्छत्। किं कर्तव्यमिति गाढं चिन्तयतस्तस्य बुद्धिरस्फुरत्। बुद्धिसागरो नाम तस्य प्रातिवेशिकः सहाध्यायी मित्रं द्वितीयं हृदयमिवासीत्। स रहस्यनिक्षेपस्यानुत्तमं स्थानम्। अतः कुमारो विवाहात् पूर्वं चतुर्थे दिवसे सायं तदन्तिकं जगाम। रहसि च तस्मै स्वीयं व्यवसायं व्यजिज्ञपत्। स च धर्मवचनैस्तस्य चित्तं निवर्तयितुमयतिष्ट। परं तस्य वचनं सर्वं शिलाशिरसि वर्षणमिवासीत्।

दृढचित्तः कुमारो बुद्धिसागरमभाणीत्—'मम गृहे मामधिकृत्य गवेषणा प्रवर्तेत । तदा त्वया गत्वाऽहं सुहृदो दर्शनाय कनकपुरं गत इति मातापित्रोरग्रे कथनीयम् । अन्यथा तौ व्याकुलौ स्याताम् । ततः परं वृत्तान्तमधिकृत्याहं कनकपुरात् ताभ्यां लेखं विसर्जयिष्यामि' इति । एवमुक्त्वा स सुहृदमापृच्छ्य गृहं गतः ।

बुद्धिसागरः कुमारस्य व्यवसायेन नितरामदूयत । स खलु राजहंस्याः मातृष्वसेयः । राजहंसी च कमलाकरादन्यत्र न रमते । विवाहनिश्चयानन्तरं हर्षोल्लसिता सा कामपि श्रियमविन्दत । कमलाकरस्य वृत्तान्तेन सा शोचनीयमवस्थान्तरं गमिष्यतीत्यमन्यत बुद्धिसागरः । एकतो महता वैभवेन प्रवर्तिष्यमाणस्य विवाहस्य विघ्नः, अपरतः सुहृदो विरहः, अन्यतश्च राजहंस्या दुर्विधिः इत्येतत् त्रितयं बुद्धिसागरस्य हृदयमतुदत् । परिम्लानकुसुमसदृशमभूत् तस्य चेतः ।

कुमारो रात्रौ भोजनानन्तरमेकाकी गृहान्निर्गत्य अन्यैरलक्षितः कनकपुरगामिनं पन्थानमशिश्रियत् । कुमारेण शैशवादारभ्य न कदापि पद्भ्यां सञ्चारः कृतः । तस्य गृहे पञ्चषाणि वृषभशकटानि द्वित्राण्यश्वशकटानि च सन्ति । अतः पादसञ्चारक्लेशस्यानभिज्ञ एव कुमारः । अन्धतमसावृते पथि यदा क्रोशमात्रमध्वानं जगाम तदा प्रक्षीणगात्रः स पदमपि पुरश्चलितुं न शशाक । क्वचित् रथ्यायाः परिसरे स्वीयमुत्तरीयमास्तीर्य वामहस्तन्यस्तमस्तकः चिन्ताकुलः शिश्ये ।

किञ्चिदतीत्य तेनैव मार्गेण दूरादागच्छतां शाकटिकानां गीतमश्रावि कुमारेण । क्रमेण वृषभकण्ठबद्धानां किङ्किणीनां नादोऽप्याकर्णितः । निर्जनमार्गेषु गच्छन्तो वणिजः चोरभयेन रात्रौ श्रेणीबद्धैरेव शकटैः गतागतं कुर्वन्ति । अस्यां श्रेण्यामुपविंशानि शकटान्यासन् । अन्तिकमागतायां शकटश्रेण्यां कुमार उत्थाय पुरोगामि शकटं स्थापयित्वा—'कुत्र गच्छन्ति इमानि शकटानि' इति शाकटिकमपृच्छत् । 'कनकपुरम्' इत्यासीत् तस्योत्तरम् । कुमारः परं प्रहर्षं गतः ।

वस्तुतस्तानि शकटानि समारोपितभाण्डानि सुवर्णपुरादेवागच्छन्ति। शाकटिकः कुमारं स्वरेण प्रत्यभिज्ञाय झटिति शकटादवरुह्य विनयावनतः—'क्व गच्छत्यार्यः' इत्यपृच्छत्। 'मम विवाहो निश्चितः। अतः स्वसारमानेतुमनिवेद्य पितरं कनकपुरसमीपस्थं हीरपुरं गच्छामि' इत्यवोचत् कुमारः। धनपति-जामात्रोः वैमनस्यं विदितमेव सर्वेषां सुवर्णपुरे। अतस्तद्वचनं सत्यं मत्वा शाकटिकः—'शकटमारोहत्वार्यः' इति सप्रश्रयमभ्यधात्।

अत्रान्तरे बुद्धिसागरोऽकस्मात् कुमारमुपेत्य—'सखे, अयं मे सुहृत् राजहंसः कनकपुरं जिगमिषति। अतस्ते सहायो भविष्यतीत्यानीतो मया। अयमपि भवन्तमनुगच्छतु' इत्यवोचत्। शाकटिकस्तस्याप्यारोहणमन्वमन्यत। उभावपि शकटमारुक्षताम्। तस्मिन् शकटे चतस्रो देवदारुपेटिकाः परमवर्तन्त। कुमारः पुरोभागे शाकटिकस्य समीपे उपविष्टः। राजहंसस्तु पश्चाद्भागे एकस्याः पेटिकाया उपरि सङ्कुचितसर्वावयवः स्थितः।

कुमारो विदेशवृत्तान्तान् जिज्ञासुः शाकटिकेन सह चिरं संभाषणे प्रवृत्त आसीत्। शकटस्य कूबरे स्थितः शाकटिकः संभाषमाण एव क्रमेण निद्रां गतः। अलब्धनिद्रः कुमारो राजहंसेन सह संभाषणाय प्रावर्तत। सोऽपि निद्रां नाटयन् केवलं हुङ्कारेणैव तस्योत्तरमदात्। कुमारः गात्रं प्रसार्य शकटस्यैकस्मिन् पार्श्वे शयितः। तस्य सविधे शयनायार्थितो राजहंसः 'मा भूदार्यस्योपरोधः', इत्युक्त्वा तूष्णीं स्थितः।

शकटेऽस्मिन् बद्धौ वृषभौ पीवरौ ककुद्मन्तौ द्रुतगामिनौ च। अनुत्खाती च मार्गः। अतस्तौ निरर्गलप्रसरौ त्वरितमधावताम्। शकटान्तराणि पश्चाद्भागे दूरान्तरितान्यभवन्।

बहुलपक्षीया कराला तमिस्रा। अर्धरात्रः। अञ्जनेन लिप्तमिवासीत् नभस्तलम्। जनसञ्चाररहितो मार्गः। निःशब्दाः परिसरभूमयः। वृषभयोः किङ्किणी-नादः परं सर्वत्र प्रतिध्वनति। रथ्याया उभयोः पार्श्वयोः लताकुञ्जैः सङ्कीर्णा वनावलिः। विरलतया महामहीरुहा अप्यवर्तन्त। परं न गृहाणि नापि कुटीराणि।

त्वरया व्रजन्तौ वृषभौ क्वचिदकस्मात् तस्थतुः । गाढसुप्तः शाकटिको न प्रबोधमगात् । कुमारः शनैः शिर उन्नमय्य अग्रभागमपश्यत् । शकटस्याग्रे करालाकृतयः पञ्चषाः पुरुषाः । मसीमलीमसवपुषस्ते क्रूराया निशाराक्षस्यास्तनया इवालक्ष्यन्त । धीरस्यापि कुमारस्य हृदयं कम्पितमिवासीत् । राजहंसस्तु भयविप्लुताङ्गो जीविताशामेव तत्याज । पुरुषास्ते क्रोशन्तमेव शाकटिकं बलाद् गृहीत्वा नातिदूरे प्रवहन्त्यां नद्यां प्राक्षिपन् । अयमर्थो जलपतन-शब्देनानुमितः कुमारेण । एते लुण्टाका इति निश्चित्य कुमारो राजहंसेन सह शनैः शकटादवरुह्य नातिदूरे लतापुञ्जस्य पश्चाद्भागेऽपवार्य तस्थौ ।

लुण्टाकास्ते प्रत्यागत्य शकटं मार्गादवतार्य पार्श्वस्थं जङ्गलं निन्युः । कुमारो राजहंसश्च दूरत एव शनैः शकटमनुजग्मतुः । नातिदूरे कश्चिदत्युन्नतः शिलोच्चयः । तस्याधोभागेऽल्पद्वारा गुहा । तन्निकटे शकटं स्थापयित्वा चोराः वृषभौ युगादुन्मोच्य पेटिकाः शकटादवरोपयामासुः । भारवत्य आसन् पेटिकाः । नूनमेताः सुवर्णपूर्णा इति मत्वा हर्षं गताश्चोराः महता क्लेशेन ताः सम्भूय गुहाभ्यन्तरं निन्युः । एकां पेटिकां मुद्गरेण बलादघ्नन् । भज्यमानायां च तस्यां गुहाभ्यन्तरे महती स्फुलिङ्गवृष्टिः समजनि, लुण्टाकानामुच्चैराक्रो-शोऽपि श्रुतः ।

वस्तुतस्तु ताः पेटिका आग्नेयचूर्णपूर्णा आसन् । तदुत्थितो भगवान् वैश्वानर एव लुण्टाकानां वधदण्डं व्यधात् । गुहामुखादविच्छिन्ना धूमधारा निःसरति । चिरं स्थित्वापि कुमारोऽन्तर्गत्वा परीक्षितुं न शशाक ।

कुमारो वृषभौ शकटस्य धुरि योजयामास । स्वयं शकटमारोढुमशक्तं राजहंसं हस्तावलम्बेन शकटमारोप्य कनकपुरगामिनं पन्थानमाससाद । स्वयं शाकटिकः सन् वृषभौ चोदयामास ।

रात्रेरन्तिमे यामे शकटः कनकपुरं प्रापत् । तत्र स्वसुहृदो गृहमन्वि-ष्यन् चिरं बभ्राम रथ्यासु । अनेन समयेन अरुणैः किरणजालैरद्योतत प्राची दिक् । प्रभातप्रायायां रजन्यां राजहंसः—'आर्य, अत्रैव समीपेऽस्ति मम

गृहम्, शकटादवरोहामि' इत्यवोचत। कुमारः शकटं स्थापयामास। राजहंसः कुमाराय धन्यवादं समर्प्य शकटादवातरत्। किञ्चिद्दूरं गत्वा शिथिलीभूतं परिधानादिकं दृढं बबन्ध।

तदैव तस्मिन् नगरे मणिकारवीथ्यां वित्तेशनाम्नः सार्थवाहस्य गृहात् रत्नपेटिकां चोरयित्वा धावन् कश्चिच्चोरः शकटाभिमुखमाजगाम। पृष्ठतश्च द्वौ रक्षिणौ दूरादन्वधावताम्। तौ विलोक्य चोरो भयेन रत्नपेटिकां शकटस्य पश्चाद्भागे निधाय जीविताशया द्रुततरमधावत्। नातिदूरे स्थितो राजहंसस्तं निरुध्य आत्मानमपि परिधृतवेषान्तरं चोरमाख्याय 'तिष्ठ, मा भैषीः' इत्यभिधाय तं स्थापयामास।

रक्षिणावागत्य शकटस्य कूबरे स्थितं कुमारं कौतस्कुतवार्तामपृच्छताम्। तयोरन्यतरः शकटं परीक्ष्य रत्नपेटिकामुपलब्धवान्। 'अरे मलिम्लुच, दिष्ट्या प्राप्तोऽसि। एहि। रक्षिगृहं गच्छामः' इत्यवोचतां तौ। 'अस्ति मे वक्तव्यं किञ्चित्, शृणुतमार्यौ' इति वदन्तं कुमारं 'तत्सर्वमद्य मध्याह्ने दण्डाधिपस्याग्रे कथयिष्यसि' इत्याख्याय तौ शकटेन सह रक्षिगृहं निन्यतुः।

रक्षिणोर्वचनमाकर्ण्य राजहंसः कुमारस्यापतितां दुर्दशामवेक्ष्य खिन्नः—'भवतु समयेऽस्य साहाय्यमाचरिष्यामि' इति मनस्यचिन्तयत्। ततः स चोरेण सह समीपस्थमट्टशूलमगमत्। तत्र तौ पानभोजनादिकं चक्रतुः। चोरः कृतभोजनः रात्रौ निद्राभावात् गाढं सुप्तः। राजहंसस्तमपवरकं तालेन बध्वा स्वकीयं हस्तपेटकमादाय अट्टशूले देयं धनं चोरस्यापि कृते समग्रतया दत्वा बहिर्जगाम।

मध्याह्ने द्वादशवादनावसरे रक्षिणौ लोप्त्रेण सह कुमारं दण्डाधिपस्याग्रे समर्पयामासतुः। वित्तेशोऽपि रक्षिणामादेशेन यथाकालं दण्डाधिकरणे सन्न्यधत्त। रत्नपेटिकामात्मीयां न्यवेदयत् वित्तेशः। पेटिका कुञ्चिकयोद्घाट्य परीक्षिता। वित्तेशेन यानि नामतो निर्दिष्टानि तानि सर्वाण्यपि रत्नानि तत्रासन्। लोप्त्रमेव साक्षीकृत्य साक्ष्यन्तरमनपेक्षमाणः वर्षद्वयभोग्यं कारादण्डं व्यधत्त

दण्डाधिपः कुमारस्य । 'हन्त कुसुमशय्यातो भीतः कण्टकशय्यायां पतितोऽस्मि' इति चिन्तयन् भृशमतप्यत कुमारः ।

अत्रान्तरे द्वास्थो दण्डाधिपमुपसृत्य—'देव न्यायवादिनी काचित् सुवर्णपुरादागता देवं द्रष्टुमीहते' इति व्यजिज्ञपत् । ततो दण्डाधिपस्यानुमत्या प्रविवेश न्यायवादिनी । कुमारो लज्जावनतवदनः स्थितः ।

**न्यायवादिनी**—आर्य, कुमारस्य पक्षमवलम्ब्याहं सत्यार्थसमर्थनायागताऽस्मि ।

**दण्डाधिपः**—साधु । तथा क्रियताम् ।

**न्यायवादिनी**—अपि नाम अपराधित्वेन निर्णीतस्य कुमारस्य वचनमार्येण श्रुतम् ।

**दण्डाधिपः**—किमत्र श्रोतव्यमस्ति । तेन वक्तव्यं सर्वं लोप्त्रेणैव कथितम् ।

**न्यायवादिनी**—आर्य, नैतत् न्याय्यं दर्शनम् ।

**दण्डाधिपः**—कथमिव ।

**न्यायवादिनी**—कश्चित् सदाचारः साक्षात्कृतधर्मा श्रोत्रियः, तस्य गृहद्वारे मांसखण्डः काकेन क्षिप्यते । मांसखण्डावलोकनेन श्रोत्रियस्य मांसाशित्वनिर्णयः किं युक्तः ।

**दण्डाधिपः**—नैव युक्तः ।

**न्यायवादिनी**—एवमेव लोप्त्रदर्शनमात्रेण चोरत्वनिर्णयो न धर्म्यः ।

**दण्डाधिपः**—भवत्या व्यक्तमभिधीयताम् ।

वाचकमहाभागाः, एषा न्यायवादिन्येव कुमाराय दित्सिता दारिका । बुद्धिसागरः कुमारस्य व्यवसायेन नितरामदूयतेति जानन्त्येव भवन्तः । आत्मानमापृच्छ्य स्वगृहं गते कुमारे बुद्धिसागरः कनकाचलस्य गृहमगात् । तत्र गृहोद्याने सखीभिः सह कन्दुकेन क्रीडन्तीं राजहंसीमेकान्तमानीय कुमारस्य वृत्तान्तं तस्यै न्यवेदयत् । कशाभिहतेव सा कामपि व्यथामन्वभूत् । मुक्ताफलमालासदृशाः अश्रुबिन्दवः तस्या नयनाभ्यां पेतुः । करुणं विललाप ।

बुद्धिसागरस्तां कथञ्चित् सान्त्वयामास। कथयामास च—'भगिनि, त्वमेवा-श्रुधारया कुमारं प्रत्यानेतुं क्षमा। तस्मात् मद्वचनकारिण्या भवितव्यं त्वया' इति। "भ्रातः, यदुच्यते त्वया तन्मया क्रियते। तत् कथ्यतां परित्राणोपायः" इति सा प्रणामशतपूर्वकं तमवादीत्।

ततो राजहंसी बुद्धिसागरस्य वचनमनुरुध्य पुरुषवेषं दधार। विवाह-समये वराय दातुं सज्जीकृतानि कञ्चुकादीन्यासन्। तानि मातापितृभ्यामलक्षिता पेटिकातो जग्राह। गृहात्किञ्चिद्दूरं बुद्धिसागरेण सह जगाम। तैः परिच्छदैः कृतवेषपरिग्रहा धृतोष्णीषा च राजहंसी राजहंसो बभूव। हस्तपेटके स्वीयमंशुकं कञ्चुकमाभरणानि च गृहीत्वा बुद्धिसागरेण सह कनकपुरगामिना पथा ययौ। कुमारेण सह तां शकटमारोपयामास। ततः परं यद् वृत्तं तज्जानन्त्येव भवन्तः।

कनकाचलस्य धनपतेश्च गृहयोः राजहंसीं कुमारं चाधिकृत्य जिज्ञासा समारब्धा। न कोऽपि तयोरुदन्तं जानाति, सर्वे विषादं गताः। बुद्धिसागरस्तु—सिद्धौषधिवल्लीव राजहंसी कुमारमाकृष्य प्रत्यानेष्यतीति विस्रब्ध एवासीत्। प्रातःकल्पं स उभे अपि गृहे गत्वा "कुमारो राजहंस्या सह चलच्चित्र-दर्शनाय कनकपुरं गतः" इति निवेदयामास। तदाकर्ण्य सर्वे प्रहर्षमगमन्। विवाहात् पूर्वमेव तयोः प्रीतिरुत्पन्नेति यत्सत्यमुद्वेल आसीत् तेषामानन्दः। अयमीदृशः समुदाचारो निश्चितविवाहेष्वद्यतनेषु वधूवरेषु दृश्यत एव।

सर्वं व्यक्तमभिधीयतामिति दण्डाधिपेनोक्ता राजहंसी आदितःप्रभृत्यान्तं सर्वां कथां कथयामास। सर्वे विस्मयं गताः। स्वेन सह शकटे स्थितं राजहंसं राजहंसीं विज्ञाय हर्षविस्मयपुलकिताङ्गः संवृत्तः कुमारः। यद्यपि शैशवादारभ्य राजहंसी कुमारस्य परिचितैव तथापि तेनैतावत्पर्यन्तं न सा सम्यक् दृष्टा। यत्र कुत्रापि रथ्यासु गच्छन्ती नतमुखी सा केवलं नेत्रान्तेन विलोकिता। अद्य तु तां दृष्टवतः कुमारस्य हृदयमयस्कान्तेनाय इव बलादाकृष्टमभूत्।

अनन्तरं अट्टशूले निद्राणश्चोरो राजहंस्या वचनेन रक्षिभिरानीतः। स च गत्यन्तरमपश्यन् आत्मना कृतं चौर्यमभ्युपागमत्। दण्डाधिपस्तं कारां

प्रेषयामास। सत्यार्थप्रतिपत्तौ कृतोपकारायै न्यायवादिन्यै कृतज्ञतां प्राकटयत् दण्डाधिपः। अदापयच्च रत्नपेटिकां वित्तेशाय। वित्तेशस्तामादाय कुमारमुपगम्य—'सौम्य, महदुपकृतं तेऽनया न्यायवादिन्या। तत् तस्यै यथोचितं पारितोषिकं दातुमर्हसि। तव हस्ते काकिण्यपि नास्तीति न्यायवादिन्या प्रस्तुतात् कथाप्रसङ्गादवगम्यते। तदेतद्धनं तस्यै दीयताम्' इति रत्नपेटिकां तस्मै ददौ। स तु—'यया मम प्राणाः संरक्षिताः तस्यै मया आत्मैव समर्प्यते' इत्युक्त्वा राजहंस्या सह दण्डाधिकरणान्निरगात्।

कुमारो राजहंस्या सह रक्षिगृहादानीतं तमेव शकटमारुह्य हीरपुरमगात्। ततो जामातरं खसारं चादाय सायं कनकपुरमेत्य तत्र तैः सह चलच्चित्रमद्राक्षीत्। परेद्युः प्रस्थाय सर्वे सुवर्णपुरं गताः। बन्धवः सर्वे हर्षोल्लसिता अभूवन्। निश्चिते दिवसे राजहंसीकमलाकरयोरुद्वाहो महता वैभवेन प्रचलितः। सर्वे बुद्धिसागरस्य शेमुषीं प्रशशंसुः।

---

"हसत"

**भार्या**—गृहमभ्यागतो जनः मां पाचिकां मन्येत।
**भर्ता**—न भोजनानन्तरं तथा स मन्येत।

*

**उपाध्यायः**—अरे कस्तत्र शब्दः।
**शिष्यः**—आर्य, अयं गोपालो मां गर्दभ इत्याह।
**उपाध्यायः**—रे गोपाल, किं विस्मृतोऽहमत्र स्थितस्त्वया।

*

**माता**—यो मम वचनमक्षरशः अनुसरति तस्मै प्रतिमासमेकैकं पारितोषिकं दास्यामि।
**पुत्राः**—तत् पारितोषिकं पित्रा प्राप्येत। न त्वस्माभिः।

*

**याचकः**—(वैद्यस्य गृहं गत्वा) आर्य, श्रोत्रं मे बुभुक्षया कीलितमिवास्ति। यत्किञ्चित् क्रियताम्।
**वैद्यः**—श्वः प्रभाते चिकित्सालयमागच्छ। प्रक्षालयिष्यामि ते श्रोत्रम्।

*

**गृहस्थः**—भो रक्षिन् गतमासे चोरितत्वेन निवेदितमाभरणं मम पेटिकायामेव आसीत्। तन्माऽस्तु चोरान्वेषणप्रयासः।
**रक्षी**—किमिदानीमेवं कथनेन। कतिपयेभ्यो दिवसेभ्यः पूर्वं चोरो गृहीतः कारां च प्रवेशितः।

# सिंहलेषु संस्कृतम्

राहुलः साङ्कृत्यायनः

सिंहलाः संस्कृतान्वयिनः। क्रिस्तोः पूर्वं पञ्चमे शतके लाटदेशतः सप्तशतं जनाः उद्धतं नेतारं विजयमनुगताः पोतैः अस्मिन् ताम्रपर्णीति प्रथिते द्वीपेऽवातरन्। कालेन वङ्गमगधकाश्यादिभ्यो जनपदेभ्योऽन्ये मध्यजनपदीया अप्याजग्मुः। षड्योजनदूरे स्थितेभ्यो द्रविडेभ्योऽपि नृणां सार्थः कथं सिंहलं नाभजत्। परं ते संख्यायां सर्वदा दुर्बलाः प्राक् क्षीरोदकीभूताः पश्चात् पृथक् स्थितिभाजः। एवं सिंहलानां भाषा आर्यवंशीया एवेदानीमपि प्रवर्तते। इदमेव कारणं सिंहलेषु आदित एव संस्कृतानुरागस्य।

विजयसहायेषु ब्राह्मणा अपि बभूवुरिति तिष्यः पुरोहितः समर्थयति। संस्कृतं प्रवर्तमानभाषारूपेण बहोः कालात् प्रागेव निष्ठितम्। वैदिकवाणी तु शिष्टैरेव प्रायुज्यत। छन्दसि बुद्धवचनमवतारयितुमभ्यर्थितं कैश्चित् श्रावकैः, तच्च प्रतिषिद्धं सुगतेन बहुजनहितैषिणा[1]। विजयागमनात् सार्धद्विशताब्दानन्तरमशोकपुत्रो भिक्षुर्महेन्द्रः शशाक सिंहलराजं तदनुगांश्च तथागतस्य धर्मे दीक्षयितुम्। प्राचीनतमेष्वपि लेखेषु मगधभाषाया एवात्र प्राधान्यं दृश्यते लोकनिरुक्तितया। बुद्धमुखनिर्गताः वाक्यालयः सूक्तपङ्क्तयो वा तस्यामेव भाषायां, या मगधप्राकृतानां जननी। कालो हि बलीयान्, स्वरसेनापि वस्तूनि विपरिणम्यन्ते। सिंहल्यां मगधांशतः महाराष्ट्रांशो भूयस्त्वं लेभे। एवं पिटकधरमुखस्थैव बुद्धवाणी महाराष्ट्रीयतामभजत। क्रिस्तुवर्षारम्भतः सा हि पाल्यभिधा वाणी प्राकृतां भारतीमसूयत। सिंहलेषु सा स्वलिप्यन्विता उदग्भारतवदेव प्रावर्तत यावत् क्रिस्तुपञ्चमशतकम्।

'पाली 'काले संस्कृतवाणी सर्वथोत्सन्नेति न वक्तुमलम्। सा न केवलं धर्मभाषा, किन्तु नीतिशिल्पादीनामपि परिचयस्तदायत्त इति नूनमुत्तरकालवत्

---

[1] विनयक्षुद्रकवस्तु २३८।

तदापि अभवदेव संस्कृतस्य समादरो राजद्वारे विद्वद्गोष्ठीषु च। एवमपि सिंहले प्रथमतः संस्कृतग्रन्थप्रणेता क्रिस्तुचतुर्थशतकेऽनुराधपुराधीशः (३३७-३६५ क्रि.) बुद्धदासः, यः प्रणिनाय "सारार्थसङ्ग्रहम्" नाम चिकित्साग्रन्थं २६०० श्लोकमितम्।[1]

कुमारदासः (५०८–५१६ क्रि.) महनीयकीर्तिर्महाकविः स्तूयते राजशेखरेण कविराजेन (८०० क्रि.)

जानकीहरणं कर्तुं रघुवंशे स्थिते सति।
कविः कुमारदासश्च रावणश्च यदि क्षमः॥

कस्य न हृदयं हरति तस्य कान्तपदावली—

अयि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु वल्लभम्।
अरुणकरोद्गम एष वर्तते वरतनु संप्रवदन्ति कुक्कुटाः॥ इति।

अपिच—

शिशिरशीकरवाहिनि मारुते चरति वर्षभयादिव सत्वरः।
मनसिजः प्रविवेश वियोगिनीहृदयमाहितशोकहुताशनम्॥

न खलु घुणाक्षरन्यायेन तस्य कवेः प्रादुर्भावः। पितृघ्नोऽपि तस्य पितृव्यः काश्यपः (४७३–४८१ क्रि.) एव निर्मिमाय जगद्वन्द्यां सिंहगिरिचित्रशालां सिंहलविषये। हीनजन्मना भ्रात्रा पितरं निहत्य राज्ये स्वायत्तीकृते युवराजो मौद्गल्यायनः स्वतनयेन कुमारेण सह प्रपलाय्य पल्लवराजमाशिश्रियेऽष्टादशाब्दान्। काञ्चीपुर्यामेव कुमारः प्रैधत। सुवर्णद्वीप-यवद्वीप-कम्बोजादिष्वपि संस्कृतमादरास्पदं, तत्रापि कवयः शास्त्रधुरीणाश्च विपश्चितोऽजायन्त। अथापि न तेषां गणना भारतभूमिभुवां विदुषां पङ्क्तिषु। तत्र कुमारदास एव कविशेखरः। सुवर्णद्वीपीयस्य धर्मकीर्तेराचार्यस्य अन्तेवासितां गता दीपंकरसदृशा विद्वांस

---

[1] मुद्रितः १८०३ वत्सरे जिनालंकारमुद्रणालयतः कोलम्बनगरे।

इति न बहुकर्णगोचरम्। कुमारदासो न सिंहलद्वीपीय इति कुचोद्यमेव। येन स्वीये सिंहगिरौ अजन्त इव चित्रशाला स्थापिता, सोऽयं द्वीपः कथमपात्रं कुमारदासजनने।

असकृदस्मिन् द्वीपे ग्रन्थाः कलाप्रतीकाश्च निःशेषिता बर्बरैः। अन्ते पोर्तुगीजा अत्रापुण्यभाजः। इदमेव कारणं संस्कृतग्रन्थानामत्र कृच्छ्रतायाः। अथापि क्रमोऽनवच्छिन्न एव।

क्रिस्तुसप्तमशतके रुक्वेलिशैललेखो निगदति—

अनेन दुःखं व्यपनीय सर्वं पुण्येन लोकस्य सुखं समग्रम्।
दातुं प्रभुर्जन्मनि जन्मनि स्यां सदा क्षमावी करुणान्वितोऽहम्॥

अष्टमशतके संस्कृतसरस्वती कथं सरसेति तिरियशैललेखः प्रदर्शयति—

अविरतभक्तियुक्तहृदयैरवदातगुणैः
प्रथमतरप्रदानगुणमूर्तिभिरेकगुरौ।
भगवति शाक्यराजतिलके सुगते सुतरा-
मधिगतधातुगे ज्वलति सम्मुखमिव मुनौ॥

मुनिरपि मञ्जुवाङ्मदनदोषविषादहरः
कनकविभूषणोज्ज्वलविचित्रितगात्ररुचिः।
नियतमुपैति यत्र सुकुमारतनुर्भगवान्
तदहमपि प्रणौमि गिरिकण्डिकचैत्यवरम्॥

संस्कृतं हि काव्यकलादीनामुज्जीवकं यथा नो भारतीयानां भाषाणां तथैव सिंहलभारती तस्य वशवर्तिनी। दण्डिनः काव्यादर्शोऽद्युनाऽपि तिब्बत-बुधानां कविमार्गाख्यायी। सिंहलद्वीपे तत् "सियबसलकर" (सिंहलभाषालक्षण) नाम्ना भाषान्तरितं राज्ञा शीलमेघसेनेन (८३३–८५३ क्रि.)। अद्यापि सैव दण्डिनः कृतिः शिष्यहितविधायिनी।

क्रिस्तुनवमशतके धर्मतः संस्कृतपक्षपातिनो महायानस्यापि द्वीपेऽस्मिन् प्रभावं द्योतयति जेतवनारामस्य द्राघीयान् शिलालेखः, यत्र "एकैकश्च श्रामणेरः त्रिष्वपि ग्रामेषु प्रत्येकं प्रत्येकं स्थाप्यः। पालिका तत्र द्विगुणा न चीवरिका, विहारे नवकर्महेतोरपि तथा। यत्र ये नियुक्तास्तत्राविनाशस्तैरेव देयः। नियमः पञ्चोपदंशाः प्रस्थार्धं दधि प्रस्थप्रमितेन घृतेन विंशतिः पालिकाः" इति विहारनियमाः प्रख्यापिताः।

अस्मिन्नेव शतके चान्द्रानुगो वैयाकरणो रत्नश्रीज्ञानो बभूव, येन चान्द्र-पञ्जिका व्यरचि। सा च द्वादशशताब्दीयेन विद्वदग्रेसरेण सारिपुत्रेण 'पञ्जिका-लङ्कारेण' अलङ्कृता। कालकवलिते उभे अपि कृती।

द्वादशशतकारम्भे प्रसिद्ध आभिधर्मिकोऽनुरुद्धो बभूव। यस्य 'अभि-धम्मत्थसंगहो' नाम प्रथमो ग्रन्थः स्वविषये। अनेनैव विदुषा बुद्धगुणस्तवशतकं अनुरुद्धशतकापरनामकं संस्कृते प्रणीतम्। तस्य एकोननवतितमः श्लोकः—

स्वर्गावतारिणि विसिष्मियिरे च यस्मिन्
सम्मेनिरे च दधिरे च ववन्दिरे च।
सर्वाङ्गिणो मुमुदिरे च चचार्यिरे च
सम्बोधिमाचकमिरे च चकत्थिरे च॥

पुलस्तिपुर (पोलन्नरुव, १०५८–१२२० क्रि.) कालः सौवर्णः सिंहलेषु संस्कृतस्य। महाकाश्यप-सारिपुत्त-मौद्गल्यायनप्रभृतयः उभयभाषा-निष्णाताः एतस्मिन्नेव काले प्रादुरभूवन्। मौद्गल्यायनः चान्द्रव्याकरणमव-लम्ब्य पूर्णं पालिव्याकरणं जग्रन्थ। स्तुतश्च स केनापि[1]—

या शक्तिः पाणिनौ या च चन्द्रकात्यायनादिषु।
सेयं मूर्तिमती मन्ये मौद्गल्यायनरूपिणी॥

---

[1] संघराजेन राहुलेन 'पंचिकाप्रदीपे'।

क्रिस्तुद्वादशशतकमध्ये आसीत् सङ्घराजस्य सारिपुत्रः, येन चान्द्र-व्याकरणस्य सोपानभूतं बालावबोधनं प्रणीतं, यस्याद्यः श्लोकः—

भगवन्तं जगद्वन्द्यमभिवाद्य तथागतम् ।
बालावबोधनं बिन्दुं चान्द्रसिन्धौ करोम्यहम् ॥

पराक्रमबाहोः (११५३–११८६ क्रि.) महानिति लाञ्छनं नालीकम् । तस्य परिषदं विश्रुता विद्वांसः मण्डयाञ्चक्रुः । स स्वयमपि शस्त्रवत् शास्त्रेष्वपि पटुः । अस्य एकस्मिन् शिलालेखे [1] दृश्यते—

त्रिंशे भूमिभुजः पराक्रमभुजस्याब्दे तदादेशतः
श्रद्धाचारदृढाधिकारिविभुना नाम्ना महेन्द्रेण तु ।
उत्तुङ्गान्वयसम्भवेन विदुषा कूलप्राय सत्कीर्तिना
शैलन्तायतनाय दत्तविविधग्रामादिसङ्ख्योच्यते ॥

कलिङ्गाभिजनो निःशङ्कमल्लः (११८१-११८६) महापराक्रमबाहो-श्चतुर्थः सिंहलेशः, सोऽपि देववाण्यामनुरक्तः । तस्यापि लेखे—

वीरनिःशङ्कमल्लेन श्रीपराक्रमबाहुना ।
इदमध्यासितं भानुवंशक्षीरार्णवेन्दुना ॥

त्रयोदशशतकोद्भूतानां पण्डितानामन्यतमेन अनवमदर्शिना 'दैवज्ञ-कामधेनुः' इति फलितज्योतिषग्रन्थो निबद्धः, २६१८ श्लोकमितः । तस्य हि वन्दनश्लोकः—

प्रतिफलन्ति जगन्ति समन्ततो महति यद्धिषणामणिदर्पणे ।
स भगवान् मुनिरीहितसिद्धये हृदि चिरं मम गन्धकुटीयताम् ॥

---

[1] गलपोतविहारे पुलस्तिपुरीये ।

स चासीत् प्रतिराजविहाराधिपतिरिति सूचयति—

प्रतिनृपतिमहाविहारनेता क्षितिसुरवंशजनिर्मुनीन्द्रसूनुः ।
इदमनवमदर्शिनामधेयः परमकरोत् करणं परोपकारम् ॥

मुनीन्द्रसूनुः (बौद्धः) अपि भूसुरवंशजनित्वं अभिमन्यते । महावंशतो ज्ञायते—अयं हि द्वितीयपराक्रमबाहुकाले (१२१०-१२१३ क्रि.) सम्बभूवेति ।

चतुर्दशशतकारम्भे सिंहलेशः चतुर्थः पराक्रमबाहुः (१२८३-१३०२ क्रि.) 'कलिकालसर्वज्ञः' इति बिरुदभाग्बभूव । तस्य संस्कृतवैदुष्ये नास्ति सन्देहलेशः ।

पञ्चदशे शतके (१४१५-१४६७ क्रि.) षष्ठः पराक्रमबाहुः दानपत्र-मुखेनोदघोषयत्—

श्रीलङ्काधिपतिः पराक्रमभुजो राजा सुरेन्द्रालये
कारेत्वा प्रकृतिं प्रसन्नमनसा वृन्दारकायत्तताम् ।
षड् ग्रामान् विविधान् प्रदाय प्रवरान् सर्वोपहारान्वितान्
चक्रे चारु जनोपकारनिरतः स्थातुं शिलाशासनम् ॥

अस्य कालः संस्कृतस्य प्रतिष्ठायाः चरमः । तदैव सङ्घराजः तोट-ग्रामको राहुलः षड्भाषापरमेश्वरः (सिंहलभाषायाः कविकालिदासः) बभूव । तेन स्वीये व्याकरणग्रन्थे "पञ्चिकाप्रदीपे" अनेके ग्रन्थाः स्मृता उद्धृताश्च, येषु केचन भाष्यप्रदीपः, काशिका, लघुवृत्तिः, कातन्त्रं, भागवृत्तिश्चेत्यादि ।

प्रागपि सिंहलानां द्रविडानां च मिथः क्रूरः सङ्घर्षोऽभूत् । अथापि तेषु सौहार्दकारणमप्यासीत् । षोडशशतकारम्भतः पाश्चात्यानां शासनं पोर्तुगीजैरुप-क्रान्तम् । सार्धैकशताब्दीकाले (१५१७-१६५८ क्रि.) तैः दानवानामपि लज्जाकरं कृत्यमारब्धम् । सहस्रशः सिंहलाः वन्यजन्तव इव बलात् पाशबद्धाः द्वीपान्तरे दासरूपेण विक्रीताः । पोतारोहणतः प्राक् यत्रेमे निगडिताः तस्थुः

तस्य स्थानस्य नामाद्यापि "दासद्वीपः" इति कोलम्बनगरे प्रथते । आरभ्यतां देशनातः, तत्र असाफल्यं चेद् अस्तु कृपाणनिश्चयः, इत्यासीत् तेषां राद्धान्तः । कृपाणनिश्चयोऽपि न साधारणः । पोर्तुगीजभटाः कुन्तशिरसि शिशून् आरोप्य दर्शयन्ति स्म पितृभ्यः । आत्मगुप्तये जनैः पोर्तुगीजनामानि गृहीतानि, अभक्ष्यं मांसं च ऊरीकृतम् । क्वासीत् तदा सिंहलसंस्कृते रक्षा, संस्कृतस्य वा त्राणम् । क्रौर्यदीक्षायां सन्तसाविये (जेवियर्) अप्यभूत् सहभागी । तथागतस्य दन्तधातुः परःसहस्रवर्षेत आसीत् सिंहलानां प्राणवत् प्रियः समादरास्पदं च । स बलात् गृहीत्वा चूर्णीकृतो महोदधौ निक्षिप्त इति साभिमानं पोर्तगीजा उद्घोषयन्ति । मिथ्यैवासाविति बौद्धानां मतम् । सन्तसाविये यशस्वी धर्मदूतः पोर्तुगीजानाम् । तस्य शवोऽधुनापि कालतः गोवानगरे महाजनाय प्रदर्श्यते । साविये मृतः क्वचित् समुद्रेऽन्यत्र वा; गोवायां प्रदर्श्यमानः शवो नूनं तोटगमज (तीर्थग्रामज) राहुलस्येति दृढो विश्वासः सिंहलानाम् ।

सिंहलद्वीपे सहस्रशो ग्रन्थाः शतशः पूजास्थानानि ततोऽधिकाश्च श्रमणाः पञ्चत्वं प्रापिता धर्मान्धैः पोर्तुगीजैः । अनिहताः केचन वीराः गिरिपरिसरं श्रिताः । तेषां राजधानी श्रीखण्ड (काण्डी) नगरमसकृत् अपध्वस्तं परैः । पोर्तुगीजदस्यूनामपवाहनाय कण्टकेनैव कण्टकमिति नीतिमनुसरद्भिः सिंहलैः ओलन्दानां मैत्री समासादिता । एवं १६५८ तमे च क्रिस्तुवत्सरे पोर्तुगीजाः पलायिताः ओलन्दा आगताः । तानुत्सार्य १७५८ तमे क्रिस्तुवत्सरे आङ्ग्ला भारतीयसैन्यबलेन सिंहलस्वामिनः अभवन् यावत् १८४८ वत्सरम् । इयमासीत् सार्धत्रिशतवर्षव्यापिनी कालरात्रिः सिंहलानां संस्कृतस्य च ।

अथापि सिंहलाः सन्ति वीरा मनस्विनश्च । तस्मादेव तु एको भागः तेषां मेदपाटवत् १८१८ वत्सरं यावत् स्वतन्त्रः । भारतं तु ततः षट्शताब्द्याः प्रागेव परायत्ततामूरीचकार । पोर्तुगीजशासनकाले भिक्षुसङ्घो धर्ममूलभूत

उत्सादितः। वीरपराक्रमसिंहोऽन्तिमः सिंहलवंशिको नृपः अनपत्यो मृतः। तदनु तस्य श्यालः द्राविडः विजयराजसिंहः सिंहलेन्द्रः (१७३८-१७४७ क्रि.), तस्यानुजः कीर्तिश्रीराजसिंहः (१७४७-१७८० क्रि.) निजाग्रज इव बुद्धभक्तः। तेन ओलन्दानां साहाय्यमुपलभ्य स्यामदेशत आनाय्य भिक्षून्, पुनरपि सिंहलेषु भिक्षुसङ्घः स्थापितः। ततो धर्मवृद्धिवत् संस्कृताभिवृद्धिः प्रावर्तत।

कारतोटाभिजनः स्थविरो धर्मारामाभिधानः (१७४७ अब्दतः) तत्काल-प्रसूतो महाविद्वान् पालिसंस्कृतयोः। तेन किल कीर्तिराजानुजस्य राजाधिराज-सिंहस्य (१७८०-१७८२ क्रि.) प्रशस्त्यष्टकं व्यरचि। यथा—

श्रीमद्भानुकुलोद्भवं पृथुधनं तेजःप्रतापान्वितं
कुन्देन्दुद्युतिहारशुक्लयशसा सर्वासु दिक्षूज्ज्वलम्।
भूपालान्वयसौधकेतुसदृशं लङ्काक्षितीशानुग-
मव्यासुः सततं नरेन्द्रसहजं देवा उपेन्द्रादयः॥

सोऽयं कविः नवतिवर्षायुषि १८३७ तमे क्रिस्तुवत्सरे आङ्ग्लानां शासनकाले मृतः। प्रभूणां प्रशस्तिरचनं तस्य प्रकृतिरासीत्। तेनान्तिमः सिंहलराजो विक्रमराजसिंहः (१७८८–१८१५ क्रि.) पाल्यामष्टभिः श्लोकैः स्तुतः। १८१५ तमे क्रिस्तुवत्सरे आङ्ग्लराजः जोर्जिस्तृतीयः (१७६०–१७२० क्रि.) लङ्केश्वरत्वं प्राप। असावपि स्थविरकवेः स्तुतिभाजनं जोर्ज्यष्टके बभूव।

एकोनविंशशतकमध्यतः बुद्धो बुद्धधर्मश्च पाश्चात्यानां विदुषां श्रद्धा-भाजनतामुपागमत्। तेन नव उद्बोधः सिंहलबौद्धेषु उद्बभूव। नलन्दादिप्राचीन-विद्यापीठैरुत्प्रेरिता भिक्षवः अभिनवान् विद्याविहारान् समारभन्त।

सुमङ्गलपादैः संस्थापितो विद्योदयः, धर्मालोकपादैः समारब्धो विद्यालङ्कारश्च विद्याविहारत ऐषमे विश्वविद्यालयतां गतौ। द्वावपि

पुण्यसरणौ संस्कृते भक्तिं ज्ञानं चाधारयताम्। विद्यालङ्कारस्थापकस्य सहायोऽन्तेवासी च श्रीधर्मारामः स्वकालेऽद्वितीयः संस्कृतवित्, येन सिंहल-भाषान्तरतः कुमारदासस्य जानकीहरणमुद्धृत्य १८८१ तमे वत्सरे प्रकाशितम्। महात्मनोऽस्य ज्येष्ठसमकालीनवटुवत्तुवाभिजनो देवरक्षितो देववाणीप्रसारधुरन्धर आसीत्। अमुष्मिन् विंशे शतके तु विद्वांस उभयभाषानिष्णाताः, येषां नामगणनापि लेखविस्तरमपेक्षते। विद्यालङ्कारस्य दिवं गताः पुरोगा अस्मद्गुरवः श्रीधर्मानन्दपादाः, विद्योदयस्य च नायकाः प्रियरातचरणाः पालिसंस्कृतोभयपरमेश्वराः। "सद्धर्ममकरन्द" कृतो महानायकाः शीलस्कन्ध-पादाः परं गता अपि कथं विस्मरणीयाः, ये बहुन् वर्षान् संस्कृते पत्रिकां सम्पादयामासुः।

तेषां हि—

विकाशवत्यां गवि यस्य दीप्तौ रेमे क्षमा चित्रितपङ्ककल्पा।
निरस्तपङ्को जगदन्तवर्ती मुनिः सदा मद्धृदि वासमेतु॥

अस्मिन् द्वीपे विश्वविद्यालयैः त्रिभिरन्यैश्च शतसम्मितैः विद्यालयमहा-विद्यालयैः संस्कृतप्रसारव्रतं धृतम्। उच्यते च केनचिदद्यतनेन विदुषा— "सिंहलजीवनस्य साहित्यसंस्कृतिविज्ञानक्षेत्रेषु संस्कृतप्रभावः स्फुटः। भाषा-साहित्येतिहासादीनां गहने पथि विचरतां मनस्सु बलादायाति— चिरव्यतीतेषु दिनेषु भारतसभ्यता सिंहलसंस्कृतिश्च अविच्छेद्यसम्बन्धेन सम्बद्धे आस्ताम्; इदानीमपि सिंहलपण्डितस्य संस्कृतज्ञानमेव पूर्णतापादकं भवति" इति।[1]

अस्यैव (१९६०) वत्सरस्य द्वितीये मासे प्रकाशितं 'सद्धर्मशतकम्' ज्ञानसिंहप्रणीतं द्योतयति—

[1] Sanskrit Literature extant among the Sinhalese: 'सिंहलेषु उपलभ्यमानं संस्कृतसाहित्यम्' Dr. D. Pannasara, Colombo 1958, p. 266.

"न अनुराधपुरपुलस्तिपुरकालः अपुनरावर्तनीयः" इति । गायति ह्ययं कविः—

भूत्वा पुत्रो गुणगणनिधेः श्राद्धशुद्धोदनस्य
लब्ध्वा राज्यं कपिलनगरे क्षत्रियक्षेत्ररूपे ।
बिम्बादेवीं भवपरिचितां सांवृतां संविवाह्य
लेभे तस्यां सुतमभिमतं राहुलं साधुरूपम् ॥

नासाग्रस्थस्तिमितनयनो बद्धवज्रासनस्थः
उद्ग्रीवः सन् ऋजुतरतनुः स्मृत्युपस्थानपूर्वः ।
मारे तत्रागतवति मतिक्षोभमप्राप्य धीरो
यावत्सूर्योद्गमनमकरोत् क्लेशनिर्वापणं सः ॥

इदानीं धात्रीयं विगलितभरामोदमयते
　　तथाप्यन्धः कुर्यात् किमिति हृदयं चिन्तयति मे ॥ ४ ॥

युधिष्ठिरस्तु त्वरयति तदभिवन्दनबद्धादरो निजानुजान्। भवतु, अहमपि पाण्डवाविरहितो भवामि। प्रथममवलोकनीयो गाण्डीवी (नेपथ्याभिमुखमवलोक्य) किन्नु खलु, भीमोऽभिवर्तत इव। (निर्वर्ण्य) श्लाघनीयपराक्रमोऽयम्—

भीमो भीमपराक्रमः प्रकटितामर्षः खलान् कौरावान्
　　सङ्ग्रामे विनिहत्य सम्प्रति समुत्तीर्णप्रतिज्ञार्णवः।
स्कन्धन्यस्तगदो मदावलगतिः पादक्रमैर्मेदिनीं
　　डोलाभां कलयन्नुपैति यशसां राशिर्मनुष्याकृतिः ॥ ५ ॥

अवश्यमिदानीमस्य तत्र सान्निध्यं परिहरणीयम्।

(ततः प्रविशति भीमः)

**भीमः**—(सविनयनम्) भगवन्, भवदागमनमनुपालयत्यार्यः।

**वासु०**—अयमहमायातः। भीम, श्लाघनीयस्ते पराक्रमो धिनोति मे हृदयं, यदेकेनैव निहत्य कौरवशतं निस्तीर्णः प्रतिज्ञामहार्णवः।

**भीमः**—(सौदास्यम्) किमिदम्! वासुदेव, गर्हणीयं मे पराक्रमं श्लाघसे। धिङ्मे पराक्रमम्—

मृतकुञ्जरगात्रलीनदेहो युधि राधेयभयाद्विलुप्तलज्जः।
दृढतद्धनुरार्तिनुन्नपृष्ठो नितरामार्तिमहं यतोऽन्वभूवम् ॥ ६ ॥

**वासु०**—किमनेन, इदं तावज्जगति नैसर्गिकं खलु पदातिपदस्खलनमिव। अद्य भवता मदीयेन स्यन्दनेन द्वारकां गत्वा समानेतव्या पारिजातप्रसूनमाला।

**भीमः**—वासुदेव, किन्नु खल्विदं, धृतराष्ट्राभिवन्दनाय त्वरयत्यार्यः, भवान्पुनर्नियुङ्क्ते मामस्मिन्कर्मणि।

**वासु०**—मनोजवो ह्यस्मद्रथः, प्रतिनिवर्तिष्यसे तावता कालेन यावता च वयमपि धृतराष्ट्रमुपगन्तास्मः । कः कोऽत्र भोः ।

**दारुकः** (प्रविश्य)—अयमहमस्मि ।

**वासु०**—रथः ।

**दारुकः**—आनीयते । (निष्क्रान्तः)

**वासु०**—भीम, धृतराष्ट्रप्रीणनाय सा स्रगवश्यमर्पणीया ।

**दारुकः** (प्रविश्य)—सज्जो रथः ।

**वासु०**—तदविलम्बितमायाहि ।

**भीमः**—यथादिशति भगवान् । (निष्क्रान्तः)

**वासु०**—सद्यः प्रमादाद् दूरीकृतो भीमः । न तावदितरेषु भीतिरीदृशी । तथापि विचिकित्सा चिरात्पाण्डवेषु द्रोहैकताने धृतराष्ट्रे । भवतु, धनञ्जयमवलोक्यानन्तरकरणीयं करिष्यामि । (परिक्रम्य नेपथ्याभिमुखमवलोक्य) वीराग्रणीरयमेकाकी किमपि विचिन्तयन्नेकान्ते वर्तते । हन्त, दृगासेचनकमस्य दर्शनम् ।

वृषस्कन्धस्ततोरस्कः प्रांशुः पङ्कजलोचनः ।
जानुलम्बिभुजो भाति क्षात्रो धर्म इवात्मवान् ॥ ७ ॥

(ततः प्रविशत्यर्जुनः)

**अर्जुनः**—गाण्डीविनापि मया नैव कृतं समीके समीहितं कर्म । कथमिवाधुना वीरोऽहमित्यार्यधृतराष्ट्राय प्रणमामि ।

**वासु०**—(उपसृत्य) सखे, सङ्ग्रामे वीराग्रेसरानखिलानपि तृणाय मन्यमानः समार्जितानितरसाधारणकीर्तिरपि भवान् किमिदमेवं चिन्तयति ।

**अर्जुनः**—(सनिर्वेदम्) वासुदेव, मा तावदेवं मामाभाषस्व । राधेयनिषूदनमेकमेवालं मत्कीर्तिप्रतिष्ठायै ।

**वासु०**—(सस्मितम्) साधूक्तं सुहृदा ।

**अर्जुनः**—किमयमवहेलनपर्यायः ।

**वासु०**—किमिदमेवमभिधीयते ।

**अर्जुनः**—किमन्यत् सर्वथा नियतिप्रतिहतप्रतापप्रसरणो हि स वीराग्रणीः ।

**वासु०**—कथमिव ।

**अर्जुनः**—कथमिवेति ? श्रूयतां—

समये गुरुशापतोऽस्त्रलोपो द्विजरूपात्कवचच्युतिर्मघोनः ।
जननीवचनात् सकृत्प्रयुक्तप्रथितास्त्राग्रहणञ्च तस्य जातम् ॥ ८ ॥

**वासु०**—ततः किम् ?

**अर्जुनः**—तथा कुण्ठितपराक्रमप्रसरणोऽपि स धीरः कथमिव निषूदितो निर्लज्जेन मया । अपि नाम विस्मृतम्—

असृग्वसामांसरसातिपङ्किले महीतले मग्नमपास्तचङ्क्रमम् ।
रथाङ्गमुद्धर्तुमनाः पराङ्मुखो रवेः सुतो हन्त हतो मया युधि ॥ ९ ॥

**वासु०**—अलं चिन्तया । अधर्मैकतानानामेवमेव वधक्रमः । पुरा मयापि निहता ह्येवमासुरप्रकृतयो बहवः ।

**अर्जुनः**—(सोद्वेगम्) कथमासुरप्रकृतिः । (सदैन्यम्) भगवन्, अनुपपन्नमभिहितम् । नैव पश्यामि तस्मिन्नधर्मप्रवृत्तिम् । हन्त, वदान्यतायामनन्यसाधारणः—

अनिर्भेद्यं स्वतस्सिद्धं कवचं शत्रुभीकरम् ।
को वा दद्याच्छठायापि निकृत्यैनं विनापरः ॥ १० ॥

**वासु०**—(ध्यानमन्दम्) हन्त, अनुतापः । तत्रानुतापः । सखे, नैव दृष्टिस्ते तद्दोषे । विचारय मनसि, तस्य सहवासः कथमिति । विस्मृता

किमु सदसि द्रौपदीकेशाम्बराकर्षणावसरे तस्य परुषोक्तिः ? (नेपथ्याभिमुखमवलोक्य)—

सर्वशास्त्रार्थतत्त्वज्ञो मद्भक्ताग्रेसरो महान् ।
देवाभः सहदेवोऽयमित एवाभिवर्तते ॥ ११ ॥

(ततः प्रविशति सहदेवः)

**सहदे०**—(दूराद्वासुदेवमवलोक्य)—

पीताम्बरो नवपयोधरदेहकान्तिः कान्ताननापहसितामलपूर्णचन्द्रः ।
सद्यःप्रफुल्लनवपङ्कजलोचनोऽयं चेतो ममाद्य वसुदेवसुतो धिनोति ॥१२॥

(उपसृत्य सभक्त्युन्मेषमञ्जलिं बध्वा) भगवन्, भवद्दर्शनकुतुकी त्वरयत्यार्यः।

**वासु०**—अयमहमायातः । सखे, किमनया चिन्तया, पश्यामस्तावद्युधिष्ठिरम् ।

(सर्वे परिक्रामन्ति)

**वासु०**—(विलोक्य) किन्नु खलु, अजातशत्रुरपि चिन्ताकुल इव । अथवा—

क्रियमाणेषु कार्येषु धर्मसौक्ष्म्यं विचारयन् ।
अयं प्रवर्तते धीमान् स्वभावोऽयं महात्मनाम् ॥ १३ ॥

(सर्वे उपसर्पन्ति)

(ततः प्रविशति द्रौपदीनकुलाभ्यां सह पटगृहाभ्यन्तरे विष्टरोपविष्टो युधिष्ठिरः)

**युधि०**—(सनिर्वेदमुत्थाय) इदमासनम् (ताभ्यां सह प्रणमति) ।

**वासु०**—अलमलम् । पूज्यो हि भवान् । (युधिष्ठिरमुपवेश्यासने स्वयमुपविश्य) विजयी कृतकृत्योऽसि । तदितःपरं निष्प्रत्यूहमभिषिच्यताम् ।

**युधि०**—भगवन्, अलमीदृशेनेश्वरभावेन—

वने वसतिरेव मे मुनिजनैः समं सात्त्विकैः
प्रमोदमतनोत् तथा शमदमादिसंवर्धनैः ।

यथा च हृदि मे कदाप्यतुलविक्रमप्रक्रमो
मनागपि न विस्फुरेत् परुषवीरधर्मोऽधमः ॥ १४ ॥

**वासु०**—आर्य, किमिदं, क्षत्रधर्मेण भवदुदयैककाङ्क्षिणं मां निर्वेदपरो भवानेवं खेदयति ।

**युधि०**—भगवन्!

यदि मदुदयकाङ्क्षा पुण्डरीकाक्ष ते स्या-
दविदिततदुदन्तान् वञ्चयित्वा तदास्मान् ।
कथमिव रणभूम्यामग्रजन्मानमार्यं
नरविशिखशरव्यं कारयेः कारणज्ञः ॥ १५ ॥

**वासु०**—(स्वगतम्) कथमेते विपक्षपक्ष्यस्यापि राधेयस्य निधनेन सन्तप्यमानमानसाः । अथवा नैसर्गिकं खलु महात्मनां गुणैकपक्षपातित्वम् । (प्रकाशम्) आर्य, स तु धीरप्रकृतिः—

श्रावितोऽपि भवताञ्च बन्धुतां नान्वमन्यत भवत्समागमम् ।
यत्तदन्नपरिपोषितं वपुः तत्स एव मम बन्धुरित्यहो ॥ १६ ॥

अन्यदप्युक्तं तेन, 'अत्र तावदस्मज्जनन्येव भ्रातृभ्रातृव्यतानिदानम्' इति ।

**द्रौपदी**—(स्वगतम्) सुष्ठु भणितम् । (प्रकाशम्) तादृशगुणस्य तस्य वदनात् कथमिव तदा निस्सृतं तथा परुषवचनम् ।

**युधि०**—स्थाने खलु—

स्वस्वामिनि तथा भक्तिर्निजसर्वधुरन्धरे ।
यथा हर्षो भवेत् तस्य तथोक्तं तेन धीमता ॥ १७ ॥

**वासु०**—अलं, तद्गुणविस्तरेण, अभिमन्युजन्यस्मरणात्कस्य वा नोदेति मन्युः। तद्यास्यामः प्रकृतकरणीयकरणाय ।

**युधि०**—(सनिःश्वासम्) यथादिशति भगवान् । (सर्वे उत्तिष्ठन्ति)

**युधि०**—क्व वत्सो मध्यमः ।

**वासु०**—स तु तत्रानुपालयेदस्मदागमनम् ।

**युधि०**—कथं प्रथममात्मनः सविधि नाम संश्रावयन्
गुरुं स्वतनयात्ययप्रचुरशोकसन्तापितम् ।
नमामि स पुनः कथं बत भवेदनल्पागसि
स्वलोभविफलीकृतोच्छ्रितविवेकवृक्षे मयि ॥ १८ ॥

(निष्क्रान्तास्सर्वे)

(प्रथमोऽङ्कः)

---

## द्वितीयोऽङ्कः

(ततः प्रविशत्यनुजैः द्रौपद्या वासुदेवेन च सह युधिष्ठिरः)

**युधि०**—(समन्तादवलोक्य सनिर्वेदम्) भगवन्—
इतोऽरण्यं गच्छन्नहमनुजजायापरिवृतः
पुरीं यां प्रक्षीबद्विपतुरगसैन्यैर्निबिडिताम् ।
अपश्यं पूर्णां मद्विरहपरिदीर्णात्महृदयैः
जनैरप्यद्यैत्रा बहुलरजनीवास्ति विकला ॥ १ ॥

**सहदेवः**—(सानुतापम्) भगवन्, आर्यपुरप्रवेशोत्सवपिशुनमप्यनभिमतमिव सुयोधनतातस्य—
ध्वजालिभिश्चूतकिसालयैश्च नालङ्कृतेयं नगरी गरीयसी ।
पौराः स्वकार्ये निरता गृहेषु राजा यथा हन्त तथा प्रजाः स्युः ॥ २ ॥

**युधि०**—वत्स, न तथा मन्त्रयितव्यम्। तदभिवन्दनाय खलु प्रस्थिता वयम्। किञ्च, शोकातुराः खल्वार्याः।

(सर्वे रथेन परिक्रामन्ति)

**सह०**—आर्य, सौधद्वारमागतो रथः।

(सर्वे रथादवरुह्य सौधं प्रविशन्ति)

**युधि०**—(सनिर्वेदम्) भगवन्—

पुरा योऽभूत्सान्द्रो मदनुजमदाचार्यगुरुभिः
स एव प्रासादो भवति खलु रिक्तत्वविषयः।
अहो राज्ञश्चिह्नान्यपि पतिवियोगादिव भृशं
निचोलैराच्छाद्य स्वमुखमिह सीदन्ति सदने ॥ ३ ॥

(किञ्चिदन्तरं गत्वा परिक्रामति) (द्रौपदी सोद्वेगं पश्यति)

**वासु०**—अम्ब, किन्नु खलु भीतेवासि?

वृत्तावमाननां स्मृत्वा सभामण्डप एष ते।
अद्यापि रोदितीवार्ये निश्शब्दमनुतापतः ॥ ४ ॥

(किञ्चिदन्तरं गच्छति)

**युधि०**—किमिदम्!

गदामवष्टभ्य च वामपाणिना करं वलग्ने विनिवेश्य दक्षिणम्।
कटाक्षविक्षेपतृणीकृतद्विषद् वृकोदरो धीरतरोऽत्र तिष्ठति ॥ ५ ॥

**वासु०**—(सस्मितम्) उपसर्पामस्तावत्। (सर्वे उपसर्पन्ति)

**अर्जुनः**—(समन्तादवलोक्य)—

अयोघनं पाणियुगावतोल्यं पाषाणचक्रं भुजवेष्टनीयम्।
अधोमुखाबन्धनपीनदारुस्तम्भोऽपि सन्त्यत्र तले मृदाढ्ये ॥ ६ ॥

खुरलीगृहं खल्विदम्।

**वासु०**—आम, सुयोधनस्य ।

**द्रौपदी**—(निर्वर्ण्य) अहो ? आर्यपुत्रस्य प्रतिमैषा ।

**युधि०**—कथम् प्रतिमैषा ? अहो शिल्पकौशलम् ।

**अर्जुनः**—मन्ये सुयोधनकल्पितेति ।

**वासु०**—अथ किम् । भीमेन समं नियुद्धाभिलाषिणा तेन कल्पितेयम् ।

**अर्जुनः**—कथमनया नियुद्धम् ।

**वासु०**—अन्तर्नियन्त्रितयन्त्रप्रेरणया नियुद्धसन्नद्धा भवति । (इति यन्त्रं प्रवर्तयति)

(प्रतिमाभीमः गदां परिभ्रामयन् साटोपमभिद्रवति)

**युधि०**—(सोद्वेगम्) स्थापय यन्त्रम् । असह्योऽयमाटोपः ।

**अर्जुनः**—अनया समं नियुद्धमभ्यस्यतः सुयोधनस्य गात्रं व्रणकिणश्यामलं भवेत् ।

**युधि०**—क्षात्रो धर्मः किं वा न कारयेत् ।

**वासु०**—अत एव चिन्तितं मया ।

**युधि०**—किं तत् ?

**वासु०**—(कर्णे) एवमिव । अप्युपसर्पामो यावदार्यम् ।

**युधि०**—तर्हीयम्—

**वासु०**—तदवसरे समागमिष्यति । (सर्वे परिक्रामन्ति)

**वासु०**—(नेपथ्याभिमुखमवलोक्य) हन्त ! इयं सा गान्धारी पतिशोकसमभागिनी वर्तते—

स्वयमपि पतिसारूप्यं बध्वा नेत्रे पटेन संप्राप्य ।
धन्येयमेव लोके पतिव्रताभिः प्रशंसिता साध्वी ॥ ७ ॥

(ततः प्रविशति गान्धार्या सह धृतराष्ट्रः)

धृत०—पाण्डवप्राणो हि वासुदेवः ।

गान्धारी—अथ किमथ किम् । अत एवास्माकमीदृशी दशा ।

वासु०—(सर्वैस्समुपसृत्य) अपि कुशलम् ?

धृत०—कोऽयम् ?

वासु०—अहमस्मि वासुदेवः ।

धृत०—किं वासुदेवः ? तात, किं कुशलं पृच्छसि ?

वासु०—आम ।

धृत०—अथ किं, कुशलमेव, किमितोऽपि कुशलमन्यत् ।

वासु०—अलं सन्तापेन ।

धृत०—वसुदेवात्मज, सर्वं कारयित्वा किमु मां सान्त्वयितुं सन्निहितः ?

वासु०—किं मया कारितम् ? यत्र धर्मस्तत्र जयः ।

धृत०—अथ किं, सोऽपि भवानेव ।

गान्धारी—(सशोकम्) एवंविधधर्मदूरीकरणादेव पुत्राणामुपनता दशेयम् ।

वासु०—अलं गतानुशोचनेन । प्रतीक्ष्याभिवन्दनाय पाण्डवाः सम्प्राप्ताः ।

धृत०—कथम् ? पाण्डवाः ? प्रतीक्ष्याभिवन्दनाय ?

कथं प्रतीक्ष्यो ननु पाण्डुपुत्राः भवाम्यहं वागुचितेव नेयम् ।
मद्वञ्चनाबीजविवृद्धवृक्षफलं हि भुक्तं सुचिरं भवद्भिः ॥ ८ ॥

युधि०—शान्तं पापं शान्तं पापम् ।

वासु०—अयं धर्मराजः प्रणमति ।

धृत०—(धर्मराजं परामृश्य) अयं धर्मराजः, न . . . न ।

**वासु०**— सारयति द्रोणयुद्धप्रसङ्गम् ।

**धृत०**—अजातशत्रुः, न, . . तथा . . न ।

**युधि०**— सम्यगभिहितमार्येण, यतः सहजवैरी ।

**धृत०**—युधिष्ठिरो ननु ।

**युधि०**—अथ किम् । युधिष्ठिरः प्रणमति ।

**धृत०**—वत्स, निष्कण्टकं राज्यमिदानीमनुभुङ्क्ष्व ।

**वासु०**—अयं सिन्धुराजगन्धसिन्धुरकेसरी किरीटी प्रणमति ।

**धृत०**—(अर्जुनं परामृश्य) कोऽयं? आर्यगाङ्गेयपातयिता ननु ।

**वासु०**—अथ किम् । क्षीबक्षत्रियमहावृक्षषण्डकठोरकुठारभार्गवदर्पदमनस्य भीष्मस्य द्वन्द्वयुद्धप्रदाता धनञ्जयः ।

**धृत०**—(शनैः) द्वन्द्वयुद्धप्रदाता! (उच्चैः) कर्णहन्ता ननु ।

**अर्जुनः**—अथ किम् । सव्यसाची प्रणमति ।

**धृत०**—वत्स, वासुदेवसखस्य ते के वयं निग्रहानुग्रहयोः ।

**वासु०**— इमौ यमौ प्रणमतः ।

**धृत०**—(उभावपि परामृश्य) माद्रीतनयौ वत्सौ ननु । क्व सतीमणिः?

**द्रौपदी**—अहं वन्दे ।

**धृत०**—अम्ब, सतीमणे, क्वासि? इतः परमस्य सौधस्य त्वमेव लक्ष्मीः । नास्त्यन्यः?

**वासु०**—अस्ति, खुरलीगृहे ।

**धृत०**—हुं, अद्यापि खुरलीव्यसनम्?

**वासु०**—अयमायातः (निष्क्रान्तः) ।

**द्रौपदी**—(नेपथ्याभिमुखमवलोक्य) आर्यपुत्रो मत्तकुञ्जरगमन आगच्छति ।

**अर्जुनः**—दर्शनीयः खल्वयम् ।

(ततः प्रविशति वासुदेवेन समं प्रतिमाभीमः)

**वासु०**—भीमोऽयमभिवादयते ।

**धृत०**—(सावेगम्) कथं! . . कथम्! भीमः! क्व भीमः। अपि नाम सन्निहितः? किमु गदया? (उत्थाय ससम्भ्रमं गगने भुजौ प्रसारयति)

**युधि०**—(स्वगतम्) हन्त, शोकावेगः ।

**वासु०**—अलं सम्भ्रमेण, उपविशतु भवान् ।

**धृत०**—सम्भ्रमः? कस्य सम्भ्रमः? उपविशामि, उपविशामि ।

(उपविशति)

**वासु०**—मनः सान्त्वय ।

**धृत०**—नहि क्षुभितम्। क्व भीमः?

**वासु०**—अयमिह ।

**धृत०**—अपि प्रणतः, क्व तिष्ठति?

**वासु०**—अत्र हि (गदां स्पर्शयति) ।

**धृत०**—(परामृशन्) इयं गदा, न . . न, . . कालदण्डः, कथं, . . . स्त्री खल्वियं, नूनमस्त्रपा, . . नहि नहि, . . अचेतनेयं, नूनं गदैव, प्रिये, अपि पश्यसि, इयं सा, कृतपारणा ।

**गान्धारी**—(सगद्गदम्) न खलु पश्यामि ।

**धृत०**—किन्नु खलु, न पश्यसि? आं, ज्ञातम् स्रंसय नयनग्रन्थिम् ।

**गान्धारी**—मास्तु, मास्तु, किमिदम्? मनः पर्यवस्थापयितुमर्हत्यार्यपुत्रः ।

**धृत०**—किं क्षुभितम्? तर्हि, पर्यवस्थापयामि । (क्षणमिव निर्व्यापारो भवति) ।

**युधि०**—वत्सं वात्सल्येन द्रष्टुमर्हत्यार्यः ।

**धृत०**—अथ किमथ किम् । क्व वत्सः, एहि वत्स । कण्टकितां गदामिमां परिभ्रम्य पातितवतस्ते पाणिनानेन कीदृशी व्यथानुभूता स्यात् । (तत्र तत्र पाणिं प्रसार्य प्रतिमाभीमपाणिमवलम्ब्य) । हन्त, अयमपि गदा-स्पर्श एव । (उत्थाय) एहि वत्स । (आ मस्तकादापाद सरिङ्खणं कम्पमानेन पाणिना परामृश्य) किमर्थं मौनमवलम्बसे? किमनुता-पेन? गतं तु गतमेव । मामाभाषस्व, दृढालिङ्गनेन मामानन्दय । (इति दृढतरमालिङ्गति)

(प्रतिमा सनिर्घोषं चूर्णीभूय पतति)

(धृतराष्ट्रः सरक्तोद्गारं मूर्छितः पतति)

(सर्वे सावेगं पश्यन्ति)

**गान्धारी**—(सावेगम्) किमिदम्?

**वासु०**—(सावेगम्) हन्त, अत्याहितम् ।

**गान्धारी**—कथं, हतो वत्सः, हा वत्स! (मूर्छिता पतति)

**युधि०**—समाश्वसिहि ।

**गान्धारी**—(लब्धसंज्ञा मन्दमुत्थाय) हन्त अद्यापि कपटस्थानमार्यपुत्रहृदयम् ! आर्यपुत्र, किन्नु खल्विदम् ।

**वासु०**—सोऽपि मूर्छितः ।

**गान्धारी**—(सावेगम्) कथं, मूर्छितः! (अन्वेषणं नाटयन्ती धृतराष्ट्रं परा-मृश्य) समाश्वसिहि । (वीजयति)

**धृत०**—(संज्ञां लब्ध्वा शयान एव) हा वत्स, वृकोदर, मद्भुजपञ्जरं प्रविश्यो-परतोऽसि! धिङ्मां दुर्मेधसम् । युधिष्ठिर, क्वासि? क्षमस्व कपटिनं माम् । किन्नु खलु नाहमभवं भीमानुयायी ।

**गान्धारी**—कथमत्र व्यवसितमार्यपुत्रेण ।

**धृत०**—(उत्थायोपविश्य) प्रिये, न मया, क्रोधेन, हा, अथवा मयैव ।

**वासु०**—महाराज, अपि सौहित्यम् ।

**धृत०**—(साक्षररिङ्खणम् ) सौहित्यं . . . सौहित्यम् ।

**वासु०**—अथवा ईर्ष्याकापट्यकषायितं ते हृदयमपराध्यति ।

**धृत०**—अपराध्यति मे दीर्घमायुः ।

**वासु०**—किमायुषा प्रवृद्धं कापट्यम् ।

**धृत०**—प्रष्टव्योऽत्राभिषिक्तः पाण्डुः ।

**वासु०**—(सामर्षम् ) किन्तु खलु, असन्निहितः प्रष्टव्यः ? न ते हृदयम् ।

**धृत०**—किं, किं, हृदयम् ? नास्ति हृदयम् यदश्राव्यश्रवणेन भस्मीभूतम् ।

**वासु०**—हुं तथा यदि, नावकाशोऽपीदृशानर्थकन्दलस्य ।

**धृत०**—(सानुतापं शनैः) तथा यदि, . . . अनर्थकन्दलस्य . . . हन्त . . . नावकाशः, सत्यमभिहितं, अस्ति मे हृदयम् । (उच्चैः) वासुदेव, अस्ति हृदयम् , तर्हीदानीं न तादृशम् ।

(प्रविश्य भीमः—विलोक्य सावेगं वक्तुमुद्युङ्क्ते)

**वासु०**—(संज्ञया निवार्य) अपि विप्रतीसारक्षालितं हृदयम् ।

**धृत०**—(क्षणमिव मौनमवलम्ब्य सनिर्वेदम्) वासुदेव, सशपथं निवेदयामि, हृदयादपक्रान्तः कापट्यज्वरः ।

**वासु०**—अपि प्रसन्नमान्तरं चक्षुः ? ।

**धृत०**—भवच्चरणारविन्दस्पर्शेन शपामि, सत्यं प्रसन्नम् ।

**वासु०**—बाह्यमपि तथा भवतु ।

**धृत०**—(चक्षुः परिमृज्य समुन्मील्य भीममवलोक्य) प्रिये, क्वासि, (गान्धार्या नयनपिधानमपाकृत्य) प्रिये, दिष्ट्या . . . । (भीमं दर्शयति)

**गान्धारी०**— (निर्वर्ण्य) कथं, . . . हन्त, . . . अयं, . . . वत्सः, . . . भीमः ।

**धृत०**—नहि, नहि, अस्य द्वितीयः प्राणः (वासुदेवं दर्शयति) ।

**भीमः**—किमिदम् (प्रतिमाशकलं पश्यति) ।

**वासु०**—पृच्छैनम् (धृतराष्ट्रं दर्शयति) ।

**गान्धारी**—भगवन्, मा पातय क्षते क्षारम् ।

**धृत०**—(सानन्दं सर्वान्निर्वर्ण्य) कथं, अयं धर्मराजो ननु ।

**वासु०**—अथ किम् ।

**धृत०**—अहो मुखे शान्तता, अयमेव भीमः ।

**वासु०**—कः सन्देहः ।

**धृत०**—हन्त हसता मुखे, अयमर्जुनो ननु ।

**वासु०**—अथ किं, मम सखा ।

**धृत०**—सत्यं, ते सखा, अहो ? मुखे गाम्भीर्यं, इमौ सौन्दर्यखनी यमौ, दिष्ट्या पश्यामि । इयं सा द्रौपदी, अहो, सौमङ्गल्यसौभाग्यं मुखे, (प्रतिमाशकलमवलोक्य) हन्त, नावलोकितानि मद्वत्सानां मुखानि, (सबाष्पं दीर्घं निःश्वसिति) ।

**वासु०**—अलं, सन्तापेन, विचित्रा कर्मणो गतिः ।

**धृत०**—साधूक्तं, कस्मै सन्तप्यते ।

**वासु०**—मारुते, प्रतीक्ष्यं पितृव्यमभिवादय (भीमः प्रणमति) ।

**धृत०**—वत्स, वृत्तं मा मनसि धारय, अन्योऽसि संवृत्तः । समार्जितं राज्यं चिरमनुभुङ्क्ष्व भ्रातृभिः ।

**वासु०**—अर्पय पारिजातस्रजमार्यकन्धरायाम् ।

(भीमः—तथाकर्तुमुद्युङ्क्ते)

धृत०—मास्तु, मास्तु (इत्यादाय वासुदेवकन्धरायामर्पयति)।

वासु०—किमिदम् ?

धृत०—सङ्कल्पमात्रप्रकल्पितजगत्त्रयं भवन्तमन्तरा कोऽन्यः प्रतीक्ष्यः।

गान्धारी—भगवन्! सर्वज्ञस्य कृपया नास्माकमासीदनुतापपर्यवसानमन्तः-करणम्।

वासु०—(सस्मितम्) अम्ब, स्वप्राणपरिरक्षणे को वा न जागरूकः।

धृत०—तात, आसीन्नेत्रकार्यं, पुनःप्रतिगृहाण बाह्यं नेत्रम्।

वासु०—तथास्तु।

धृत०—(साञ्जलिबन्धम्) भगवन्! क्षन्तुमर्हति चिरादपराधिनं माम्।

वासु०—पाण्डवेषु वात्सल्यवतः किं ते भूयः प्रियमुपहरामि।

धृत०—साधुभ्यः पाण्डुपुत्रेभ्यो दापिता भवता मही।
शुद्धचित्तश्च शान्तोऽहं किमितोऽप्यस्ति मे प्रियम्॥ ९॥

तथापीदमस्तु (भरतवाक्यम्)—

नेतारः परिपालयन्तु भुवनं न्याय्येन सम्यक् पथा
स्याद्गोब्राह्मणमण्डलाय कुशलं लोकोऽस्तु नित्यं सुखी।
कासारा रसपूरिता विटपिनः पुष्पैः फलैस्सम्भृताः
सस्याढ्या धरणिश्च सन्तु समये वर्षन्तु धाराधराः॥ १०॥

(निष्क्रान्तास्सर्वे)

द्वितीयोऽङ्कः

# पौरवदिग्विजयः

एस्. के. रामचन्द्र राव्

[भारतभूमिभागस्य वायव्यमहाद्वारे यवनदण्डनायको अलिकसुन्दरः दिग्विजयमुद्दिश्य आगतः। देशस्यान्तस्तु सुवास्तुनगर्यां पौरवो वितस्तातीरस्थजानपदस्य गणनायकः तक्षशिलाया राज्ञा आम्भिना सह मन्त्रयन् स्थितः।]

**आम्भिः**—न तावन्मन्ये सुकरमिदं, महाराज! अमी यवना अजय्या एव। अल्पसंख्याका अपि सुसज्जिताः। पदातिनोऽप्रतिहतपराक्रमिणः। अश्वारूढाः सर्वेऽपि महाशूराः, इतरे तु अतिरथमहारथाः। एतेषां दण्डनायको अलिकसुन्दरस्तु देवेन्द्र इव समर्थः। नैव जानाति स पराजयम्। अतोऽहं मन्ये, महाराज! तैः सह विग्रहोऽनुचित इति।

**पौरवः**—आम्भिराज! किमहं शृणोमि त्वन्मुखादेतानि वचनानि? ते चेद्यवनाः तादृग्बलिष्ठाः किं वयं दुर्बलाः? किं न जानासि तेषां पक्षे एकोऽपि नास्ति गज इति? क्रुद्धश्चेद्गजः कुत्र पदातिनः, के वा अश्वाः? वयं तु गजसमृद्धाः। किं च सुसज्जिता अपि ते अल्पसंख्याका एव। न ते पारयन्ति जेतुमस्मान् असंख्याकान्। संप्राप्ते समरे तु तान् यवनान् परावर्तयितुं निःसंशयं शक्नुमः।

**आम्भिः**—महाराज! न जानासि तेषां बलम्। शस्त्रक्रियायां सङ्ग्रामविद्यायां च सुशिक्षितास्ते भटाः, सर्वे चतुराः, अजय्या यमभटा इव। अस्माकं पदातिसेना तु गवां गोष्ठीव असम्भाविता, अशिक्षिता, स्वैरशीला च। गजः क्रुद्धश्चेन्महाराज, किं स जानाति 'इमे स्वपक्षीयाः, इमे शत्रवः' इति? सर्वान् अपि हन्यात्! क्रुद्धे विवेकस्य का वार्ता? किं बहुना, महाराज! सर्वथा वयमसमर्थाः तान् अभियोक्तुम्। यथा यथा विचारयामि तथा तथा सन्धिं विना नान्यमुपायमुत्पश्यामि विपत्तिमेतामुत्तर्तुम्।

**पौरवः**—किमिदं, आम्भिराज! ईदृगधीरं तव हृदयम्! भवेदपि बलिष्ठः शत्रुः, किं शरणागतिः क्षात्रधर्मः? न, न। कदाप्यहं न समरार्थमागतेन शत्रुणा सह सन्धानं चिन्तयामि। मा ते भूदत्र संशयः। श्रुता किं त्वया कदापि सिंहस्य जम्बुकवृत्तिः? राज्ञः पराक्रमो न चेत् किमित्यस्मान्मानयन्ति महाजनाः? यदि कश्चिद्यवनः स्थितेष्वस्मासु अस्मज्जन्मभूमिमेतामाक्रम्य राज्यं कर्तुमारभेत, किं न वयं नीताः स्याम अपहासस्य आस्पदतां लोके? प्राप्ते तु दास्ये, आम्भिराज, कथं तिष्ठेत् धर्मः? नष्टे धर्मे किमहो जीवितेन? क्षत्रियाः किल धर्मरक्षकाः। धर्मस्य च रक्षणार्थं, तद्द्वारा जनस्य च तुष्ट्यर्थं ते महीं शासति। आर्यान् जनान् अन्यदेशीयानां श्रृङ्खलायां योक्तुं नार्हा वयम्!

**आम्भिः**—सत्यं, महाराज, यदुक्तं त्वया। जानाम्यहं च क्षात्रधर्मम्। अद्य तु अपूर्वा परिस्थितिः। क्षात्रधर्मः सर्वथा निरर्थको भवत्यत्र। सर्वनाशोऽपि भवितेति मन्ये। युक्तं किमार्यान् जनान् मृत्युमुखे क्षेप्तुम्?

**पौरवः**—मा एवं भण, आम्भिराज! जयापजयौ विधिना नियतौ। नात्र कार्या पुरुषेण विचारणा। क्षात्रधर्मः सनातनः, सार्वकालिकः, न परिस्थितितन्त्रः। यदि दैवात् पराभवो भवेन्नः, मरणमेव वरं तदा। न पराजितः परतन्त्रो जीवितुमर्हति क्षत्रियः! कथमिदानीं, आम्भिराज, तवापि ईदृशी चित्तविकलता प्रस्तुता? किं न श्रुतं त्वया—गतवासरे पुष्करावतीं प्रविशता अलिकसुन्दरेण दृष्टः कश्चिद्ब्राह्मणो मार्गागतः, "इहागच्छ" इत्याहूतश्च। ब्राह्मणस्तु तत्रैव स्थितः "यदि मया सार्धं संलपितुमिच्छसि तर्हि त्वमेव इहागच्छ" इति प्रत्युवाच। तेन क्रुद्धो यवनराजः कोशात् कृपाणमाकृष्य "अरे, जानासि किं कोऽहमस्मीति?" इति पप्रच्छ। ब्राह्मणस्तु स्मित्वा—"जानामि सुष्ठु त्वां मम स्वातन्त्र्यमपहर्तुमागतं चोरम्" इति निरुद्विग्नोऽवदत्।

नितान्तं क्रुद्धः अलिकसुन्दरस्स दन्तान् कटकटायमानो "अरे दुर्विनीत! पश्येदम्" इति गर्जन् असिं तस्य पुरतोऽनर्तयत्। ब्राह्मणः उच्चैर्विहस्य—"अरे वीर! अतिसाहसीव दृश्यसे! छिन्धि मम विहासं तव असिना यदि शक्तोऽसि, पश्यामि ते बलम्!" इत्युवाच।

**आम्भिः**—ब्राह्मणास्तु विचित्राः पुरुषाः, महाराज! नाभिनन्दन्ति ते जीवितं वा मरणं वा। किं न त एव कारणभूताः श्रीनगर्यां सम्भूतस्य हत्याकाण्डस्य? कुभप्रान्ते सर्वान् पर्वतवासिनः चोदयित्वा यवनानां विरुद्धं समरे योजयित्वा तैः सह स्वयमपि हता हतभाग्या ब्राह्मणा एव। अत्र परत्र च, महाराज, तेषां करणीयं नास्ति। वयं तु महीशासकाः, जनजीवनपालकाः। महाराज! सर्वजनहितसाधना दृष्टिरावश्यिका नः। शुभाशुभविवेकोऽपि क्षात्रधर्मः।

**पौरवः**—अहो यवनानां पादेषु स्वदेशसमर्पणं विवेकं मन्यसे त्वम्? आम्भिराज! तव विवेकस्त्वय्येव तिष्ठतु। महाजनानां स्वातन्त्र्यरक्षणार्थमेवाहं नियुक्तः। सैव मम पवित्रतमा दीक्षा! कदाप्यहं जीवन्न व्रतभ्रष्टो भवेयम्, सत्यम्।

[पौरवः आसनादुत्थाय इतस्ततः चिन्ताक्रान्तो विचरति। तस्य मुखे उद्वेगः, प्रतिष्ठा, अचला च प्रतिज्ञा चित्रिताः। तत आम्भिरुत्थाय गन्तुमारभते। द्वारगते च तस्मिन् आम्भौ पौरवः क्रुद्धशार्दूल इव परावृत्य गर्जति।]

**पौरवः**—दुर्बल! पौरवसिंहस्य पुरत आगत्य शरणागतिं मन्त्रयितुं न लज्जसे!

**आम्भिः**—[द्वारि स्थितः] महाराज! तत्र कोऽपराधः? यत्स्वशक्त्या न साध्यं तद्युक्त्या एव साधयितव्यम्। किं बलिष्ठोऽहमिति मत्वा यः कोऽपि शिलां शिरसा घट्टयति?

[प्रविशति अकलङ्कपुर्या गणनायको हाराणः पौरवं द्रष्टुम्। प्रस्थास्यमानं आम्भिं दृष्ट्वा।]

**हाराणः**—[आत्मगतम्] अहो आम्भिराजः! अयमत्रैव तिष्ठति! [प्रकाशम्] "भो आम्भिराज! दिष्ट्या लब्धो भवान्। केयं त्वरा? प्रष्टव्यं किञ्चिदस्ति। तिष्ठतु भवान् कृपया।

[आम्भिः पुनरागत्य तिष्ठति। पौरवो हाराणश्च तिष्ठतः।]

**हाराणः**—आम्भिराज! गतेऽहनि भारद्वाजमाणवकाद् वार्तामेकामश्रौषम्। . . न जाने तत्र कियान् सत्यांश इति . . .।

**आम्भिः**—प्रकाशय वार्ता, हाराणचन्द्र।

**हाराणः**—[आम्भेर्मुखं विलोकयन्] यवनेन अलिकसुन्दरेण सह गुप्तसन्धाने प्रवृत्तोऽसि त्वमिति।

**आम्भिः**—[भूमौ निविष्टदृष्टिः] आम्! तत्र कोऽपराधः?

**पौरवः**—[सहसा उत्थाय कोपाग्नितप्तनेत्रः आम्भिं प्रति बद्धमुष्टिः] कोऽपराधः! अरे रे जम्बुक!

**आम्भिः**—[ईषद्विहस्य] महाराज! यत्र सिंहोऽप्यसमर्थः तत्र युक्तिचतुरो जम्बुक एव समर्थः। [हाराणं प्रति] "आं, हाराणचन्द्र, अहमलिकसुन्दरस्य मैत्रीं साधयितुं प्रवृत्तः। अन्यथा सर्वनाशः अनिवार्य एव। यदि मां मन्यसे स्वजनघातकं तर्हि नाहमेकाकी। प्रागेव उपस्थानगर्याः शशिगुप्तः, धवलवत्याः गुणभद्रः, मेरुदर्शिपुरस्य मधुरकः, अन्ये च बहवो दण्डनायकाः अलिकसुन्दरस्य सुहृद्वर्गं प्रविष्टाः।

**पौरवः**—[सरोषम्] निर्लज्जाः श्वानः!

**आम्भिः**—आं आं महाराज! सिंह इव मत्स्यकानां राजा अश्वको अलिकसुन्दरेण अयुध्यत। परिणामश्च विदित एव! दुर्गममभेद्यं सुभद्रमवर्णानां दुर्गव्यूहं अनायासेन भित्त्वा तत्रस्थानां वीरशतानां प्राणान् कोऽन्यो जुहुयात्? धूर्ता दाक्षिणात्यवणिजः द्विसहस्रबला अपि

अर्धरात्रे तं हन्तुमुद्युक्ताः, तेनैव हताः किल? युद्धविशारदो बली हस्तिनगर्या नायकः प्रथमं तमनादृत्य, बहुधा संतप्य पश्चात् तमेव शरणमगात्। महाराज! न जानासि, महाराज! अलिकसुन्दरस्य सामर्थ्यम्। स हि विरुद्धानाममर्षणः, अपकर्तॄणां प्रतिकर्ता, मित्राणां तु परममित्रम्।

**पौरवः**—अरे जम्बुक! अस्मान् संहर्तुमेव समागतेन शत्रुणा सह मैत्री कथं वा क्रियेत? तन्मैत्री नाम शरणागतिरेव! त्वत्सदृशा निराशा भारतधरित्रीभारभूताः! उच्छिष्टेन उदरम्भरिः श्वेव तमनुसृत्य, आत्मानं विक्रीय आगतः किं वा प्रलपसि? यदि मृत्युरेव यवनसेनानीर्भूत्वा आगच्छेत् तदापि नाहं समराद्बिभेमि! . . अपेहि, मूर्ख!

**हाराणः**—समाश्वसितु महाराजः। उद्वेगेनालम्॥ [आम्भिं प्रति] आम्भिराज! अलिकसुन्दर इदानीं कुत्र स्थितः?

**आम्भिः**—[उत्थाय] "हाराणचन्द्र! इत आरभ्य सप्तमे दिवसे स्वसेनासमेतः स सिन्धुं तीर्त्वा तक्षशिलां प्रविशति। तत्र तमहमुचितरीत्या स्वगतीकृत्य तत्सम्मानार्थं भोजनपरिषदमेकां कल्पयिष्यामि। तदर्थमेव पौरवसिंहमेनमामन्त्रयितुमागतः। वक्तव्यमुक्तम्। गच्छाम्यहमिदानीम्। तस्य मौर्ख्यमेव तमत्ति! [गच्छति]।

**पौरवः**—[जातरोषः] "अरे क्षुद्र! त्वमभ्यागतः मम निवास उपस्थितः। अत एव प्राणैर्न वियुक्तः! [हाराणं प्रति] हाराणचन्द्र! सुष्ठु जानाम्यहं अलिकसुन्दरो वीर इति। परन्तु अस्मद्देशीया वीराः श्वान इव तस्य पुच्छं गृहीत्वा तमनुसरेयुरिति नाचिन्तयम्। किमेतत्सत्यं यद् आम्भिनोक्तम्?"

**हाराणः**—सत्यं महाराज! नास्त्यत्रासत्यगन्धोऽपि। अस्मद्देशीया राजानो बहवः यवनपक्षं प्रविष्टाः। किं बहुना? तव आप्तमित्रमभिसरपुत्रोऽपि अलिकसुन्दरस्य सकाशं दूतमेकं प्रेषितवानिति श्रुतं मया।

**पौरवः**—[सहसोत्थाय] किं किमभिसरपुत्वः!

**हाराणः**—आम् महाराज! राजानस्तावदेवम्, महाजनास्तु अस्मद्देशीया यवनान् रोद्धुमुद्युक्ताः। अलिकसुन्दरस्यानुवर्तिनं शशिगुप्तं कुभायां नद्यास्तीरे दृष्ट्वा काचिद्ग्रामवासिनी युवतिः तस्योपरि गोमयं प्रक्षिप्य 'अरे ग्रामसिंह! अपि यवनानां पादधूली रोचते?' इति पप्रच्छ। ईषदपि न बिभ्यति तेभ्यो यवनेभ्योऽस्मज्जनाः, महराज। ब्राह्मणा अपि सर्वथा जनानामुत्साहावेशमुत्पाद्य, तान् समरसन्नद्धान् कृत्वा यवनानां विरुद्धं पराक्रमन्ते। अस्मद्गणनायकानां ईदृग् स्थैर्यं यद्यभविष्यत्, महाराज, प्रागेव यवनाः स्वदेशं पलायिष्यन्त। राज्यस्य च रक्षणार्थं नियुक्तनायकेभ्य एव अस्मज्जन्मभूमिः दास्यं प्राप्नोतीव!

**पौरवः**—कथं न तथा भवेत्, हाराणचन्द्र! यदा दरिद्रजातका जम्बुका अपि राजानो भवन्ति? दुर्दैवमिदमस्माकम्! इमे मन्दभाग्या भीरवः निखिलजनस्तोमस्य भाग्यविधातारः! किमेतेषां मन्त्रिणो मृताः? किमर्थं तूष्णीं तिष्ठन्ति ते नराधमाः? अथवा तेऽपि शुनकशरीरोपजीविनः कीटाः! भ्रष्टाः! भ्रष्टाः! आगतस्य चोरस्य तुष्ट्यर्थं स्वगृहं निर्दग्धुमुद्युक्ताः इमे राजनीतिकुशलाः! मां च विवेकं बोधयितुमागतः आभिः!

हाराणचन्द्र! भवितव्यं भवत्येव। अस्माकमभीष्टं स्पष्टं खलु? बहुजनहितं साधनीयं क्षत्रियेण। यवनानामागतिः सर्वेषां असम्मता। ते सर्वथा समुत्सारणीयाः। पुरुषकारोऽवश्यं कर्तव्य एव। ततः परं विधिः प्रमाणम्!

**हाराणः**—सुष्ठु भणितं, महाराज! क्षात्रधर्मोऽपि दीक्षास्वरूपः। जनानां सुखमेव नो व्रतम्। अलिकसुन्दरस्य पराभवे एव जनाः सुखिनः। ततस्स एव कार्यः अस्माभिः, यद्यपि यवनापेक्षया वयं दुर्बलाः।

अलिक्सुन्दरस्तु समरे असमः। प्रायशो वयं सङ्ग्रामे अवजिताः स्याम, तथापि अस्माभिरवश्यं योद्धव्यमेव। राष्ट्रस्य हिताय मनुष्य-साध्यं सर्वं कार्यमेव। अतः परं दैवायत्तम्।

**पौरवः**—[सहर्षं हाराणमाश्लिष्य] साधु हाराणचन्द्र। अनुरूपमेतदभिहितम्। विधाता अस्मज्जन्ममेदिनीं यवनतन्त्रां कर्तुमिच्छति चेत्, करोतु तथैव। परं तु वयं न यावज्जीवं यवनतन्त्रा भवितुमिच्छामः। युधि धैर्यं प्रदर्श्य परलोकमेव गच्छामः। 'तुच्छा भारतदेशीया, अधीराः क्षत्रपुत्राः!' इति लोके कुवार्ता तावन्मा भूत्। यवनानां बलं सर्वथा निवर्तयामः। जयो वा भवत्वपजयो वा। स्वधर्मे निधनं श्रेयः किल। सेनापतिर्विजयगुप्तो विशिष्टं बलमायोज्य सिद्धोऽस्ति। गन्धवनात् त्रिशतं महागजा अद्यैव समानीताः। तेषां समरशिक्षा देया। अशिक्षि-तानामपि तेषां सामर्थ्यमुपयुक्तं भविष्यति। वितस्तातीरवासिनो युव-जनान् सर्वान् आमन्त्र्य सेनापि व्यतन्यत। युद्धकाले एव तेषामपि शस्त्राभ्यासः। किं कुर्मः? समुदाय एव बलम्! अन्येऽपि यवनपक्ष-प्रवेशमनिच्छन्तो गणनायका यथेष्टं अस्मान् समागच्छन्तु।

**हाराणः**—क्षेमगर्भपुर्याः सुदासः, कमलश्रीगणनायको दर्शकः, वितस्तवत्या राजा रूपकः, श्रेणिकाया गणनायकः पण्डितः, मन्दवाहिनीनगरनायकः, सुमेरुपुरीनायकः, सिन्धुमतीभूपालः, गुप्तको राजा, एते चान्ये च शूरा राजपुत्राः यवनान् प्रतिरोद्धुमुत्सुकाः।

**पौरवः**—साधु, हाराणचन्द्र, तान् प्रति अद्यैव दूतान् प्रेषयामि। त्वमपि सन्नद्धो भव। महान् भवति सङ्ग्रामः सुदुष्कर इति मे भाति! इदं च समरं दैवं प्रत्येव भवेत्! भवतु, भवतु! पुरुषकार एव नो धर्मः। दिग्विजयाय सन्नद्धा भवाम। विजयश्च इह वा परत्र वा भवत्येव! यद्यपि जिता वयं, धर्मो जयत्येव।

## तितिक्षुर्भूपालः[1]

सत्यव्रतः

काशीक्षेत्रे प्रसिद्धाऽभूत् पुरा वाराणसी पुरी ।
ब्रह्मदत्तो नृपो यस्यामप्रमत्तो व्यराजत ॥ १ ॥

विधिना शास्त्रदृष्टेन प्रकृतीः सोऽनुरञ्जयन् ।
असपत्नः सपत्नीकः सरलां भुवमन्वशात् ॥ २ ॥

तस्य सौराज्ययुक्तस्य प्रिया सौम्या विचक्षणा ।
मुख्या सौभाग्यवत्यासीन्महिष्याहितलक्षणा ॥ ३ ॥

रमणी रमणीयांगी रममाणा चिरं मुदा ।
संपन्नापन्नसत्त्वा सा ब्रह्मदत्तेन भूभृता ॥ ४ ॥

तस्याः कृताभिषेकायाः प्राविक्षत्कुक्षिमुत्तमाम् ।
दिष्ट्या बुद्धो महात्मैव बोधिसत्त्वाभिधः स्वयम् ॥ ५ ॥

प्राप्तकाला त्वसौ देवी शुद्धबुद्धिं जितेन्द्रियम् ।
बोधिसत्त्वाभिधं बुद्धं महात्मानमजीजनत् ॥ ६ ॥

स बालः प्राप्तसंस्कारः स्पृहणीयगुणान्वितः ।
भृशमानन्दयामास सर्वानप्यभितो जनान् ॥ ७ ॥

संभवन्तीदृशाः पुण्यैर्लोकाभ्युदयहेतवः ।
सफलं तद् गृहं यत्र बुद्धोऽबुद्ध विशुद्धधीः ॥ ८ ॥

अथास्य जननादूर्ध्वं शुभमेकादशेऽहनि ।
पित्रा नाम कृतं प्रीत्या शीलवानिति सुन्दरम् ॥ ९ ॥

सत्स्वभावात् सदाचारात् सद्विचाराच्च सर्वथा ।
अन्वर्थसंज्ञास्तस्यासन् यथा नाम तथा गुणाः ॥ १० ॥

---

[1] जातककथासंग्रहादुद्धृत्य अनूदितमिदम् ।

राध्यन्तोऽस्मै कुमाराय गणका अप्यजीगणन् ।
सुखसम्पत्तिसौभाग्याशंसि नाम च जन्म च ॥ ११ ॥
प्राप्तषोडशवर्षोऽसौ शीलवान्नाम माणवः ।
पारीणः सर्वशास्त्राणां राजनीत्यामधीत्यभूत् ॥ १२ ॥
कथं नु समयाकुर्यात् प्रतिभावान् बुधो मुधा ।
क्रममाणा मतिः स्वच्छा न वयःक्रममीक्षते ॥ १३ ॥
वयस्यल्पेऽपि शास्त्राणां रहस्यमधिजग्मुषी ।
सूक्ष्मा सर्वपथीनासीत् प्रशस्ता तस्य शेमुषी ॥ १४ ॥
स्वतातेऽथ दिवं याते ब्रह्मदत्ते महीपतौ ।
राज्यसिंहासनं पित्र्यमधितष्ठौ महामनाः ॥ १५ ॥
राज्यासनमधिष्ठाय शुशुभे स शुभैर्गुणैः ।
उदयाचलमारूढः शीतरश्मिरिवोदितः ॥ १६ ॥
ऋजुदृष्टिर्विशुद्धात्मा करुणावरुणालयः ।
चकार सर्वभूतानां भूयः श्रेयोनुशासनम् ॥ १७ ॥
दरिद्रेभ्यो ददौ दानं धर्मशालाश्च निर्ममौ ।
प्रजानामिष्टमादध्यौ नित्यं पुण्योदयाद् बभौ ॥ १८ ॥
सौहृद्यं दयां मैत्रीं प्रीतिं प्राचीचरद् भुवि ।
वैमनस्यं घृणामीर्ष्यां हिंसां चाचिच्यवत्पुनः ॥ १९ ॥
पुत्रवत्पालयामास सस्नेहं सकलाः प्रजाः ।
सदात्मैकत्वभावस्य प्रतिपत्तिमुपेयिवान् ॥ २० ॥
संयमी शीलवान्नाम युवा शान्तः स पार्थिवः ।
पुण्यशीलामिलां चक्रे स्वकीययशसोज्ज्वलाम् ॥ २१ ॥
संध्याजपोपवासादिव्रतपालनतत्परः ।
प्रशासद् विधिवद्राज्यं लभते स परं सुखम् ॥ २२ ॥

एवं वितन्वतस्तस्य राज्यकार्यं महीक्षितः ।
अधर्मश्चारिवर्गश्च न पुरे पदमादधौ ॥ २३ ॥

एकदा भ्रष्टचारित्रो धृष्टः कश्चन पापकृत् ।
अमात्यो नष्टबुद्धित्वादवरोधमदूदुषत् ॥ २४ ॥

शुद्धान्ते तस्य शुद्धान्तःकरणस्यापि दुर्धिया ।
अप्रमृष्यमनायुष्यं मन्त्रिणाचेष्टि चेष्टितम् ॥ २५ ॥

सद्वृत्तेष्वपि दुर्वृत्ताः कुटिलाः सरलेष्वपि ।
शीलवत्सु च दुःशीलाः संभवन्तीह संसृतौ ॥ २६ ॥

वैयात्यमकृतामात्यो ह्यकृतात्मा स मन्दधीः ।
दुर्भाग्योपहतौ नूनं शास्त्रज्ञोऽपि विमुह्यति ॥ २७ ॥

यदा शीलवतावेदि मन्त्रिणस्तस्य दुष्कृतम् ।
तदाहूय स एकान्ते पौनःपुन्येन धिक्कृतः ॥ २८ ॥

उक्तश्चेदं त्वया मूढ! सचिवानुचितं कृतम् ।
कर्मणो गर्हणीयस्य त्वमस्य फलमाप्नुहि ॥ २९ ॥

स्पष्टं कष्टप्रदो दुष्टस्त्वं न वस्तुमिहार्हसि ।
अतः सत्वरमेतस्माद् मम राज्याद् बहिर्भव ॥ ३० ॥

स्वापतेयं स्वमादाय सर्वं दारगवादिकम् ।
सपद्यत्र त्वयामात्य! पद्यान्याद्य प्रपद्यताम् ॥ ३१ ॥

स्थानान्तरमितो याहि त्वं न विश्वासभाजनम् ।
वंचयन् दुष्टशीलत्वात्सुशीलं मास्यभाजनम् ॥ ३२ ॥

इत्युक्त्वा तं स भूपालः स्वदेशान्निरवासयत् ।
संचक्ष्या ह्यसुखोदर्का सदा दुर्जनसंगतिः ॥ ३३ ॥

भूभृतेत्थं समादिष्टः स मन्त्री दुष्टचेष्टितः ।
काशीराष्ट्रस्य सीमानं झटित्येवोदलङ्घत ॥ ३४ ॥

परितोऽटाट्यमानेऽसौ सीमामुल्लङ्घ्य काशिकीम् ।
अथ कोशलदेशस्य भूपतिं शरणं ययौ ॥ ३५ ॥
द्वाःस्थैः कृतप्रवेशस्तु कोशलेशमुपास्थित ।
चाटूक्तिनिपुणः पाटूपटोऽसेविष्ट तं पुनः ॥ ३६ ॥
सेवमानः स दुर्मन्त्री प्रत्यहं कोशलाधिपम् ।
अचिरेणैव कालेन तस्य विश्वासभूरभूत् ॥ ३७ ॥
प्रगाढप्रत्ययो भूत्वा स किंमन्त्री कदाचन ।
अनिष्टमभिसंधित्सुः कोशलाधीशमभ्यधात् ॥ ३८ ॥
देव वाराणसीराज्यं नवनीतसमं मृदु ।
अस्त्यद्य मद्यमाद्यं तेऽक्षुद्रं क्षौद्रमिवानतम् ॥ ३९ ॥
तद्राजः सरलो नम्रस्वभावोऽत्यन्तकोमलः ।
स्तोकया सेनयैवाशु जय्यो भवितुमर्हति ॥ ४० ॥
शीलवान् हि क्षमाशीलो न कदाप्यभिमन्यते ।
अवश्यं वश्यतां नेयः स्वाभिमानवता त्वया ॥ ४१ ॥
गम्भीरधीरधीरस्य श्रुत्वा वाक्यं कुमन्त्रिणः ।
कोशलाधीश्वरः स्वीये मनस्येवं व्यचारयत् ॥ ४२ ॥
अस्ति वाराणसीराज्यं महीय इति विश्रुतम् ।
अनीकिन्याल्पयैवादः कथं जय्यं भविष्यति ॥ ४३ ॥
एष मन्त्री त्वसन्दिग्धं जय्यत्वं तस्य वक्त्यतः ।
मन्ये गुप्तचरोऽमुष्य राज्यस्यायं भवेदिति ॥ ४४ ॥
आलोच्य कोशलाधीशः प्रावोचन्मन्त्रिणं पुनः ।
ननु राज्यस्य कस्यापि प्रणिधिस्त्वं प्रतीयसे ॥ ४५ ॥
मन्त्रिणोक्तमहं राजन् प्रणिधिर्नास्मि कस्यचित् ।
क्रियतां मयि विश्वासः प्रैष्यान् प्रेष्यावलोक्यताम् ॥ ४६ ॥

काशीसीमासमीपस्थान् ग्रामांस्तावदुपद्रव ।
ध्रुवं विज्ञास्यते तेन राज्ञस्तस्याविरोधिता ॥ ४७ ॥
दयालुर्मृदुरक्रूरः सर्वसत्त्वाभयप्रदः ।
सर्वथैवानलंभूष्णुः प्रतियोद्धुमसौ नृपः ॥ ४८ ॥
सीमोपद्रावकान् सर्वान् विनिगृह्य यदा प्रजाः ।
भूपस्यान्तिकमेष्यन्ति तदा तान् स विमोक्ष्यति ॥ ४९ ॥
दण्ड्यानपि रिपून् प्रायः प्रेम्णा संभावयिष्यति ।
अदण्डयित्वा चैतेभ्यो धनं प्रत्युत दास्यति ॥ ५० ॥
इत्यमात्यवचः श्रुत्वा कोशलेशः स्वसैनिकैः ।
काशीराज्यस्य सीमान्तप्रदेशान् मङ्क्ष्वनीनशत् ॥ ५१ ॥
कोशलेश्वरसैन्येन ध्वस्तसीमाः समन्ततः ।
प्रजा दस्युगृहीतास्ताः काशीराजान्तिकं ययुः ॥ ५२ ॥
ऊचुश्चैवं महाराज! सीमाविध्वंसका इमे ।
दस्यवो दण्डमर्हन्तीत्युचितं यत्तदाचर ॥ ५३ ॥
काशीराजस्तु धर्मात्मा शीलवान् बलवानपि ।
अत्यन्तनिर्मलं चित्तं कृत्वा पप्रच्छ तस्करान् ॥ ५४ ॥
भद्राः किमिति सीमान्तप्रदेशोऽयं विनाश्यते ।
युष्माभिर्विगताशंकैर्यथार्थमभिधीयताम् ॥ ५५ ॥
ते प्रोचुर्जीविकोपायाभावादेतद्विनिन्दितम् ।
अकृत्यं क्षुन्निवृत्यर्थं जीविकाकृत्य सेव्यते ॥ ५६ ॥
राजोवाच कुतो यूयं न मदन्तिकमागताः ।
इच्छापूर्तिमहं कर्तुं समर्थः स्यां व आदरात् ॥ ५७ ॥
अस्तु तावत्पुनर्नैव सीमाध्वंसो विधीयताम् ।
इदं चाभीप्सितं द्रव्यं समादायोपभुज्यताम् ॥ ५८ ॥

प्रोच्यैवमन्तिकान्मुक्तांश्चक्रे तान् स धनान्वितान् ।
सज्जनो ह्युपकर्तैव भवत्यपकृतावपि ॥ ५९ ॥
प्रत्यर्थिनोऽपि लब्धार्थाः कोशलाधीशमभ्ययान् ।
अखिलं चैव वृत्तान्तं स्वं यथास्वं न्यवेदयन् ॥ ६० ॥
तदेतदद्भुतं वृत्तमाकलय्यापि शंकितः ।
कोशलाधीश्वरः काशीं नैवाक्रमितुमैहत ॥ ६१ ॥
शनैः शनैः स निर्भीको भूत्वाश्चर्यसमन्वितः ।
शीलं शीलवतः पश्यन् काशीमध्यमुपागतः ॥ ६२ ॥
मध्याज्जनपदांस्तत्र द्राक् स्वसैन्यैर्व्यनाशयत् ।
समस्तवस्तुसम्पूर्णमलुलुण्ठत् पुनः पुरम् ॥ ६३ ॥
दयावान् काश्यधीशस्तु न मनागपि चुक्षुभे ।
कोशलेशकृतं देशध्वंसं दृष्ट्वा च चक्षमे ॥ ६४ ॥
निग्रहीतुं समर्थोऽपि न वाच्यं किंचिदुक्तवान् ।
धनं दत्त्वामुचत्सर्वांस्ताउपद्रवकारिणः ॥ ६५ ॥
अथ कोशलभूपालः काशीराजमनुल्बणम् ।
अहिंस्रं धार्मिकं नम्रं व्यजानात् प्रकृतिप्रियम् ॥ ६६ ॥
उद्दण्डोऽसौ महीपालं तथा ज्ञात्वाऽभ्यषेणयत् ।
ससंरम्भं महारम्भः काशीराज्यजिघृक्षया ॥ ६७ ॥
काश्यधीशस्य सेनान्यो वाहिन्याममितौजसः ।
आसन्नासन्नसाहस्रा योद्धारः समरांगणे ॥ ६८ ॥
संमुखापतदुद्दाममत्तवारणवारणाः ।
स्वराष्ट्रस्वामिरक्षार्थं विहितप्राणधारणाः ॥ ६९ ॥
अपृष्ठदर्शिनो वीरा वज्रपातेऽप्यनाकुलाः ।
क्षेपीयांसो महाप्राणा मनोवाक्कायनिस्तुलाः ॥ ७० ॥

विद्युदुद्द्योतवद् दीप्ताः स्वाम्यादेशवशंवदाः ।
जम्बूद्वीपजये शक्ताः शूराः सर्वेऽप्यकद्वदाः ॥ ७१ ॥

तेन सैन्यसहस्रेण कोशलेशकृता क्षतिः ।
स्वदेशस्य यदादर्शि काश्यधीशस्तदोदितः ॥ ७२ ॥

राजन्नागन्तुकः कश्चित् कोशलाख्यमहीपतिः ।
राज्यं वाराणसेयं नः संजिघृक्षुरुपाद्रवत् ॥ ७३ ॥

सीमानस्तेन विध्वस्ता मध्या जनपदा अपि ।
आततायिनमायान्तं किं न हन्याम तं वयम् ॥ ७४ ॥

साम्प्रतं दीयतामाज्ञा नात्र किंचिदसाम्प्रतम् ।
वयं गत्वा निगृह्णीमो राज्यसीमाविलङ्घिनम् ॥ ७५ ॥

जीवग्राहं गृहीतोऽद्य श्वः श्वनाशं स नङ्क्ष्यति ।
शठे शाठ्यविधानेन नैव दोषः प्रसङ्क्ष्यति ॥ ७६ ॥

स्वभटानामिदं श्रुत्वा युक्तियुक्तं वचो नृपः ।
शीलवान् स दयाशीलो निर्वैरं प्रत्यभाषत ॥ ७७ ॥

प्रियाः, मत्कारणात् कश्चिन्नैव कष्टमवाप्नुयात् ।
योऽपि राज्यं जिघृक्षुः स्याद् गृह्णीयात्स इहागतः ॥ ७८ ॥

युष्माभिर्न विरोद्धव्यो दातव्याश्चार्थसम्पदः ।
न सार्धं कोशलेशेन लेशेनापीष्यतां भिदा ॥ ७९ ॥

हिंसैव वर्धते बह्वी हिंसकं प्रति हिंसया ।
सुखमात्यन्तिकं लब्धुमहिंसैव गरीयसी ॥ ८० ॥

शान्त्या प्रशमयेत् क्रोधं सलिलेनेव पावकम् ।
चित्तं प्रसादयेद् धीमान् सर्वभूतानुकम्पया ॥ ८१ ॥

इत्याद्यन्वशिषद् राजा दयालुः शीलवान् भटान् ।
अहिंसकः कथं कुर्याद् हिंसावृत्तिं विगर्हिताम् ॥ ८२ ॥

अथोल्लङ्घितसीमान्तः स्वयं कोशलभूपतिः ।
मध्येजनपदं चक्रे प्रवेशमकुतोभयः ॥ ८३ ॥

तद्वृत्तं काश्यधीशस्य सचिवैः पुनरौच्यत ।
किंतु राजा यथापूर्वं क्षमामेवान्वमन्यत ॥ ८४ ॥

न चुक्रोध निशम्यामुं क्रुध्यन्तमपि शात्रवम् ।
श्लाघ्यमक्रोधनस्येह क्षमा वीरस्य भूषणम् ॥ ८५ ॥

तदानीं कोशलाधीशः पुरद्वारमुपाश्रितः ।
संदेशं प्राहिणोत् काशीमहाराजस्य संनिधौ ॥ ८६ ॥

राज्यं प्रदीयतां स्वीयं युध्यतां वा मया सह ।
द्वयोरेकतरः पक्षः सत्वरं प्रतिपद्यताम् ॥ ८७ ॥

अहं राज्यं जिघृक्षामि दीयतां तत् त्वयाञ्जसा ।
अथ बुद्धौ विरुद्धायां युद्धमद्धा विधीयताम् ॥ ८८ ॥

ततः काशीमहीपालो युक्तं प्रत्युत्तरं ददौ ।
युद्धमावश्यकं नास्ति कदाचित्ते मया सह ॥ ८९ ॥

नाहं युद्धमभीप्सामि न च मे प्रत्यनीकता ।
त्वं वृथैवाभ्यमित्रीयो बहुधाभीलमन्वभूः ॥ ९० ॥

राज्यं मदीयमादत्स्व भोगान् भुक्त्वा च निर्वृणु ।
रोगशोकभयस्थानं युद्धोद्योगं तु संवृणु ॥ ९१ ॥

इतस्त्वावेदितोऽमात्यैः काशीराजः पुनः पुनः ।
देव कोशलभूपालः पुरान्निःसार्यतां बहिः ॥ ९२ ॥

दण्डताडं प्रताड्यासौ चौरघातं विघात्यताम् ।
कुटिलः सरलानस्मान् प्रतार्यानिव मन्यते ॥ ९३ ॥

भृशं मन्त्रिभिरुक्तोऽपि शीलवान् काश्यधीश्वरः ।
अभियोक्तुं समर्थोऽपि तितिक्षां प्रत्यपद्यत ॥ ९४ ॥

स्वैरं वैरायमाणानामपि वैरं परित्यजन् ।
निग्रहापेक्षया मेने साधीयांसमनुग्रहम् ॥ ९५ ॥

अमन्दचन्दनस्पन्दशीतलः शीलवानिनः ।
भावयामास भव्योऽसावमित्रेष्वपि मित्रताम् ॥ ९६ ॥

मनसा कर्मणा वाचा योऽनुगृह्णाति जन्तुषु ।
प्रतीपेष्वपि सद्बुद्धिरसौ केनोपमीयताम् ॥ ९७ ॥

न्यषेधीत् प्रत्यवस्कन्दमनिन्द्यगुणवन्दितः ।
शीलवानुत्तमप्रज्ञः सानुक्रोशो नराधिपः ॥ ९८ ॥

सचिवाः शक्तिमन्तोऽपि राज्ञः शीलवतः स्फुटम् ।
आदेशमनुरुन्धानाः प्रतिरोधं न चक्रिरे ॥ ९९ ॥

अत्रान्तरे स दुर्वृत्तः कोशलेशः समुत्पतन् ।
अपावृत्य पुरद्वाराण्यध्यतिष्ठन्नृपासनम् ॥ १०० ॥

वाराणसीं प्रविष्टेन ससैन्येनापि सर्वतः ।
कोशलाधीश्वरेणैक्षि प्रतिरोधी न कश्चन ॥ १०१ ॥

अहिंसाया इवादर्शं दर्शं दर्शमनुत्तमम् ।
हिंसाप्रतिकृतिः साक्षात् कोशलेशो विसिष्मिये ॥ १०२ ॥

अमात्यानां सहस्रेण काशीशः परिवेष्टितः ।
शशी तारागणेनेव रेजे सम्पूर्णमण्डलः ॥ १०३ ॥

वीतशोकभयक्रोधः स्थिरधीर्मुनिराडिव ।
तटस्थः सन्नवैक्षिष्ट कोशलेश्वरचेष्टितम् ॥ १०४ ॥

कृतान्त इव दुर्दान्तो कृतान्तःपुरमर्दनः ।
नृशंसः कोशलाधीशः स्वभृत्यानित्थमादिशत् ॥ १०५ ॥

गम्यतां काश्यधीशोऽयं सामात्यो विनिगृह्यताम् ।
हस्तबन्धं निबध्याथ श्मशानं प्रति नीयताम् ॥ १०६ ॥

सैकते तत्र नीत्वाशु तथा साधु निखायताम् ।
हस्तं चालयितुं शक्तो न स्याद् येनैकमप्ययम् ॥ १०७ ॥
रजन्यामेनमाक्रम्य भक्षयिष्यन्ति जम्बुकाः ।
करिष्यन्ति च तत्सर्वं यदन्यत् तैश्चिकीर्षितम् ॥ १०८ ॥
कोशलेशभुजिष्यास्ते काशीशं लब्धमन्त्रणाः ।
समन्त्रिणं क्षमाशीलं ययुराबध्य हस्तयोः ॥ १०९ ॥
तदानीं स महाराजः शीलवान् विगतस्मयः ।
न स्तोकं मनसाऽप्युद्वेद् दृष्ट्वा प्रद्विषतोऽपि तान् ॥ ११० ॥
प्रतिचिस्करिषा तस्य नैव चेतस्यजागरीत् ।
निर्वैरा मन्त्रिणश्चासन् यथा राजा तथा प्रजाः ॥ १११ ॥
सामर्थ्ये सत्यपि प्राप्ता बन्धनं मन्त्रिणः समे ।
प्रतिकूलं वचो नोचू राज्ञ आज्ञानुकारिणः ॥ ११२ ॥
जिष्णुः प्रियकरा धीरा गम्भीराम्बुनिधेरिव ।
अविगीता विनीतासीत् परिषत् तस्य भूपतेः ॥ ११३ ॥
नोदियाय मतिस्तेषां सचिवानां विरोधिनी ।
राज्ञः शीलवतः शीलमेकान्तेनावबोधिनी ॥ ११४ ॥
श्मशानं प्रापिपन् भृत्याः सामात्यं काश्यधीश्वरम् ।
तस्योपकण्ठे चाकण्ठं बृहद्गर्तमखानिषुः ॥ ११५ ॥
मध्येगर्तं महाराजं यथावदवखाय ते ।
तमेव परितः शेषानमात्यान् न्यखनन् पुनः ॥ ११६ ॥
बहिरन्तः समन्ताच्च तस्य गर्तस्य भूयसीः ।
सिकताः संप्रपूर्यायोघनेनाहसताधिकम् ॥ ११७ ॥
एवंगतेऽपि काशीशः शीलवान् संशितव्रतः ।
अभ्यधत्त निजामात्यानिदं कल्याणकृद् वचः ॥ ११८ ॥

भद्राः सौम्याः प्रियामात्याः आदृत्याहं ब्रवीमि वः ।
भवद्भिः सत्त्वसंपन्नैः स्थेयमव्याकुलेन्द्रियैः ॥ ११९ ॥
गत्वरैरसुभिः कार्यं न प्राणव्यपरोपणम् ।
सत्वरं सृत्वरैर्भाव्यं प्रतिहिंसाविजित्वरैः ॥ १२० ॥
न चौरंकारमाक्रोश्यः प्रत्यर्थी कोशलाधिपः ।
कदाचिन्नाप्यमित्रीयाऽसूयेर्ष्या वानुचिन्त्यताम् ॥ १२१ ॥
मैत्र्येव भावनीयेष्टा सदा चित्तप्रसादनी ।
न योद्धव्यं विरोद्धव्यं क्रोद्धव्यं वा कृतात्मभिः ॥ १२२ ॥
अयमात्मैव सर्वत्र मन्तव्यः सततातत‍ः ।
द्रष्टव्यः श्रवणीयश्च विज्ञेयः शास्त्रसंमतः ॥ १२३ ॥
सच्चिदानन्दरूपत्वादस्य शत्रुर्न विद्यते ।
व्युद्यते नाम विद्वद्भिः देहो भेदस्तु भिद्यते ॥ १२४ ॥
संभिन्नमात्मनात्मानं मत्वा तस्मादनारतम् ।
उदासीनवदासीनैः कार्यं कार्यं विचक्षणैः ॥ १२५ ॥
इत्यादिशत एवास्य मध्यरात्रे समागते ।
शृगालाः समुपाजग्मुर्मनुष्यामिषजग्धये ॥ १२६ ॥
तान् विलोक्यागतान् राजा सचिवैः सह तत्क्षणम् ।
उच्चैः स्वरेण रोरूयांचक्रे कृतबिभीषिकः ॥ १२७ ॥
हस्तपादप्रतिष्टब्धाः प्रतिरोद्धुं न तेऽशकन् ।
केवलं शब्दमात्रेण तान् शृगालानबीभयन् ॥ १२८ ॥
फेरवस्तु रवं श्रुत्वा पूर्वं प्रादुद्रुवन् भयात् ।
पुनर्निवृत्य चोपेयुरदृष्ट्वा पृष्ठतःसरम् ॥ १२९ ॥
वीक्ष्य तान् पुनरप्युच्चैरशब्दायन्त तेऽखिलाः ।
क्रोष्टारोऽपि भयत्रस्ताश्चक्रिरे त्रिर्गतागतम् ॥ १३० ॥

अदृष्टपृष्ठानुसरा ह्यन्ततस्ते समन्ततः ।
शृगाला निर्भयाः सन्तो न पलायिषतामुतः ॥ १३१ ॥
इत्थं चाचकलन् नैभिः पुंभिः किंचित्करिष्यते ।
दण्ड्यत्वादत्र निक्षिप्तैरिति कृत्वावतस्थिरे ॥ १३२ ॥
अथ गोमायुषु स्वामी काश्यधीश्वरमभ्ययात् ।
अन्ये गोमायवश्चेयुरमात्यान् मांसगृध्नवः ॥ १३३ ॥
जम्बुकाधिपमायान्तं दृष्ट्वा भूपस्तु नीतिमान् ।
ग्रीवां तथा चकारोर्ध्वां यथासौ भक्षयेदिति ॥ १३४ ॥
क्रोष्टाप्यवसरं लब्ध्वा तद्ग्रीवामत्तुमुद्यतः ।
बलान्निजगृहे राज्ञा स्वहन्वाकृष्य यन्त्रवत् ॥ १३५ ॥
हस्तिवर्चससम्पन्नः पार्थिवो हनुयन्त्रितम् ।
बलवत्पीडयामास क्रोष्टारं श्लथविक्रमम् ॥ १३६ ॥
अभून्मोचयितुं फेरुः प्रभोरात्मानमप्रभुः ।
त्रस्तो मृत्युभयादुच्चैराचक्रन्द विनिन्दितम् ॥ १३७ ॥
आर्तमाक्रन्दनं श्रुत्वा तस्य क्रोष्टुशिरोमणेः ।
शृगालाः सकला अन्ये पलायन्त भयाकुलाः ॥ १३८ ॥
क्ष्माभृद्यन्त्रितगोमायुकृतभूमिविघर्षणात् ।
शिथिलाः समपद्यन्त सिकता गर्तसंश्रिताः ॥ १३९ ॥
राज्ञा विज्ञेन तज्ज्ञात्वा शैथिल्यं सिकतोद्भवम् ।
शृगालः स परित्यक्तोऽचाल्येतां च करावुभौ ॥ १४० ॥
इतस्ततस्तदान्दोल्य स्वं हस्तयुगलं नृपः ।
कृतयत्नो बहिर्गर्तादव्यथ्यो निरचिक्रमत् ॥ १४१ ॥
गर्तस्योपर्यवष्टभ्य हस्तयुग्मं महाबलः ।
नचिरात्पवनध्वस्तमेघाच्चन्द्र इवोद्गतः ॥ १४२ ॥

निष्क्रान्तः स स्वयं गर्तात् सुधीः श्रान्तो महीपतिः ।
सिकता अपसार्यान्यान् सचिवानप्यजीजिवत् ॥ १४३ ॥
उद्धृत्य मन्त्रिणः सर्वान् गर्तात् पितृवनस्थितात् ।
समवेतः समस्तैस्तैः स क्षोणीभृदवास्थित ॥ १४४ ॥
अत्रान्तरे जनाः केचिन्मृतमानीय मानवम् ।
सीमामध्ये परित्यज्याऽयासिषुर्यक्षयोर्द्वयोः ॥ १४५ ॥
तौ यक्षौ तं गतप्राणं पुरुषं खादितुं मिथः ।
नाभूतां संविभज्यालमुभौ तुल्यपराक्रमौ ॥ १४६ ॥
ताभ्यामचिन्ति नैवावां स्वो विभक्तुमलं स्वयम् ।
विगतासुममुं मर्त्यमत्तुं वा निरवग्रहम् ॥ १४७ ॥
एषोऽस्ति शीलवान् राजा न्यायकारीति विश्रुतः ।
तत्र गत्वानुयोक्तव्यं साध्वेनं स विभक्ष्यति ॥ १४८ ॥
एवं विचिन्त्य तौ यक्षौ मृतमादाय पादयोः ।
विकर्षन्तावयासिष्टां राज्ञः शीलवतोऽन्तिकम् ॥ १४९ ॥
अब्रूतां च महाराज धार्मिकस्त्वं मतोऽसि नौ ।
विभज्यायं यथान्यायमावाभ्यां सम्प्रदीयताम् ॥ १५० ॥
शीलवांस्त्वगदद् दक्षस्तदाक्षोदक्षमं वचः ।
संविभक्ष्यामि वां भक्ष्यमिमं न्यायेन मानवम् ॥ १५१ ॥
किंतु दूषितगात्रोऽहं सिकतारेणुरूषितः ।
निर्मलं जलमिच्छामि स्नातुमात्मविशुद्धये ॥ १५२ ॥
अवदातवपुर्भूत्वा सत्यं वच्मि वचोऽमृतम् ।
विभज्याहं प्रदातास्मि युवाभ्यामसुकं मृतम् ॥ १५३ ॥
अत आनीयतां तोयं मम स्नानाय निर्मलम् ।
शुचीभूय करिष्यामि युवयोः कार्यमादरात् ॥ १५४ ॥

कर्णशष्कुल्यवच्छिन्ननभसाऽऽकर्ण्य वर्णितम् ।
राज्ञः कार्यार्थिनौ यक्षौ बद्धकक्षौ बभूवतुः ॥ १५५ ॥
कोशलाधीश्वरावासं शीघ्रमीयतुरन्तिकम् ।
सुगन्धि सलिलं स्नेयं तत्रैक्षेतां च निर्मलम् ॥ १५६ ॥
तिष्ठति स्म समाक्रम्य काशीं कोशलभूपतिः ।
यद्राजः शीलवांस्तेन बहिरुत्सारितो बलात् ॥ १५७ ॥
तत्र गत्वा पुरे यक्षौ निजमायाबलेन तौ ।
कोशलाधीशसंसेव्यं जलमाजह्रतुर्नतौ ॥ १५८ ॥
तदानीतेन शीतेन सलिलेन सुगन्धिना ।
स्नातो निर्णिक्तगात्रोऽभूद् भूपतिः शीलवांस्ततः ॥ १५९ ॥
तस्यैव कोशलेशस्य भवनादाहृतान्यथ ।
अददातां महार्हाणि राज्ञे वासांसि तावुभौ ॥ १६० ॥
निर्वर्तिताभिषेकाय धारितोज्ज्वलवाससे ।
सुगन्धद्रव्यमंजूषामाहृषातां च मंजुलाम् ॥ १६१ ॥
चन्दनागुरुकस्तूरीकुङ्कुमादिसमुद्भवः ।
गन्धश्चतुर्विधो यत्र स्फुरति स्म निरन्तरम् ॥ १६२ ॥
पुनः स्नातानुलिप्ताय स्थापितान् मणिभाजने ।
सुरभींश्च प्रसूनानां गुच्छानच्छानयच्छताम् ॥ १६३ ॥
सर्वमेतदनुष्ठाय शीलवन्तमपृच्छताम् ।
आवां किमधुना कुर्वः श्रीमतोदीर्यतामिति ॥ १६४ ॥
राजोवाच ममेदानीमशनाया प्रवर्तते ।
भोक्तुमिच्छाम्यहं किंचिद् भोज्यमानीयतामिति ॥ १६५ ॥
तावत्येव गतौ यक्षौ कोशलेश्वरसंश्रयम् ।
तत्र चापश्यतां भोज्यं प्राज्यव्यंजनसंहितम् ॥ १६६ ॥

साधितं कोशलार्थं यत्तदन्नं सूपसंस्कृतम् ।
षड्रसं रुच्यमास्वाद्यं नृपायाहरतामुभौ ॥ १६७ ॥

स्नात्वा शुद्धोऽनुलिप्तांगः शुभ्रवासाः स्वलंकृतः ।
प्रसन्नहृदयो राजाऽभुङ्क्त भोज्यमुपस्कृतम् ॥ १६८ ॥

क्षोदीयसो नृशंसस्य यक्षौ कोशलभूभृतः ।
हिंसावृत्तेरवस्कन्तुः पुनर्वेश्मनि जग्मतुः ॥ १६९ ॥

राज्ञे शीलवते स्वादु सुगन्धि विमलं जलम् ।
उदकुम्भीं सुवर्णस्य शरावांश्चोपनिन्यतुः ॥ १७० ॥

पीतं स्फीतं जलं राज्ञा क्षालितं च मुखादिकम् ।
अथोपाहारि यक्षाभ्यां ताम्बूलं सौरभान्वितम् ॥ १७१ ॥

सुगन्धः पंचधा यस्मिन्नुल्ललासातिसुन्दरः ।
यथेष्टं रसयित्वा तत् प्रकामं पिप्रिये नृपः ॥ १७२ ॥

स्वस्थे राजनि संवृत्ते यक्षौ पप्रच्छतुः पुनः ।
सेवामावां विदध्याव कामन्यामित्युदीर्यताम् ॥ १७३ ॥

नृपः प्राह मदीयायां राजधान्यां प्रयायताम् ।
खड्गो मांगलिकस्तस्माद् द्रुतमानीयतां पुरात् ॥ १७४ ॥

असिना तेन कर्तास्मि शवस्यास्य विभाजनम् ।
भक्षयित्वामिषं येन युवामामोदमाप्स्यथः ॥ १७५ ॥

क्षिप्रमानिन्यतुः खड्गं तौ महीपतिचोदितौ ।
को विलम्बः समर्थानां नियोज्यानां क्रियावताम् ॥ १७६ ॥

खड्गमादाय हस्तेन राजा शीलवता ततः ।
मृतकस्यावदानाय सत्वरं समनह्यत ॥ १७७ ॥

शवः स ऊर्ध्वमुत्थाप्य संमुखीनो व्यधीयत ।
अवादीयत खड्गेन पुनर्मस्तकमध्यतः ॥ १७८ ॥

असूचयित्वा मां पूर्वमनापृच्छ्य च यामिकान् ।
कथंकारमिहार्येण भवतागमनं कृतम् ॥ १९१ ॥
इति कोशलभूपस्य श्रुत्वा वाक्यं सविस्तरम् ।
शीलवानप्यतिक्रान्तं स्ववृत्तान्तमवर्णयत् ॥ १९२ ॥
त्वयाहं सरुषाऽऽक्रान्तः प्रत्युक्तः परुषाक्षरम् ।
सामात्यस्त्याजितः काशीं श्मशानं चैव लम्भितः ॥ १९३ ॥
साधीयसी न हिंसा ते ययाऽकार्यमकार्यथाः ।
तितिक्षामवलम्ब्याहं विपदस्ता विसोढवान् ॥ १९४ ॥
न तितिक्षासमं किंचिदस्ति साधनमुत्तमम् ।
तितिक्षानावमारुह्य तीर्यास्त्वं विपदापगाः ॥ १९५ ॥
इति काशीश्वरस्यादौ निपीय वचनामृतम् ।
अमन्दानन्दपाथोधौ न्यमाङ्क्षीत् कोशलेश्वरः ॥ १९६ ॥
भूयः पुलकितो भूत्वा शीलवन्तं जगाद सः ।
नाहं वेद महत्वं ते भवानतिमहान् मतः ॥ १९७ ॥
भवन्नपि मनुष्योऽहं न जाने तव सद्गुणान् ।
एतौ मांसाशिनौ यक्षावपि वित्तस्तरां हि यान् ॥ १९८ ॥
बालिशत्वादहं तावदेतावन्तमनेहसम् ।
तुभ्यमद्रुह्यमक्रुध्यं तदागो मम मृष्यताम् ॥ १९९ ॥
नातः परतरं श्रीमन् त्वामभिद्रोहितास्म्यहम् ।
प्रत्यहं भावयिष्यामि गुणानेन तवाद्भुतान् ॥ २०० ॥
श्रीमान् धीमान् मया ज्ञातो वस्तुतः शीलवान् भवान् ।
अहं नराधमो नूनं मन्ये त्वां पुरुषोत्तमम् ॥ २०१ ॥
इत्याद्युक्त्वा शीलवान् स द्वेषशान्तिसमुत्सुकः ।
क्षमित्वा कोसलाधीशं शय्यायां तमसूषुपत् ॥ २०२ ॥

स्वयं च खट्विकां लघ्वीमधिशय्याशयिष्ट सः ।
नम्रता कम्रतां लेभे हिंस्रस्याहिंसकं प्रति ॥ २०३ ॥

प्रत्यूषे कोशलाधीशस्त्यक्तविद्वेषभावनः ।
लब्धकाशीशसौहार्दो जजागारात्मपावनः ॥ २०४ ॥

सैनिकान् सचिवान् विप्रान् सर्वांश्च गृहमेधिनः ।
एकीकृत्य समज्यायां विज्ञानित्थमजिज्ञपत् ॥ २०५ ॥

श्रूयतां पारिषद्या भोः शीलवानेष पुण्यवान् ।
सद्गुणाभरणः श्रीमान् काशीराजो विराजते ॥ २०६ ॥

मया कोशलभूपेन प्रजा अस्य विनिघ्नता ।
अत्यर्थं क्लेशितो राजा काशीमाक्रामता सता ॥ २०७ ॥

अहिंसावृत्तिनानेन नाहं हिंस्रोऽपि हिंसितः ।
दयावताऽवता लोकान् मदिच्छापूरि सूरिणा ॥ २०८ ॥

अहमस्य गुणान् वक्तुं नैव शक्नोमि मन्दधीः ।
अनेन साधुशीलेन घातुकोऽहं पराजितः ॥ २०९ ॥

एनमभ्यर्हितं याचे दोषो मे क्षम्यतामिति ।
स्वं च वाराणसीराज्यं कृपया गृह्यतामिति ॥ २१० ॥

न कदापि करिष्येऽहं दुश्चेष्टां पुनरीदृशीम् ।
परद्रव्यापहारो हि मरणं प्राणिनां ध्रुवम् ॥ २११ ॥

इत्यावेद्य तदैवासौ कोशलेशः कृताञ्जलिः ।
काशीराज्यं समर्प्यैनं विनयावनतोऽब्रवीत् ॥ २१२ ॥

अद्य प्रभृति हे राजन्! भवद्राज्यस्य सेवकः ।
अहमेव भविष्यामि तस्कराणां निरीक्षकः ॥ २१३ ॥

अहं दौवारिको भूत्वा सेविष्ये त्वामहर्दिवम् ।
राजीभूय भवान् भूयः पृथिवीमनुशास्त्विमाम् ॥ २१४ ॥

विमलकीर्तिरुदारमतिर्भवान् अनुचितं क्षमतां मम दुष्कृतम् ।
क्षितिपतेस्तव सेवकतामितः सुहृददं हृदहंकृतिवर्जितः ॥ २१५ ॥

ततः कोशलभूपेन स किंमन्त्री प्रताडितः ।
काशीकोशलयोर्येन विरोधः सम्प्रवर्तितः ॥ २१६ ॥

एवं निर्वर्त्य सत्कार्यं सत्कार्य च महीपतिम् ।
अभिवाद्य निवृत्तोऽसौ ससैन्यः कोशलेश्वरः ॥ २१७ ॥

द्वितीयाप्यद्वितीयेयं कथाऽऽनन्दस्य वर्धनी ।
मन्तव्या श्रवणीया च सदाचारप्रवर्तनी ॥ २१८ ॥

अहिंसाहिंसयोर्मध्ये मता हिंसा लघीयसी ।
काशीकोशलभूपत्योर्ज्ञेयमत्र निदर्शनम् ॥ २१९ ॥

कोशलेश्वरवत् पश्चात् तप्यते हिंसकः पुमान् ।
अहिंस्रस्त्वेधते नित्यं सहिष्णुः काश्यधीशवत् ॥ २२० ॥

अहिंसया सुखं शान्तिरानन्दश्चोपलभ्यते ।
हिंसया त्वसुखं दैन्यं विरोधश्चोपजायते ॥ २२१ ॥

अतः शक्तिमताप्यत्र सदा भाव्यं क्षमावता ।
सोढमानापमानेन निर्वैरेण क्रियावता ॥ २२२ ॥

अन्योन्यं प्रति संघर्षे न प्रकारान्तरस्थितिः ।
वीरत्वं भूषणं शान्तिस्तितिक्षा परमं तपः ॥ २२३ ॥

## ‘ तिरुक्कुरळ् ’

का. स्वा. नरसिंहशास्त्री

### १ धर्माधिकरणम्—अधिकारः ६—सहधर्मिणीगुणः

51 गार्हस्थ्योचितमाचारं बिभ्रती, कुर्वती व्ययम् ।
आयस्य पत्युरुचितं भवेत् सा सहधर्मिणी ॥ १ ॥

52 गार्हस्थ्यधर्मसंपत्सा गृहिण्यां वर्तते न चेत् ।
संपदन्तरपूर्णं च जीवितं निष्फलं भवेत् ॥ २ ॥

53 तस्य किं वा न भवति यस्यास्ति गृहिणी सती ।
किं वा च तस्य भवति यस्य साप्यसती भवेत् ॥ ३ ॥

54 चारित्रं नाम सुदृढा सा स्थितिर्यदि विद्यते ।
तस्या गृहिण्या अधिकमुदारं किन्नु वर्तते ॥ ४ ॥

55 [1]देवतां नैव वन्देत, वन्दमाना निजं पतिम् ।
बुध्यते या तया वर्षेत्युक्तो देवोऽभिवर्षति[2] ॥ ५ ॥

56 स्वशीलमभिरक्षन्ती सेवमाना निजं पतिम् ।
पालयन्ती स्वकीर्तिं या निस्तन्द्रा सा स्मृता सती ॥ ६ ॥

57 प्राकारविहिता रक्षा फलं कीदृशमावहेत् ।
स्वशीलविहितैवासां स्त्रीणां रक्षोत्तमा स्मृता[3] ॥ ७ ॥

58 शुश्रूषमाणाः स्वपतिं स्वीयं धर्मं चरन्ति याः ।
लभन्ते ताः स्त्रियो नूनं स्वर्लोके महिते स्थितिम् ॥ ८ ॥

59 येषां पत्नी यशोगोप्त्री नास्ति, तेषां कथं भवेत् ।
सिंहविक्रान्तगामित्वं परीवादकृतां पुरः ॥ ९ ॥

60 गार्हस्थ्यमङ्गलं सैव भवेत्तस्याः सुशीलता ।
सदपत्यप्राप्तिभाग्यं गार्हस्थ्यालङ्कृतिर्भवेत् ॥ १० ॥

---

[1] दृश्यतां रामायणे सीतोक्तिः—‘अपि या निर्नमस्कारा निवृत्ता देवपूजनात् ।’ २. २४. २७.

[2] दृश्यतां तत्रैव २. ११७. ९-१०, अनसूयायाः पातिव्रत्यप्रशंसा, तया स्वतपसा अनावृष्ट्यां जाह्नवीप्रवर्तनम् ।

[3] दृश्यतां च तत्रैव ६. ११७. २६ .... न प्राकारास्तिरस्क्रिया: । .... वृत्तमावरणं स्त्रियाः । [वि. रा.].

## २ अर्थाधिकरणम्—अधिकारः ४२—श्रुतम्

411 श्रुतसम्पद्धि सम्पत्सु सम्पदित्यभिधीयते ।
श्रुतसम्पद्धि सा मुख्या सर्वसामपि सम्पदाम् ॥ १ ॥

412 श्रुतरूपः श्रवणयोराहारो न भवेद्यदा ।
उदरस्यापि यः कश्चिदाहारोऽल्पः प्रदीयते ॥ २ ॥

413 येषामस्ति श्रवणयोराहारः श्रुतनामकः ।
भूमिष्ठा अपि ते नूनं साम्यं याता हविर्भुजाम् ॥ ३ ॥

414 स्वयं यद्यप्यनध्यायी शुश्रुवान् स्यादधीतिनः ।
ग्लायतो जीवयात्रायां भवेदालंबनं हि तत् ॥ ४ ॥

415 सुशीलविदुषां वाचो भवन्त्यालम्बयष्टयः ।
पङ्किले स्खलितप्रायमार्गतुल्येऽत्र जीविते ॥ ५ ॥

416 श्रोतव्यमेव सद्वस्तु स्वल्पं यद्यपि तद्भवेत् ।
यावच्छ्रुतं तावदेतत् पूर्णं गौरवमावहेत् ॥ ६ ॥

417 निष्कृष्य ज्ञातवन्तो ये कदाचिद्यदि तेऽन्यथा ।
गृहीतवन्तो न वचो वदेयुर्मौढ्यसूचकम् ॥ ७ ॥

418 श्रुतेन नैव विद्धे ये श्रवणे शृणुतो यदि ।
तथापि ते बधिरयोः समे स्यातामशृण्वतोः ॥ ८ ॥

419 सूक्ष्मश्रुतज्ञानवन्तो ये भवन्ति न, तैरिह ।
विनीतभाषिवदनैर्भवितुं नैव शक्यते ॥ ९ ॥

420 श्रोत्रास्वादनविद्वांसो जिह्वायाः केवलं रसम् ।
ये विदन्ति किमेभिः स्यात् मृतैर्जीवद्भिरेव वा ॥ १० ॥

## ३ कामाधिकरणम्—अधिकारः ११६—विप्रयोगः

1151 'त्यक्त्वा नैव प्रवत्स्यामी'त्येवं चेन्मां निवेदय ।
'प्रोष्यैष्यामी'ति चेद् ब्रूहि तावत्पर्यन्तजीविनीम् ॥ १ ॥

1152 तदीयं दर्शनं पूर्वं सौख्याय क्रियते मम ।
संयोगोऽप्यद्य नौ धत्ते विप्रयोगभिया शुचम् ॥ २ ॥

1153 वियोगदुःखविदुषो न यामीत्यूचुषोऽपि च ।
श्रद्दधामि कथं वाचं वियोगं जानती ध्रुवम् ॥ ३ ॥

1154 अन्वगृह्णात्पुरा यो मां मा भैषीरिति, सोऽधुना ।
यायाद्यदि तदीयोक्तिश्रद्धालोर्मन्तुरस्ति कः ॥ ४ ॥

1155 रक्ष्यं चेद्रक्ष्यतां नाम तद्वियोगो यथा न मे ।
प्रोषिते तु प्रिये भूयो दुर्लभो नौ समागमः ॥ ५ ॥

1156 प्रवत्स्यामीति वक्तुं चेत्काठिन्यं तस्य विद्यते ।
प्रीयेत पुनरेत्यासाविति व्यर्थो मनोरथः ॥ ६ ॥

1157 मणिबन्धाद्विगलिता तनिम्ना वलया इमे ।
उद्घोष्य प्रियविश्लेषं कुर्युः किं नावहेलनम् ॥ ७ ॥

1158 ग्रामे वासो न सुखदो भवेदाप्तैर्विवर्जिते ।
विप्रयोगः प्रियतमात् ततोऽप्यसुखदो ननु ॥ ८ ॥

1159 स्पृशन्तमेव स्वात्मानं दग्धुं शक्नोति पावकः ।
कामाग्निवत् स्वतो दूरस्थितं दग्धुं स किं प्रभुः ॥ ९ ॥

1160 वियोगमुररीकृत्य तद्दुःखमपनोद्य च ।
वियोगाच्च परं सोढ्वा जीवन्ति बहवो बत ॥ १० ॥

# रामचरितमानसम्——संस्कृतानुवादः

के. तिरुवेङ्कटाचार्यः

## १——बालकाण्डम्

अस्त्येव सिद्धिः स्मरणेन यस्य गणाधिपस्येभमुखस्य नित्यम् ।
करोतु मेऽनुग्रहमेवमेव स बुद्धिराशिः शुभधामयोगी ॥ १ ॥

मूकोऽपि वाग्मी प्रभवेच्च पङ्गुरारोहणे शैलवरस्य शक्तः ।
कलौ दयावांश्च भवेद्य इत्थं सर्वाघनाशी दयतां ममासौ ॥ २ ॥

नीलोत्पलश्यामलदेहकान्तिः नवीनरक्तोत्पलचारुनेत्रः ।
क्षीराब्धिशायीति च यः सदास्ते स प्राप्नुयात् स्थानमुरो मदीयम् ॥ ३ ॥

कुन्देन्दुसंकाशशरीरकान्तिरुमाविहारी करुणानिधानम् ।
यस्याधिका दीनजनेषु वाञ्छा यो मन्मथारिर्दयतां ममासौ ॥ ४ ॥

गुरोः पदाब्जं प्रणमामि मूर्ध्ना दयानिधिर्यो नररूपविष्णुः ।
तमोनिरासे वचनं यदीयं करोति भास्वत्किरणस्य कार्यम् ॥ ५ ॥

वन्दे गुरोरंघ्रियुगाब्जधूलिं सुगन्धसुस्वादुतया रसेन ।
सा चामृतं मूर्तमिवावभाति संसाररोगापनयैकचूर्णः ॥ ६ ॥

धूलिर्विभाति शिवदेहविभूतिरेव कर्त्री मनोहरशुभस्य मुदश्च सौम्या ।
भक्तैकहृन्मुकुरकल्मषनाशकर्त्री फाले धृते वशयते गुणजालमद्धा ॥ ७ ॥

श्रीदेशिकांघ्रिनखरत्नमणिप्रकाशः यस्य स्मृतेः हृदि भवेत् खलु दिव्यदृष्टिः ।
मोहान्धकारविनिवर्तनसुप्रकाशः स्वान्ते हि यस्य स भवेत् खलु धन्य एव ॥ ८ ।

उन्मीलिते हृदयनेत्रवरे कटाक्षात् संसारदुःखमखिलं निहतं च विद्धि ।
यस्येदृशी भवति दृक् स विलोकयेद्धि श्रीरामसच्चरितरत्नमहो खनिस्थम् ॥ ९ ।

निध्यञ्जनेन च यथा वनशैलपृथ्वीगर्भस्थितं मणिवरं नर ईक्षते च ।
रीत्या तया च रघुनन्दनसच्चरित्रं रत्नं विलोकयति हृत्स्थसदञ्जनेन ॥ १० ॥

गुर्वङ्घ्रिरेणुमृदुलाञ्जनमित्थमत्र दूरीकरोति नयनस्थसमस्तदोषान् ।
तद्वर्णयामि सुविलिप्य विवेकनेत्रं संसारमोचकरघूद्वहसच्चरित्रम् ॥ ११ ॥

खनिर्गुणानां विबुधाश्च सन्तः तान् प्रेममय्या च गिरा नमामि ।
साधोश्चरित्रं खलु तूलतुल्यमच्छं गुणाढ्यं फलकामशून्यम् ॥
सोढ्वा सुदुःखं स्वयमन्यदीयच्छिद्रस्य गोप्ता भुवि सुप्रसिद्धः ।
तस्मादहं तं प्रणमामि मूर्ध्ना परोपकारीति यशोनिधानम् ॥ १२ ॥

आदौ महीसुरपदं प्रणमामि तच्च मोहान्धकारविशयादिनिवर्तकं यत् ।
सत्संसदत्र सदनं शुभमुद्गुणानां तीर्थप्रयाग इह संचरतीव मन्ये ॥ १३ ॥

श्रीरामभक्तिः सुरसिन्धुधारा, सरस्वती ब्रह्मविचारधारा ।
विधेर्निषेधस्य च कर्मकाण्डं सूर्यस्य पुत्री कलिकल्मषघ्नी ॥ १४ ॥

हरेश्शिवस्यापि कथैव वेणी दत्ते श्रुतासौ सकलं च भद्रम् ।
वटः स्वधर्माचरणे प्रतीतिः, सतां समाजः खलु तीर्थराजः ॥ १५ ॥

विद्वत्समाजाभिधतीर्थराजः सर्वत्र दुःखौघनिवारकश्च ।
अलौकिको वागतिरिक्तशक्तिः संसेवितश्चाशु फलं ददाति ॥ १६ ॥

श्रुत्वातितोषादवगाहनं ये तन्वन्ति लोके ह्यनया हि तन्वा ।
बुधा लभन्ते पुरुषार्थजातं तस्मात्सतां संसदमोघतीर्थम् ॥ १७ ॥

एतत्सत्सङ्गतीर्थाप्लवनफलमहो सद्य एवोपलब्धं
काकः पुंस्कोकिलत्वं भजति ननु बको हंसतां नात्र चित्रम् ।
वाल्मीकिर्नारदर्षिः कलशभवमुनिश्चापि नैजं चरित्रं
कण्ठोक्त्यैवोक्तवन्तो न हि किमपि रहस्साधुसङ्गप्रभावे ॥ १८ ॥

द्योभूजलादिचरजीवगणाश्च सर्वे जीवा जडाश्च नजडा अपि ये भवन्ति ।
बुद्धिं यशो धनमुदग्रगतिं कथञ्चित् यद्यान्ति तत्सुजनसङ्गफलं हि विद्धि ॥ १९ ॥

वेदेऽपि नास्ति महितोऽन्य उपाय एव सत्संगतेरिति भवानपि तत्प्रभावम् ।
जानातु साधुजनतो हि भवेद्विवेकः नो चेद्रघूद्वहकृपा न भवेद्विवेकः ।
मोदस्य मूलमपि सत्सहवास एव सिद्धं फलं स खलु साधनपुष्पमन्यत् ॥ २० ॥

दुष्टोऽपि सत्सु वसतेः समुपैति शीलं
लोहो यथा भवति हेम रसस्य संगात् ।
आकस्मिकीं कुजनसंगतिमाप्य साधुः
नैव त्यजेत् फणिफणामणिवद् गुणं स्वम् ॥ २१ ॥

सत्संगतेस्तु महिमा गदितुं विरिंचिवैकुंठरुद्रमुखतोऽपि न शक्य एव ।
तस्मात् कथं खलु वदामि न चोच्यते च मूल्यं मणेर्न हि वदेत्किल शाकजीवी ॥२२॥

अहितेषु हितेषु तुल्यचित्तान् सुजनान् नौमि न तेषु पक्षपातः ।
सुरभीणि सुमानि वासयंते करयुग्मं स्वयमञ्जलिस्थितानि ॥ २३ ॥

सतां चित्तं लोकोपकृतिविषये स्याच्च विमलं
परं ज्ञात्वा शीलं सततविमलं स्नेहमपि च ।
अयं बालो याचत्यनुपदमिति प्रार्थनफलं
वरं दद्युर्मह्यं रघुपतिपदाम्भोरुहरतिम् ॥ २४ ॥

शुद्धेन चित्तेन खलान्नमामि बीजं विना ये सुहृदं द्विषन्ति ।
येषां स्वलाभः परहानिरन्यदुःखं सुखं रोदनमन्यवृद्धौ ॥ २५ ॥

दुष्टाः श्राम्यन्ति न स्वादपरवृजिनसंकीर्तनाकर्णनाच्च
प्राप्तौ स्तः सर्पराजः पृथुरपि धरणीं नूनमित्येव भाति ।
विष्णोरीशस्य कीर्त्याह्वयविधुगिलने राहुतुल्याश्च दुष्टा
दोस्साहस्रं लभंते परहितहनने कार्तवीर्यार्जुनस्य ॥ २६ ॥

दुष्टः साक्षात्करोति प्रतिपदमपरे दोषमक्ष्णां सहस्रैः
चित्तं स्यादन्यदीये हितघृतविषये मक्षिकातुल्यमेव ।

कोपः प्रेतेशसाम्यं भजति च कठिना तीक्ष्णता चित्रभानोः
वित्तं दौर्गुण्यपापं भजति कलियुगे यक्षराजस्य साम्यम् ॥ २७ ॥

केतुप्रोद्भवलाञ्छनेन जगतां दुष्टोदयेनापि वा
स्यादेवाहितमत्र तेषु शयनं कुंभादिकर्णे यथा ।
ये संत्यज्य शरीरमप्यतिमुदा निघ्नन्ति कार्यं परं
क्षीयन्ते खलु ते तुषारकरकाः सस्यं प्रबाध्य स्वयम् ॥ २८ ॥

शेषोऽसज्जनदोषराशिमहितं क्रुद्धो यथा वर्णयेत्
तद्वत् तानसतो नमामि बहुशो नानामुखैर्वर्णनैः ।
किं चैतान् प्रणमामि दुष्टनिचयान् राज्ञः पृथोर्भावनात्
ये श‍ृण्वन्ति परस्य दोषमखिलं त्वास्यैः सहस्राधिकैः ॥ २९ ॥

इन्द्रस्यासति भावनां सुकलयन् वन्देऽसतः सादरं
येषामिष्टतमं च मद्यकलनं स्वाभाविकं वर्तते ।
ये दुर्वाक्कुलिशप्रियाः प्रतिदिनं वज्री यथेच्छेत् पविं
किं चैते हि विलोकयंति वृजिनं चक्षुःसहस्रैरपि ॥ ३० ॥

श्रुत्वा खलः प्रज्वलतीर्ष्यया हितं मित्रेऽपि शत्रावथवा तटस्थे ।
प्रीत्या च तानद्य नमामि मूर्ध्ना बद्धाञ्जलिर्नामितजानुयुग्मः ॥ ३१ ॥

तेभ्यः कृता मे नतयः, यदेभिः कार्यं तदप्येभिरवश्यकार्यम् ।
संपोषिते क्षीरवरेण काके निरामिषेच्छा न भवेद्धि तस्य ॥ ३२ ॥

सदसच्चरणौ नमामि मूर्ध्ना द्वितयं दुःखदमन्तरं तयोश्चेत् ।
विरहे प्रथमस्स जीवहारी चरमः संमिलने ददाति दुःखम् ॥ ३३ ॥

एकत्र नीरे जननं लभन्ते पद्मं जलूकास्तु गुणैर्विभिन्नाः ।
सुराऽमृतं द्वे अपि सिंधुजाते तथैव लोके सदसज्जनिश्च ॥ ३४ ॥

सन्तोऽसन्तश्च नित्यं निजकृतिमनु ते कीर्त्यकीर्ती लभन्ते
लोके जानन्ति सर्वे गुणमवगुणमप्याश्रयन्ते यथेष्टम् ।
संतः पीयूषचन्द्रत्रिदिवगतनदीतुल्यतां यांति चेत् ते
दुष्टाः क्ष्वेडाग्नितुल्याः कलिमलसरिता चापि यान्तीह साम्यम् ॥ ३५ ॥

साधुः साधुतया भाति दुष्टो दौष्ट्येन शोभते ।
अमरत्वे सुधाकर्म भाति मारणतो विषम् ॥ ३६ ॥

खलो दोषान् नित्यं मृगयति गुणान् साधुनिवहः
ततो व्यक्तं तौ द्वौ भवत उदधी दोषगुणयोः ।
अतस्सोऽहं दोषान् गुणमपि च किंचिद् गदितवान्
गुणज्ञानं नो चेन्न हि भवति हेयस्त्ववगुणः ॥ ३७ ॥

धात्रैव सृष्टा अगुणा गुणाश्च तेषां च भेदः श्रुतिबोधितः स्यात् ।
परन्तु वेदस्मृतिपूर्ववृत्तग्रन्थाः जगन् मिश्रमहो वदन्ति ॥ ३८ ॥

सुखं दुःखं पुण्यं वृजिनमथ रात्रिन्दिवभिदा
तथाऽसन्तः सन्तो सुजनिकुजनी दैत्यविबुधाः ।
परं चोच्चं नीचं ह्यमृतगरले जीवनमृती
अजाब्रह्मात्मेशोऽविभवविभवौ रङ्कनृपती ॥ ३९ ॥

काशी मागधभूः सुमालवमरू गङ्गा च कर्मापहा
विप्रा धेन्वशनाः द्युलोकनरकौ रागो विरागस्तथा ।
अस्त्येवं सदसद्युगं यदिह तद्द्वन्द्वेषु वेदागमाः
व्यातेनुर्गुणदोषयोः सुविशदं भेदं विवेकाश्रयम् ॥ ४० ॥

जगत्सदास्ते जडचेतनात्म सृष्टं गुणैर्दोषमयैर्विधात्रा ।
प्राज्ञः स्वयं स्वीकुरुते गुणं हि हंसो यथा क्षीरमिवांबुमध्यात् ॥ ४१ ॥

यदा विरिंचिर्वितरेन्मतिं तां गुणग्रहो दोषविवर्जनं स्यात् ।
कालः स्वभावश्च हि कर्म सन्तं मायाबलात् च्यावयति स्वमार्गात् ॥ ४२ ॥

तस्माद् हरौ भक्तियुता जनाश्च स्वयं प्रमादो यदि कश्चन स्यात् ।
तथापि तद्दोषमपास्य पश्चात् स्वयं यशोभाजनतां हि यान्ति ॥ ४३ ॥
दुष्टः स्वयं सज्जनसङ्गमेत्य न हि त्यजेत्स्वीयमघं कदापि ।
पूज्येत वेषः खलु वंचकस्य वेषप्रभावात्किल सा हि पूजा ॥ ४४ ॥
नाच्छाद्यते वंचकता चिरं हि पौलस्त्यराहू इव कालनेमिः ।
सन्तः कुवेषा अपि पूजनार्हाः यथा हनूमानपि जांबवांश्च ॥ ४५ ॥
हानिं कुसंगो नयतीह साधुसङ्गश्च लाभं तदिह प्रसिद्धम् ।
व्योमोपलब्धिः पवनस्य संगात् धूलेरपां कर्दमतैव दृष्टा ॥ ४६ ॥
ग्रहा मरुत् वस्त्रमथौषधं च जलं च लोके सहवासदोषात् ।
दुष्टं भवेच्चापि तथा ह्यदुष्टं प्राज्ञस्तु लोकः तमवैति लोके ॥ ४७ ॥
जीवानां खनयश्चतस्र इति ते ह्यब्व्योमभूम्यादिषु
प्रत्येकं जननं प्रयान्ति शतधा जात्यामिमे संख्यया ।
लक्षाणां परमेष्ठिवक्त्रवसुतः संख्या युतानां भुवि (८४०००००)
श्रीसीतारमणात्मकं जगदहं संभाव्य वन्देऽनिशम् ॥ ४८ ॥
मां सर्वे कृपया ज्ञात्वा दास इत्यच्छलेन हि ।
यूयं सर्वेऽपि कुरुत कृपां संप्रार्थयेऽत्र वः ॥ ४९ ॥
न बुद्धिशक्तिर्मयि वर्तते तत् संप्रार्थये रामगुणा ह्यपाराः ।
तन्वी च बुद्धिर्गुणवर्णनेच्छा करोतु साह्यं रघुनाथ एव ॥ ५० ॥
काव्यस्य चांगानि बहूनि सन्ति न वेद्मि तान्यल्पमिदं च चित्तम् ।
सुधां मनो वांछति यद्यपीदं न लभ्यते तक्रमपीह किञ्चित् ॥ ५१ ॥
क्षमेरन् सन्तस्ते मम खलु महासाहसमिदं
तथा संमोदात्ते शिशुवचनमित्येव शृणुयुः ।
हसेयुस्तु क्रूराः कुटिलकुविचारैकनिरताः
परे येषां दोषार्पणमिह विभूषा हि भवति ॥ ५२ ॥

न प्रीणयेत् कं कविता स्वकीया रसैर्युता वा विरसाऽथवापि ।
ये त्वन्यकाव्यश्रवणेन हृष्टाः तादृग् वरिष्ठा विरला हि लोके ॥ ५३ ॥

लोके सिन्धुसमास्तडागसदृशा ये वर्धयन्ते निजां
मर्यादां जलदार्पितोदककणाः सन्त्येव सर्वत्र हि ।
केचित् सागरसाम्यमेत्य विवशाः दृष्ट्वा परप्रोन्नतिं
पूर्णं चन्द्रमुदीक्ष्य हर्षविवशो लोके सरस्वान् खलु ॥ ५४ ॥

अल्पं हि भाग्यं महतीह वाञ्छा तथापि विश्वासमुपैमि नित्यम् ।
उद्वीक्ष्य सूक्तिं कुरुते मदीयां साधुर्हि तुष्टिं ह्यपरो हसेच्च ॥ ५५ ॥

हासो दुष्टाग्रणीनां हितकर इति मे भाति लोके हि दृष्टं
काको वक्त्यन्यपुष्टं कठिनगिरमहो चातकं भेकजातिः ।
एवं हंसं बलाकाः गुणिनमपि हसेद् दुर्जनः सन्तमित्थं
सद्वाणीवासितास्यं हसति खलजनो ह्यत्र हानिर्हि का वा ॥ ५६ ॥

हासं कुर्वन्ति लोके रघुवरचरणे भक्तिहीना मनुष्याः
नो जानन्त्येव तादृक् रुचिमपि कवितावर्त्मनां वाग्विलासान् ।
तेषां हास्याय नूनं भवति मम गिरामुद्यमोऽयं यतो मे
धीर्मन्दा लौकिकी वाक् बहु भवति पदं निन्दितुं, तेषु नागः ॥ ५७ ॥

मुरारेः पादाब्जं स्मृतिपथविदूरं दधति ये
मतिस्तेषां मन्दा कथयति कथां साररहिताम् ।
रतिर्येषां नित्यं हरिहरपदाब्जे न कुमतिः
परं सन्तः शंसंत्यनुपदमिमां राघवकथाम् ॥ ५८ ॥

श्रीरामभक्तिपूर्णा वाणी मे तुष्टिदा सतां नित्यम् ।
नाहं चतुरश्च कविः सकलकलाभिश्च विद्यया हीनः ॥ ५९ ॥

शब्दं चार्थमलङ्कृतिं बहुविधां रीतिं च नानाविधां
छन्दो भावरसप्रभेदरचनां दोषं गुणं चेति ये ।

अंशास्तेषु परं विवेकरहितः प्रारंभमात्रादरः
श्वेते काकलपत्रकेऽसितमयी रेखा वदेत् सत्यताम् ॥ ६० ॥

निर्गुणा भवति वाक् च मदीया किन्तु लोकविदितो गुण एकः ।
ते श्रुतिं ददति ये सुमतीड्याः ये विवेचनपरा भुवि सन्ति ॥ ६१ ॥

वाण्यां ममास्ति रघुनन्दनदिव्यनाम तच्चातिपावनमिह श्रुतिसारभूतम् ।
भद्रं पुराणमशुभापहमत्र लोके यत् पार्वतीपतिरपि प्रजपत्यभीक्ष्णम् ॥ ६२ ॥

कामं चकास्तु कविता सुकवेर्मनोज्ञा किं सा विभाति रघुनन्दननामशून्या ।
भूषायुता विधुसमानमुखी तथापि किं शोभते च वनिता वसनैर्विहीना ॥ ६३ ॥

आभाति किन्तु कविता गुणलेशशून्या रामस्य नाम यदि तत्र यशोऽपि च स्यात् ।
साधुः शृणोति वदति प्रगुणां मनोज्ञां सारं परं मधुपवत्स समाद्रियेत ॥ ६४ ॥

विश्वासमेत्य मनसि प्रसृता च वाणी सत्संगतो न हि भवेत् क इह प्रपूज्यः ।
धूमः स्वकीयकटुतामपहाय नूनं संजायते सुरभिलो ह्यगरुप्रसङ्गात् ॥ ६५ ॥

श्रीगोस्वामी ब्रवीति स्फुटमिह चरितं मैथिलीनायकस्य
प्राप्तिस्थानं शुभानामशुभहरणमप्यत्र लोके कलौ च ।
किं त्वेषा वाङ्मदीया प्रकुटिलगमना किन्तु गङ्गेव पुण्या
संगात् रामस्य कीर्तेः शिवतनुगमहो भस्म तत् पूतमाहुः ॥ ६६ ॥

रामकीर्तिसहिता मम वाणी प्रीतिभाजनमियं हि समेषाम् ।
गन्धवान्द्रुरखिलो मलयाप्त्या काष्ठता भवति नास्य विचार्या ॥ ६७ ॥

कापिलं पिबति दुग्धमपारं पांडुरं गुणदमित्यखिलश्च ।
ग्राम्यवाग्रचितरामकथां मे मानयेद्भुवि न वर्णविचारः ॥ ६८ ॥

वाणी मनोज्ञा न हि मे तथापि वस्तु प्रकृष्टं परिकल्प्य भाति ।
माणिक्यरत्नादि च मौक्तिकं च सर्पे गिरौ हस्तिनि किं विभाति ॥ ६९ ॥

राज्ञः किरीटे तरुणीतनौ च लसंति रत्नानि यथैव लोके ।
तथा कवेर्वाक् क्वचिदाप्य जन्म प्रकाशते कुत्रचिदेव चित्रम् ॥ ७० ॥

भक्तस्मृत्या तदानीं द्रुतमुपगतवत्यत्र पत्नी विरिञ्चेः
स्थानं संत्यज्य वेगात् कलिमलहननासक्तचित्ता तदैव ।
मार्गाऽऽयासापनुत्यै रघुवरचरिताख्यानके मानसे सा
नो चेत् स्नायात् श्रमं स्वं कथमिह कुरुते दूरतोऽन्येन किं स्यात् ॥ ७१ ॥

आकर्ण्य वाङ् नरनुतिं स्वशिरः प्रकंप्य पश्चात्तपत्यधिकमत्र कविर्विचार्य ।
पापौघनाशकहरेः गुणगानमेव कुर्यादिति प्रतिपदं च विदुः सुधीन्द्राः ॥ ७२ ॥

भाषन्ते बुद्धिमन्तः कविकुलहृदयं सागरं तत्र बुद्धिः
शुक्तिः स्वाती च वाणी सुरुचिरचनावारि कालः शरच्चेत् ।
अम्भोबिन्दुर्मनोज्ञं सकलनुतिपदं मौक्तिकं सुन्दरं च
प्राप्याहो बुद्धिपूर्वं मुदमयमयते शारदासत्कटाक्षात् ॥ ७३ ॥

युक्त्या संविद्ध्य मुक्तां रघुवरचरिताख्यानसूत्रैर्ग्रथित्वा
साधुर्हारं विधत्ते सुविमलहृदये धारयत्येव नित्यम् ।
प्रेमाभिख्यानकान्तिं जगति बुधजनास्तन्वते मौक्तिकानां
हारः सोऽयं गरीयानतिविमलगुणो दुर्लभं प्राप्यते च ॥ ७४ ॥

कलौ जना वायसकर्मकाराः वेषेण हंसा इव ते हि भान्ति ।
अपोह्य वेदोक्तविधिं छलेन पापस्य वृत्ते परिपूर्णचित्ताः ॥ ७५ ॥

श्रीरामभक्ता इति कीर्तयन्ते ये कामकोपादिहिरण्यदासाः ।
धर्मध्वजा वार्षभकर्मकाराः धिङ्मां यदेतेष्वहमग्रगण्यः ॥ ७६ ॥

नाहं वदाम्यवगुणान् मम विस्तरेण यत्तस्य नास्ति कथने च समाप्तिरेव ।
तस्माच्च संग्रहत एव वदामि सन्तो जानन्तु तद् बुधगणाश्चरितं मदीयम् ॥ ७७ ॥

संप्रार्थये बुधगणान् परया च भक्त्या तस्मान्न ते ददति दोषमिमं मदीयम् ।
अस्माच्च ये खलु खलाः प्रवदन्ति दोषं तेऽमी स्युरेव जडतासदनं च दीनाः ॥७८॥

नाहं कविर्न चतुरो वर्णयामि यथामति ।
क्व रामचरितं श्रेष्ठं क्व चाहं संसृतौ रतः ॥ ७९ ॥

प्रचण्डवायुर्यदि वाति वेगात् चलो हि मेरुः किमु तूलराशिः ।
विज्ञाय रामप्रभुतां मनो मे त्रस्यत्यतीव प्रतिपत्तिशून्यम् ॥ ८० ॥
श्रीशारदाशेषमहेशमुख्याः ब्रह्मागमौ वेदपुराणजालम् ।
यन्नेति नेत्येव वदन्ति नित्यं तद्वर्णनासक्तधियो लसन्ति ॥ ८१ ॥
जानन्ति माहात्म्यममुष्य सर्वे तथापि तद्वर्णनतो निवृत्तः ।
न कोऽपि, हेतुं तु वदन्ति वेदाः तद्भक्तिमार्गो बहुधोदितस्तैः ॥ ८२ ॥
अनीहाख्यारूपः स हि सदज एकश्चितिसुखः
परं धाम व्यापी निरवधिकरूपश्च भगवान् ।
स एको नाना सन्नवतरति भूमौ धृततनुः
चरित्रं नाना च प्रकटयति कौतूहलकरम् ॥ ८३ ॥
यस्मिन् दयां च ममतां च करोति रामः तस्मै न कुप्यति दयानिधिरेष सत्यम् ।
दीनानुकंपिहृदयः सरलो जनानां तत्तादृशः प्रभुरयं रघुनाथचन्द्रः ॥ ८४ ॥
स केवलं भक्तहिताय लोके धत्तेऽवतारं प्रणतानुकंपी ।
ज्ञात्वा यशो वर्णयते बुधश्च पूतां स्ववाणीं सफलीकरोति ॥ ८५ ॥
तत्तादृशीं गतिमहं मनसा विचिन्त्य श्रीरामपादनमनादनुवर्णयामि ।
येनाध्वनाधरणिकर्णभवादयश्च यातास्तमेव सुलभं प्रविशाम्यभीतः ॥ ८६ ॥
सेतुं रचयन्ति नृपाः नद्यामाढ्याः परिश्रमाल्लोके ।
विश्रब्धं पारयते पिपीलिका सरितमश्रमं पश्चात् ॥ ८७ ॥
एवं विचिंत्य दृढचित्ततया करोमि श्रीरामकीर्तिकथनं सुपवित्रमद्य ।
व्यासादयः कविवरा जगदुर्विशेषान्नानाविचित्रचरितं कमलापतेश्च ॥ ८८ ॥
तेषां नमामि चरणांबुजमादरेण कुर्वन्तु ते मम मनोरथमत्र सार्थम् ।
प्रीता दिशन्तु वरमप्यधुना कृपातः पूज्या विभातु कविता बुधसंसदां च ॥ ८९ ॥
कलौ युगे ये कवयः प्रकामं श्रीरामकीर्तिं जगदुश्च तेभ्यः ।
नमश्च तेभ्यो य इह प्रगाथां भाषामयीं विष्णुपरां वितेनुः ॥ ९० ॥

सन्तोऽधुना ये कवयोऽथ ये वा पुरा बभूवुश्च तथाग्रतः स्युः ।
तेभ्यो नमः, नः कृतिमाद्रियन्ते बुधाः खलास्तत्र मुधा यतन्ते ॥ ९१ ॥

सा चैव लोके कविता च या हि सर्वोपकारिण्युरु भाति लोके ।
गङ्गा यथा रामचरित्रदृष्ट्यामूढा च मे वाक् जगतां हिताय ॥ ९२ ॥

तथा मदीयं मनसो विकल्पं विचिंत्य चानुग्रहमारभेऽहम् ।
शणो दुकूलस्य समागमेन शोभेत वाणी महतां कृपातः ॥ ९३ ॥

सरलां परमचरित्रां कवितां शंसन्ति बुधजना लोके ।
आलोक्यैतामरयो वैरं त्यक्त्वा प्रशंसनासक्ताः ॥ ९४ ॥

तादृग्विधा न धिषणा मयि चास्ति संतः
कुर्वन्तु मे हरियशःकथने प्रसादम् ।
संप्रार्थये च महतो विनयेन शश्वत्
क्व स्यान्मतिर्मम कृशा क्व महच्चरित्रम् ॥

रघुनन्दनचरिताभिधमिह मानसमुदितं
कविकोविदजनता किल गदिताऽत्र हि हंसाः ।
शिशुभाषितमुररीकृतमनुचिन्त्य च मनसि
प्रगुणां खलु करुणां मयि तनुयुर्गुरुचरणाः ॥ ९५ ॥

सखरं कोमलं चैव सदूषणमदूषणम् ।
रामायणं यो विदधे वन्दे तस्य मुनेः पदम् ॥

वन्दे च चतुरो वेदान् भववार्धितरिप्रभान् ।
येषां खेदो न भवति यशो रामस्य गायताम् ॥ ९६ ॥

वन्दे विधेः पादरजः व्यधाद्यः
भवाम्बुधौ साधुसुधागवेन्दून् ।
तथैव यश्चापि ससर्ज तत्र
खलात्मना हालहलं सुरां च ॥

देवद्विजबुधगुरुचरणाब्जेषुप्रणतिमादधेऽञ्जलिना ।
मिलितास्सर्वे कुर्युः मनोरथं मञ्जु सफलमुरुतुष्ट्या ॥ ९७ ॥

सरस्वतीं जह्नुसुतां नमामि द्वे चैव ते सच्चरिते पवित्रे ।
एका जलप्राशनमज्जनाभ्यामन्या पुनाति श्रुतिपाठनाभ्याम् ॥ ९८ ॥

उपदेशे गुरुरूपौ शिक्षायां चापि पितृसमौ वन्दे ।
दीनसखौ रामसखौ निरुपधि तुलसीहितौ भवानीशौ ॥ ९९ ॥

दृष्ट्वा कलिं तौ गिरिजा च शम्भुः तं शाबरं मन्त्रमवोचतां हि ।
जगद्धितार्थं व्यतिरिक्तवर्णमर्थं विना जप्यमुरुप्रभावम् ॥ १०० ॥

मदीयेयं वाञ्छा मनसि भवति श्रीगिरिसुता-
    पतिः कुर्यान्नित्यं निरवधिकृपां स्तोत्रमुदितः ।
लिखेयं श्रीरामप्रगुणगणबद्धां खलु कथां
    स्मरन् शार्वं चित्तं रघुवरकथां चापि मनसि ॥ १०१ ॥

मदीयापि वाणी प्रकाशेत सत्यं सुचन्द्रेण युक्तान्युडूनीव रात्र्याम् ।
नरश्चापि लोके पठेत्सादरं यस्तथैवावधानेन कुर्याच्छ्रुतौ च ॥ १०२ ॥

श्रीरामचरणाम्भोजे सोऽनुरागमवाप्नुयात् ।
कलिदोषैरनालिप्तो मंगलायतनं हि सः ॥ १०३ ॥

नमाम्ययोध्यामतिपावनीं च कलेर्मलघ्नीं सरयूनदीं च ।
श्रीरामसुप्रीतजनांश्च पौरान् रामानुकंपा महती हि तेषु ॥ १०४ ॥

वैदेहीनिन्दकानप्यघकुलसहितान्दोषमेषां निरस्यन्
    यान् पौरान् रामचन्द्रः सकलगुणयुतान् स्वर्गमावासयच्च ।
कौसल्यापूर्वकाष्ठां सुविदितचरितामुत्तमांगेन नत्वा
    प्राग्दिक्कीर्तिप्रकर्षं त्रिभुवनमहितं नौमि नम्रेण मूर्ध्ना ॥ १०५ ॥

अनुग्रहश्शिवस्य स्याद्यदि स्वप्नेऽपि मय्यहो ।
भाषया कथितं सर्वं मदीयं सत्यमेव तत् ॥ १०६ ॥

प्राच्यां दिशि प्रकटतामुदगाच्छशाङ्कः रामाभिधः खलजनाब्जतुषारवर्षः ।
मूर्तीकृतं दशरथस्य सुमंगलं तत् संदृश्यते च महिषी जनभागधेयम् ॥ १०७ ॥
कायेन वाचा मनसा नमो वो रामस्य दासोऽस्मि दयां कुरुध्वम् ।
लेभे विधाता च गुणं विधाय पितॄन् हि रामस्य गुणाम्बुधींस्तान् ॥ १०८ ॥
वन्दे नृपं दशरथं पुनरार्यरामपादाब्जबद्धधिषणं करणैश्च सत्यम् ।
यद्दीनवत्सलवियोगमसह्यमेत्य स्वं देहमेव विससर्ज तृणाय मत्वा ॥ १०९ ॥
वन्दे कुटुंबसहितं जनकं च भूपं भक्तिं रहो रघुपतेः पदयोर्दधौ यः ।
तद्योगभोगपिहिता प्रकटीबभूव श्रीमद्रघूद्वहविलोकनमात्र एव ॥ ११० ॥
पूर्वं पदाब्जं भरतस्य नौमि यस्य व्रतं वर्णनतोऽतिदूरम् ।
श्रीरामपादाब्जगतं यदीयं चित्तं यथालेः सरसीरुहेषु ॥ १११ ॥
वन्देय सौमित्रिपदारविन्दं यच्छीतलं भक्तहितं मनोज्ञम् ।
यदीयकीर्तिर्लसदुच्चदण्डः केतोरभूद्राघवकीर्तिनाम्नः ॥ ११२ ॥
सदानुकूलो मयि लक्ष्मणश्च कृपानिधिः स्याद् गुणसागरो यः ।
शत्रुघ्नपादाब्जयुगं नमामि शूरस्सुशीलो भरतैकसेवी ॥ ११३ ॥
वन्दे पवनसुतं तं ज्ञानघनं दुष्टविपिनदावाग्निम् ।
वसति च रामश्चित्ते सधनुस्सशरो निरंतरं यस्य ॥ ११४ ॥
कपिराजं सुग्रीवं ऋक्षपतिं यातुधानपतिमन्यान् ।
अंगदमुखांश्च वन्दे सुदृष्टरामाः सुनीचतनुगा ये ॥ ११५ ॥
रघुपतिचरणोपासकखगमृगसुरनरमुखान् समान् वन्दे ।
रघुनन्दनपदकमले सेवासक्ता विनैव ये स्वार्थम् ॥ ११६ ॥
शुकनारदसनकादीन् मुनिवर्यान् ज्ञानवारिधीन् वन्दे ।
साष्टाङ्गं सर्वांस्तान् दासे मयि ते कृपां वितन्वीरन् ॥ ११७ ॥
जनकसुता जगदंबा करुणानिधिरामचित्तसत्पात्रम् ।
तस्याश्चरणाब्जयुगं वन्दे मह्यं ददातु सद्बुद्धिम् ॥ ११८ ॥

कायेन वाचा मनसापि रामपदारविन्दं प्रणमामि भूयः ।
राजीवनेत्रः सधनुःशरश्च भक्तार्तिहा भक्तसुखप्रदश्च ॥ ११९ ॥

वागर्थवद्वारितरंगवच्च भिन्नावभिन्नाविति यौ श्रुतौ हि ।
सीता च रामश्च विपन्नबन्धू तयोः पदाम्भोजयुगं नमामि ॥ १२० ॥

वन्दे राघवनामधेयमनघं 'रामे'ति यद्द्विश्रुतं
यद्बीजाक्षरजातमग्नितपनेन्द्वाकारमुद्योतते ।
यच्चापि प्रभवं विरिञ्चिवनमालीशाननाम्नां विदुः
यत् प्राणाः श्रुतिसंहतेश्च तुलनारिक्तं सुपूर्णं गुणैः ॥ १२१ ॥

यमुपदिशति शंभुः मोक्षकृत्काशिकायां
जपति च सततं यं रामनामाख्यमन्त्रम् ।
गणपतिरपि वेत्ति प्राभवं यस्य देवः
प्रथमत इह पूज्यो यश्च तस्यान्वयेन ॥ १२२ ॥

व्यत्यस्तवर्णं जपति स्म तं यः वल्मीकजो वेत्ति स तत्प्रभावम् ।
सहस्रनाम्ना सममेनमुक्त्वा शिवेन साकं सुखिता भवानी ॥ १२३ ॥

ज्ञात्वा स्नेहं भवान्याः निरवधिकमहो रामनाम्नि स्वकीयं
देवो भर्गो ददौ स्वं वपुरनघमिदं भूषितं स्यात्तयेति ।
जानात्येव प्रभावं परिमितिरहितं रामनाम्नः पिनाकी
पीयूषत्वेन तस्मिन्नभवदपि यतो भीकरं कालकूटम् ॥ १२४ ॥

वर्षाः स्यात् रामभक्तिस्तु शाली तु तुलसी मतः ।
रामेति द्व्यक्षरं लोके नभःप्रोष्ठपदौ स्मृतौ ॥ १२५ ॥

रेफो मकारश्च मनोहरौ स्तः वर्णावलेस्तौ भवतस्सुनेत्रे ।
स्मृतेर्जनानां सुखदौ फलेतां कीर्तिं च मुक्तिं स्वयमेव दत्तः ॥ १२६ ॥

जपश्रुतिस्मृत्यतिसौख्यदौ च श्रीरामसौमित्रिनिभौ ममापि ।
एकैकशस्तौ रुचये न, जीवो ब्रह्मा च यद्वन्मिलितौ तथा तौ ॥ १२७ ॥

नरनारायणसदृशसगर्भ्यावेवनकरौ जगतो जनतायाः ।
भक्तिसतीश्रुतिकुण्डलभूतौ लोकोज्जीवनतपनविधू च ॥ १२८ ॥

मोक्षामृतास्वादसमानरूपौ भूधारणे कच्छपशेषरूपौ ।
रोलंबरूपौ जनचित्तकञ्जे जिह्वायशोदाबलकृष्णरूपौ ॥ १२९ ॥

रामनामगतौ वर्णौ वर्णानां मुकुटे मणी ।
ऊर्ध्वगच्छत्रवद्धचेकस्चूडामणिरिवापरः ॥ १३० ॥

नाम नामी च तुल्यार्थे किन्तु प्रभ्वनुगाविव ।
ईशोपाधी नामरूपे अवाच्ये सुग्रहे धिया ॥ १३१ ॥

नीचोच्चभावं खलु रूपनाम्नोः यो वा वदेत् स्यादपराधवान् सः ।
जानातु साधुस्स्वयमेतयोर्हि प्रत्येकमाकर्ण्य गुणं च भेदम् ॥ १३२ ॥

यच्चापि रूपं भवतीह किञ्चित् नाम्ना विना हस्तगमप्यवेद्यम् ।
विनापि रूपं यदि नाम विद्यात् स प्रेमरूपं हृदि तद् विराजेत् ॥ १३३ ॥

नामरूपगतिमाहुरवर्ण्यां तदपि च सुखदं यदि विद्येत ।
मध्ये निर्गुणसगुणं नाम द्वयबोध्यास्ते द्विभाषि चतुरम् ॥ १३४ ॥

आस्याभिधद्वारि निवेशयैनं रामाभिधं रत्नमयं प्रदीपम् ।
•जिह्वाख्यदेहल्युपरि प्रकाशं बहिस्तथान्तश्च यदीच्छसि त्वम् ॥ १३५ ॥

(यो जिह्वया नाम रघूद्वहस्य जपन् स जागर्ति विरागशीलः) (पाठान्तरम्) ।
ये जिह्वया नाम रघूद्वहस्य जपन्ति ते जाग्रति मुक्तरागाः ।
अनामयावाच्यमनामरूपं तुल्योज्झितं ब्रह्मसुखं प्रयान्ति ॥ १३६ ॥

जिज्ञासिता दैवगतिर्निगूढा यैस्ते विदन्त्येव जपेन नाम्नः ।
जपाह्वयं प्राप्य च साधका हि भवन्ति सिद्धा अणिमादिलब्ध्या ॥ १३७ ॥

आर्ता जप्त्वा दुःखदूरा लभन्ते सुखमुत्तमम् ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी भक्ताश्चतुर्विधाः ॥ १३८ ॥

चतुर्णामाश्रयो नाम ज्ञानी तु भगवत्प्रियः ।
युगे वेदेऽखिले स्पष्टं कलौ नाम विशिष्यते[1] ॥ १३९ ॥

ये कामनाशून्यहृदोऽपि च स्युः श्रीरामभक्त्याख्यरसे विलीनाः ।
तेऽपि क्षिपन्त्यात्महृदाख्यमीनं नामानुरागाख्यसरोवरे हि ॥ १४० ॥

ब्रह्माऽगुणं सगुणमप्युभयं ह्यवर्ण्यं यत् वाग्विदूरमसदृक्षमगाधमाहुः ।
नाम द्वयोर्मम मते गणितं गरीयो यत्तत् स्वशक्तित उभे च वशीकरोति ॥ १४१ ॥

ये प्राज्ञाः सन्ति लोके विदुरुभयविधं ब्रह्म ते वह्नितुल्यं
वह्निर्ह्येकोऽन्तरस्थो दहनगुणयुतो दारुणि व्यक्तरूपः ।
अन्यो दाहादिकारी प्रकटितमहिमा दृश्यते तद्वदेतत्
नैर्गुण्यं सद्गुणत्वं ह्युभयमपि परब्रह्मणि प्राप्यते हि ॥ १४२ ॥

उभयमगम्यं सुगमं नाम्ना तत एव गुरुतरं नाम ।
ब्रह्मव्यापकमेकं न विनाशि च सच्चिदानन्दम् ॥ १४३ ॥

एवं प्रभौ निर्विकृतौ हृदन्तः सत्यप्यहो मुह्यति जीवलोकः ।
नाम्नैव साध्यं हि निरूपणं च परीक्षको वक्ति मणेर्हि मूल्यम् ॥ १४४ ॥

एवं च नाम्नो भवति प्रभावः श्रेयान् परब्रह्मण एव निर्गुणात् ।
यथा च रामादपि तस्य गौरवं तथा मयाद्य प्रतिपादयिष्यते ॥ १४५ ॥

भक्तावनार्थं नरदेहिरामः सोढास्ति दुःखानि सतां हिताय ।
तन्नामजापान्नृवरा भवन्ति भद्रस्य मोदस्य च भाजनानि ॥ १४६ ॥

हेतुश्चात्तायमेकां रघुवरतनयः गौतमीमुद्दधार
प्रोद्भूताघान् खलांश्च स्वयमपि कुरुते कोटिशो नाम तस्य ।
विश्वामित्राय रामस्समुतपरिचरां ताडकामाजघान
स्वीयानां दोषदुःखान्यपहरति तमः सूर्यवत्तस्य नाम ॥ १४७ ॥

---

[1] नाम्नो गतिर्न हि—पाठान्तरम् ।

9

रामेण भग्नस्स भवस्य चापो भवस्य भग्नं भयमेव नाम्ना ॥ १४८ ॥
प्रासाञ्च्यदंडकमेव रामः पुनाति चित्तान्यमितानि नाम ।
रामो जघानाशरसङ्घमस्य नामाहरत् सर्वमघं कलेश्च ॥ १४९ ॥
रामो व्यतरत्सद्गतिमहो शबर्यै जटायुषे नाम ।
अमितखलानुदधरदिति वेदे विदिता हि नामगुणगाथा ॥ १५० ॥
रामस्तु सुग्रीवविभीषणाभ्यां ददौ शरण्योऽभयमत्र लोके ।
नामोद्धाराखिलदीनलोकान् लोके च वेदे च यशोऽस्य सिद्धम् ॥ १५१ ॥
बबन्ध रामः किल सेतुमब्धौ ऋक्षैश्च कीशैः श्रमतो हि पूर्वम् ।
भवोदधिः शुष्यति नाम जापाद् अयं विमर्शः सुजनैर्विधेयः ॥ १५२ ॥
पौलस्त्यं सपरिकरं निहत्य रामः प्रापस्वं नगरमहो विदेहपुत्र्या ।
राजानं रघुवरमस्य राजधानीं देवर्षिर्गुणमहितं स्म नौति मञ्जु ॥ १५३ ॥
यो भक्तिपूर्वं खलु नामजापी विना श्रमं मोहमसौ जहाति हि ।
सदा सुखी सद्विषये निमग्नो नामप्रभवान्न हि शोकमीयात् ॥ १५४ ॥
वरदं वरदेभ्योऽपि गरीयो ब्रह्मरामयोः ।
नाम यच्छिव उद्दध्रे शतकोटिचरित्रतः ॥ १५५ ॥

(अनुवर्ति)

## परिशोधः [महावस्त्ववदानम्]

फटिकलालदासः

प्रोवाच राजा पुरपालकं स्वं
"त्वयि स्थिते मे निशि राजकोषात्
चोरेण रत्नानि कथं हृतानि
शीघ्रं गृहीत्वानय तस्करं तम्
रक्षाद्य नो चेत्तव नास्ति मत्तः
करोमि देहं तव शीर्षशून्यम्"।
नृपस्य शिष्टिं कठिनां निशम्य
चोरानुसन्धानकृते ककुप्सु
सर्वास्वधावन् पुररक्षिसङ्घाः।
सर्वेऽनुगेहं प्रतिमार्गमित्वा
चोरं विचिक्युर्निपुणं समन्तात्।

बहिःपुरं जीर्णसुरालयान्त-
र्वैदेशिकस्तक्षशिलानिवासी।
कश्चिद्वणिक् तत्र जगाम निद्राम्।
स वज्रसेनाभिध एव काश्यां
समाययौ घोटकविक्रयार्थम्।
किन्त्वत्र दस्योः कवले पतित्वा
प्रनष्टवित्तो निजदेशमेतुं
नक्तं हताशो निषसाद तत्र।
तं रक्षिणश्चोर इति प्रतर्क्य
बद्ध्वास्य पाणी दृढशृङ्खलाभिः
प्रतस्थिरे बन्दिगृहं जवेन।

क्षणे हि तस्मिन्ननिमेषदृष्टि-
र्ललामभूता पुरसुन्दरीणां
वातायानस्था कुतुकेन मार्गे
समीक्षमाणा जनताप्रवाहान्
श्यामाख्यवेश्या प्रहरं ह्यनैषीत् ।
अक्ष्णोः पुरस्ताद् विरराज तस्याः
सा स्वप्नकल्पा पथि लोकयात्रा ।
तमेव चोरं प्रसमीक्ष्य दूरात्
ससाध्वसा सा सहसा जगाद—
"हा हा कठोरैर्निगडैर्निबद्धः
कोऽयं महेन्द्रादपि कान्तकान्तिः
सालोन्नताङ्गः पुरुषैर्गृहीतः
सन्नीयते प्राकृतचोरकल्पः?
जवेन गत्वा, सखि, रक्षिपालं
मन्नाम धृत्वा वद, 'भोः सखी मे
त्वामाह्वयत्येव, समेहि शीघ्रं
तद्वेश्म बन्द्या सहितः क्षणाय'।"

श्यामाभिधानश्रवणेन रक्षी
मन्त्रेण मुग्धः पुलकाञ्चितः सन्
समाकुलोऽभूत् प्रसभं समेतुम् ।
विवेश गेहं सहितः स बन्द्या ।
स वज्रसेनो नतमस्तकेन
नितान्तलज्जारुणगण्डयुग्म-
स्तस्यैव पश्चात् स्थित एव मूकः ।

हसन् स चख्यौ पुरपालकस्तां,
"कथं वराकेऽसमये तवाय-
मयाचितानुग्रहदृष्टिपातः?
नृपस्य कार्ये चलितोऽस्मि रम्ये,
ततोऽनुमन्यस्व मम प्रयाणम्।"
उन्नीय शीर्षं सहसा जगाद
स वज्रसेनो, "वद किदृशीयं
लीला, मनोज्ञे, मयि निष्ठुरा ते।
आनीय मार्गाद्भवनं तवैतत्
करोषि किं हा कुतुकेन केन
प्रवासिनिर्दोषजनावमान-
दुःखं पुनस्त्वं, वद, सापमानम्"?
प्रोवाच सा तं सदयं विषण्णा,
"भोः पान्थ वैदेशिक, कौतुकं न
करोमि किञ्चिद्भवतोऽवमाने।
अलं प्रदातुं सकलाङ्गभूषाः
शक्ता यदि स्यां निगडानि तेन
स्वमङ्गमारोपयितुं कृतेन।
तवापमानं मम चित्तमद्य
निजावमानं ननु वेत्ति, सौम्य।"
एतावदुक्त्वा निजसिक्तपक्ष्म-
विलोचनाभ्यामिव तस्य गात्रा-
न्ममार्ज सर्वं किल लाञ्छनं सा।
आहूय चख्यावथ रक्षिणं सा,
"यदस्ति गेहे सकलं गृहीत्वा

निर्दोषबन्दीं निगडाद्विमोच्य
प्रयाहि गेहं सदयं कृते मे ।"
प्रोवाच रक्षी, "न तु पारयामि
तवाद्य याच्ञामपि रक्षितुं भो—
ईदृक्षमेतत्कठिनं हि कर्म ।
भूपालकोषान्मुषितं निशायां
केनापि वित्तं; रुधिरं विनातो
नृपस्य रोषः प्रशमं न गन्ता ।"
धृत्वास्य हस्तौ करुणं जगाद
श्यामा ततस्तं, "सविधे तवायं
ममानुरोधो—रजनीद्वयं तु
त्वयाभिरक्ष्यं श्वसितं हि बन्द्याः ।"
निशम्य गां तां प्रहरी समूचे,
"कुर्वे तवेदं वचनं त्वदर्थम् ।"

द्वितीयरात्र्या अवसानकाले
विवेश कारालयकक्षमध्यं
प्रदीपहस्ता ललना हि यत्र
स वज्रसेनो निगडेन बद्धो
मृत्योः प्रभातं समुदीक्षमाणः
इष्टस्य नामानि जपन् वितष्ठे ।
नेत्रेङ्गितं प्राप्य स बन्दिरक्षी
तस्योन्मुमोचायसबन्धनानि ।
व्यलोकयद् विस्मयविह्वलाक्षः
स वज्रसेनो वदनं रमण्याः
कुन्दावदातस्फुटपद्मकल्पम् ।

प्रोवाच तां गद्गदरुद्धकण्ठो,
"विकारघोर-क्षणदाक्षये भो
उषेव शुभ्रा धृतशुक्रतारा
त्वं कात्र काराभवने मदीये
दयामयी श्रीरिव, निष्ठुराया-
मुदेषि पुर्यामयि मुक्तिरूपे,
मुमूर्षुबन्द्याः श्वसितस्वरूपा?"
उच्चैर्हसन्ती रमणी विचख्यौ,
"दयामयी नाम बताहमस्मि"
कारालयोऽसौ विकटोच्चहासै-
र्जातः करालः प्रसभं भयेन।
तस्या हसन्त्या स उदग्रहासः
शोकाश्रुपातैः शतधा विदीर्णो
भवन्पपातेव पुनर्धरण्याम्।
चख्यौ ततः सा रुदती, "पुरेऽस्मिं-
स्तिष्ठन्ति यावद्दृषदोऽस्य मार्गे
न ताः कठोरा हृदयान्मदीयात्।"
एतावदुक्त्वा करमस्य धृत्वा
दृढं बलेनाकृत वज्रसेनं
तस्माच्च काराभवनाद्बहिःस्थम्।

उषाप्रकाशो वरुणाप्रतीरे
प्राचीवनान्ते ददृशेऽथ ताभ्याम्।
तत्रास्त नौका तटतीर्थबद्धा।
आरुह्य नावं सहगामिनं सा
प्रोवाच नारी परमानवद्या,

"भो एहि, वैदेशिक वल्लभात्र ।
जागर्तु नित्यं हृदि सत्यमेतत्—
सर्वं त्रुटित्वा भवरज्जुबन्धं,
प्राणात्यये मेऽसि गतिस्त्वमेकः
त्वयैव सार्धं सरितः प्रवाहे
प्लवेऽहमस्मिन्, हृदयेश्वराद्य ।"
मुमोच नौकां तरिकर्णधारो
जगुर्विहङ्गा उभयोश्च तय्यो-
रानन्दगीतं वनवीथिकासु ।
उन्नीय वक्त्रं करतः प्रियाया
निपीड्य वक्षोपरि तच्च वज्र-
श्चख्यौ, "प्रिये, वग्धि धनेन केन
मुक्तस्त्वयाहं नृपशृङ्खलाभ्यः ।
वैदेशिकि, ब्रूहि कियद्धनेन
ऋणी हि वर्ते सविधे भवत्या
यथावदिच्छाम्यवगन्तुमेतद् ।"
प्रगाढमालिङ्ग्य जगाद नारी,
"न तेन कार्यं वचसाधुना ते ।"
स्रोतःस्थिता सा परिपूर्णवेगा
चचाल तूर्णं पवनेरिता नौः ।
आचक्रमे चण्डरविः खमध्यं
ग्राम्याश्च वध्वो विहिताभिषेका
वासो वसानाः सलिलार्द्रमङ्गे
जलेन कांस्यांश्च घटान् प्रपूर्य
गृहं निवृत्ताः सकलाः क्षणेऽस्मिन् ।

नष्टौ प्रभातक्रयविक्रयौ च
कोलाहलश्चापि तटे शशाम
रेजुश्च मार्गाः पथिकैर्विशून्याः ।
पाषाणतीर्थे तटपादपाधः
स्नानान्नपाकादिविधानहेतो-
र्बबन्ध नावं तरिकर्णधारः ।
जाता द्रुशाखोपरि पक्षिनीडा-
श्छायानिलीना गतिशब्दहीनाः ।
एके पतङ्गाः श्रमकातरास्तु
दीर्घं दिनं तत्र कलं जुगुञ्जुः ।
सुपक्वशस्यामृतगन्धवाही
माध्याह्निकः स श्वसनो यदैव
श्यामास्यवासः स्खलितं चकार,
दृष्ट्वा तदास्या वदनारविन्दं
स वज्रसेनः प्रणयार्तिखिन्नो
व्यथातुरः सन्नवरुद्धकण्ठः
प्रोवाच कर्णे मृदुभाषितेन—
"विमोचितो यामिकशृङ्खलाभ्यो
बद्धस्त्वयाहं स्थिरशृङ्खलाभिः ।
आचक्ष्व मां देवि सुविस्तरेण
दुःसाधमेतद् व्रतमेव केन
मन्त्रेण वित्तैरथवा व्यधत्थाः ।
शक्नोमि बोद्धुं यदि मत्कृते भोः
कृतं त्वया यत्, सकलं च वृत्तं,
तदैकदा तत्परिशोधयामि
स्वप्राणमूल्येन—पणो ममैषः ।"

पिधाय वक्त्रं वसनेन साथ
चख्यौ, "न कार्यं वचनेन तेन।"

संहृत्य हैमं निजवातवस्त्र-
मालोकनौका दिवसस्य यावत्
सुदूरमस्ताचलतीर्थमेकं
जगाम निःशब्दगतेन धीरं
श्यामावहित्रं पवनानुकूल्यात्
समागतं तीरवनं सुरम्यम्।
तनुश्चतुर्थ्याः सितपक्षचन्द्र-
स्तदा विरेजे दिशि पश्चिमायाम्।
निर्वातनिष्कम्पतरङ्गशून्ये
जले तटिन्यास्तनुपादमाला
दीर्घेव रेखा ज्वलति स्म तस्य।
अधोऽन्धकारस्तरुवीथिकानां
झिल्लीस्वनैः सान्द्रविकम्पितोऽभूद्
वीणास्थतन्त्रीरिव मन्द्रशब्दा।
निर्वाप्य दीपं, मलयानिलाङ्के
वितत्य गात्रं तरिवायुमार्गे,
निधाय वक्त्रं युवकस्य चांसे
श्यामा वितष्ठे प्रियदेहलीना।
पेतुश्च केशाः स्खलिताः सुगन्धा
आवृत्य वक्षस्तमसस्तरङ्गै-
रिवास्य वैदेशिकवल्लभस्य।
एवं स्थिता साऽस्फुटमाचचक्षे,

"जानासि किं, प्राणसख, त्वदर्थं
कृतं मया यत्कठिनं हि कर्म?
जाने कठोरा नितरां क्रिया सा,
किन्त्वद्य तस्या अपि हा कठोर-
माख्यानमस्याः सविधे त्वदीये।
संक्षेपतस्तां कथयामि, किन्तु
श्रुत्वा सकृत्तां हृदयाच्चिराय
स्मृतिर्हि तस्या अवलोपनीया।

उत्तीयनामा तरुणोऽत्र कश्चित्
सोन्माद आसीत् प्रणयं ममाप्तुम्।
ममानुरोधान्निजमस्तके ह्य-
श्चौर्यापराधं तव वै गृहीत्वा
प्राणानदादद्य नृपाज्ञया सः।
सर्वाधिकं पापमहो मया य-
न्ममासुकाले विहितं कृते ते
तदेव, सर्वोत्तम, गौरवं मे।"

प्रक्षीणचन्द्रः समगादथास्तं;
वहत् प्रसुप्तिं वयसां शतानां
तस्थावरण्यं रववर्जितं च।
धीरं हि वामाकटिबद्धबाहु-
दाम प्रियस्य स्खलितं बभूव।
निःशाब्दमागम्य तयोश्च मध्ये
रराज विच्छेदकठोरभावः।

निर्वाग् वितष्ठे जडतामुपेत्य
पाषाणलेखेव स वज्रसेनः ।
निधाय शीर्षं चरणेऽस्य बाला
च्छिन्नेव वल्ली प्रियबाहुपाश-
भ्रष्टा लुलोठ प्रसभं धरण्याम् ।
नद्याश्च तस्या मसिकृष्णतोये
तीरान्धकारः सुघनो बभूव ।
अथार्तनारी सबलं भुजाभ्यां
तज्जानुयुग्मं सहसा निबध्य
विशुष्ककण्ठा रहिताश्रुनेत्रा
रोरुद्यमाना वचनं जगाद,
"क्षमस्व पापां, मम जीवनाथ ।
प्राप्यो हि यो मे निजपापदण्डो
हस्ते विधातुर्ह्यभिशापरूपं
विगृह्य सोऽस्तु प्रतिमां कठोरः,
किन्तु त्वदर्थं कृतमेव यद्धि
क्षम्यं त्वया, नाथ, तदेव नाम ।"

संहृत्य पादौ मुखबद्धदृष्टिः
स तामवोचन्—"मम जीवितेन
किं कार्यमासीत्तव, पापशीले?
त्वत्पापमूल्येन हि लब्धमेतद्
धिग् जीवितं मे गुरुपापभागि ।
धिगस्तु च श्वासमिमं मदीयं
यस्तेऽधमर्णः सविधे स्थितोऽस्ति ।

धिगस्तु ते मे नयने च याभ्यां
दृष्टं मुखं तेऽद्य कलङ्कवत्याः ।"
उक्त्वेति पीठात्स समुत्थितः सन्
विहाय नौकां तटमाससाद ।
ततोऽन्धकारे गतिलक्ष्यहीन-
श्चचाल मध्येवनमेक एव ।
पदस्य भारं समवाप्य शुष्क-
पत्राणि शब्दैर्मुखराण्यभूवन्
क्षणे क्षणे कृत्स्नवनं विविक्तम् ।
निर्वातदेशे घनगुल्मगन्धः
पुञ्जीभवंस्तत्र रराज तीव्रः ।
काण्डास्तरूणां परितो विसार्य
शाखाः प्रशाखाः कुटिलाश्च दध्रु-
रसंख्यरूपाणि भयप्रदानि ।
बभूव रुद्धा गतिरस्य पुंसः ।
ततान निस्तब्धनिषेधकल्पं
करं लताशृङ्खलितं वनं तत् ।
विश्रामहेतोर्निषसाद पान्थो
वनस्य भूमौ नितरां श्रमार्तः ।
छायेव केयं तमनुस्थितात्र ?
सहानुपादं तमसि प्रगाढे
तस्यैव पश्चाद् रमणी ध्रुवं सा
रक्तात्कसिक्तं पदमावहन्ती
मार्गं सुदीर्घं विरवं समागाद् ।

स बद्धमुष्टिर्निजगाद पान्थः—
"तथापि मां रे न हि मोक्ष्यसि त्वम् ?"

विद्युत्प्रवेगा रमणी ततः सा
द्रुतं निपत्योरसि तस्य पुंसो
वन्यातरङ्गप्रतिमा ववार
तस्याङ्गजातं निजकेशपाशै-
रालिङ्गनैः स्रस्तदुकूलवेशै-
राघ्राणचुम्बाश्वसितादिभिश्च ।
शोकार्दिता गद्गदरुद्धकण्ठा
पुनः पुनस्तं निजगाद नारी,
"शक्नोमि न त्वामयि नाथ हातुम् ।
त्वदर्थपापस्य मया कृतस्य
त्वं देहि शास्ति—कुरु मर्मघातम् ।
दण्डं पुरस्कारमुत प्रकामं
प्रदाय मुक्तां कुरु मां स्वयं त्वम् ।"
तत्रान्वभूद्वै गहनेऽन्धकल्पः
शशाङ्कताराहितान्धकारो
विभीषिकां सङ्घटितामिवैकाम् ।
द्रुमूललक्षाणि भुवं गतानि
चकम्पिरे चैव महाभयेन ।
दध्वान कण्ठे सकृदेव रुद्धो
निष्पेषितश्वासविकम्पितश्च
स्वरोऽन्तिमः कस्य विनीतिपूर्णः ।
ततः पपातात्र वनस्य भूमौ
सशब्दमेकं गुरुभारवस्तु ।
स वज्रसेनो विपिनाद् यदैव
तीरं वहिन्याः पुनराजगाम

जज्वाल पारस्थितमन्दिरस्य
चूडात्रिशूलं प्रथमप्रभात-
मार्तण्डपादैः क्षणदीप्तिवर्णैः ।
तट्यां तटिन्या जनवर्जितायां
सोन्मादकल्पो विचरन् विरागो
दिनं स दीर्घं गमयाम्बभूव ।
मध्याह्नभानोर्ज्वलदग्निकल्पा
मयूखमाला कशयेव तस्य
सर्वाङ्गमाहन्नभितः कठोरम् ।
कच्यां रमण्यः कलशान् वहन्त्यो
दृष्ट्वा दशां तस्य तथाविधां तु
जातानुकम्पाः करुणं तमूचुः—
"नास्ते गृहं चेदयि, दुःस्थ पान्थ,
समेहि सार्धं गृहमस्मदीयम् ।"
ददौ तु नासौ प्रतिवाचमेकाम् ।
तृष्णार्तवक्षो विददार तस्य
तथापि नद्या जलबिन्दुमेकं
पस्पर्श नासौ स्वतृषोपशान्त्यै ।
दिनावसाने ज्वरतप्तदेहो
धावन्नविक्षत्तरणीं पुनः स
यथा पतङ्गोऽनलमाग्रहेण ।
दृष्ट्वात्र शय्योपरि तत्प्रियाया
मञ्जीरमेकं चरणच्युतं स
न्यधत्त वक्षे शतकृत्व एतम् ।
झङ्कारशब्दोऽपतदस्य चित्ते
तप्तं शराणामिव तीक्ष्णमग्रम् ।

नार्यङ्गवासः पतितं वितष्ठे
नौकैकदेशो धृतगात्रवासम् ।
राशीकृते तत्र मुखं निधाय
तस्थौ स तूष्णीमिव वज्रदीर्णः ।
तं देहगन्धं शतशो विशोष्य
श्वासेन तृप्तिं न ययौ कथञ्चित् ।

अस्ताद्रिशृङ्गं प्रसभं यियासुः
सा शुक्लपक्षस्थितचन्द्रलेखा
रराज सप्तच्छदपत्रगुप्ता ।
प्रसार्य बाहुद्वयमाजुहाव
स वज्रसेनो वनबद्धदृष्टिः—
"एह्येहि तूर्णं, मम वाञ्छिते भोः" ।
अत्रान्तरे तेन वनान्धकारे
छायेव मूर्तिः पुलिने ह्यदर्शि ।
पुस्फोर वाणी पुनरेव वक्त्रात्,
"प्रिये, समेही"ति "समागतास्मि",
श्यामा वदन्तीति पपात पादे ।
"क्षमस्व, बन्धो, न गताः कठोराः
प्राणा ममैते सदये करे ते ।"
आलोक्य वक्त्रं क्षणकालमस्याः
प्रसार्य बाहू परिवेष्टितुं च
स वज्रसेनश्चकितं स्थितोऽभूत् ।
ततोऽपसार्य प्रसभं भुजाभ्यां
क्षिप्त्वा च दूरे निजगाद तां स,
"प्रत्यागता त्वं कथमत्र, दुष्टे?"

## शैशवम्[1]

कृ. त. पाण्डुरङ्गी

जानाति किं जगति कोऽपि कुतो नु निद्रा
    संसर्पिता सुमधुरा शिशुनेत्रमुद्रा ।
अत्रास्ति काचन जनश्रुतिरामनन्ती
    स्थानात्कुतः पुनरियं समुपागतेति ॥
खद्योतदीपितघने वनमध्य आस्ते
    ग्रामोऽप्सरोजननिवास इति प्रसिद्धः ।
स्तत्र मोहनकरे कलिके ततोऽसौ
    निद्रागता शिशुविलोचनचुम्बनाय ॥ १ ॥
निद्राणडिम्भवदनस्फुरितं स्मितं च
    कुत्र प्रसूतमिदमित्यपि वेत्ति कश्चित् ।
अत्रापि चास्ति ननु काचन किंवदन्ती
    यत्रोद्गतं स्मितमिति प्रतिपादयन्ती ॥
स्वप्ने कदाचन हिमाप्लुतकल्यजाते
    मन्दप्रभः तुहिनरश्मिकलांशुरार्द्रः ।
पस्पर्श नाम विगलच्छरदभ्रकोटिं
    जातं तदा स्मितमिदं शिशुवक्त्रलोलम् ॥ २ ॥
प्रत्यग्रता मधुरता सुकुमारता च
    या स्निग्धता च विलसन्ति शिशोः शरीरे ।
अन्तर्हिताः क्व नु बभूवुरिमा इयन्तं
    कालं, किमेतदिह कश्चन वेद लोके ॥
बाल्येऽस्य मातुरभवद् हृदयेऽनुरागः
    तूष्णीं मृदुः स्तिमित एव यदा, तदा सा ।
व्याप्ता हृदन्तरभितोऽथ गताऽर्भकाङ्गं
    प्रत्यग्रता मधुरता सुकुमारता च ॥ ३ ॥

---

[1] रवीन्द्रस्य 'क्रेसण्ट् मून्' नामके सङ्ग्रहे द्वितीयस्य काव्यस्यानुवादोऽयम् ।

# स्वर्गजा[1]

**वसन्त पाटील्**

शब्दातीतं तव विलसति स्वर्णवर्णे सुरूपं
    काले काले ललितमधुरं भाति नित्यं नवीनम् ।
त्वल्लावण्यामृतसरसि ते मग्नचित्ताः कवीन्द्राः
    शृङ्गारं ते ददति सुभगं कल्पनास्वर्णजालैः ॥ १ ॥

रम्यैर्वर्णैरभिनववपू रञ्जयन् वर्तिकाभिः
    हृद्यं रूपं नयति ललने दिव्यतां चित्रकारः ।
मुक्तामाला वितरति सदा वारिराशिः प्रकामं
    त्वन्नेत्राभे रमणि कुरुते मण्डनं रत्नहारैः ॥ २ ॥

भूषार्थं ते कनकवलयान् रत्नगर्भा धरित्री
    नित्यं तुभ्यं रुचिरकनकान् कर्णपूरान् ददाति ।
शृङ्गारार्थं तव सुवदने! पुष्पहारी वसन्तः
    वर्षे वर्षे खलु सुमनसामाकरं यच्छतीव ॥ ३ ॥

इत्थं सृष्टौ ललिततनु ते विग्रहं भूषयन्त्यां
    पर्याप्तं नो भवति सुभगे मण्डनं तावकीनम् ।
भूषातीता भवति ललिते चारुता ते मनोज्ञा
    तस्मान्मन्ये त्वमसि धरणौ स्वप्नभूमिः सुरम्या ॥ ४ ॥

देहं धृत्वा विचरसि यतो भूमिजा दृश्यसे त्वं
    रूपं दृष्ट्वा सुतनु नियतं स्वर्गजां त्वां हि मन्ये ।
अत्रानीताः कमलमृदुले मार्दवप्रीतिमोदाः
    तस्माज्जातं सकलभुवनं नन्दनं दिव्यभोगम् ॥ ५ ॥

---

[1] रवीन्द्रस्य ‘गार्डनर्’ नामके सङ्ग्रहे ५९-तमं काव्यमुपजीव्य प्रपञ्चितमिदम् ।

# अन्तिममामन्त्रणम्[1]

होसे रिसल्—अनु० वे. राघवः

स्वस्त्यस्तु पूज्यजननोर्वि! रविप्रियोर्वि!
प्राच्याब्धिमौक्तिकमणे! मुषितद्युभूसे ।
तुभ्यं विषादमयमप्यतिहर्षतोऽह-
मेतन्मदीयमिह जीवितमर्पयामि ॥
यदीदं जीवितमितोऽप्यभविष्यत्समुज्ज्वलम् ।
फुल्लमम्लानमेवं चाप्यदास्यं श्रेयसे तव ॥ १ ॥

---

[1] फिलिपीनस्-देशभक्ताग्रेसरेण होसे रिसल्-नामकेन शास्तृभिर्हिस्फानियीयैर्वध्यतया दण्डितेन स्वहननस्य षड्ढोरातः पूर्वमुदीरितोऽयं सन्दर्भः 'Posterer Adios' नामकः। मूलं कविना कटिल्लियन्नाम्न्या हिस्पानियभाषया रचितम्; बहुश आङ्ग्लभाषया, भाषान्तरैश्च अनूदितं च। इदमत्रेदंप्रथमतया संस्कृतभाषया प्रार्थनानुसारमनूदितं मया। मूले प्रतिपद्यं पञ्च पादा वर्तन्ते; मया वसन्ततिलकेन सहानुष्टुभमेकामायोज्य समर्थितो मूलसंमिततयानुवादः।

राष्ट्रवीर एष कविः मणिलपुरात्कियति दूरे वर्तमाने कलम्बनाम्नि पुरे सन् १८६१ जून् १९-तमे दिवसे जातः। बाल्य एव स्वकविताशक्तिं प्रकटयतानेन उपरि विद्यार्जनार्थं हिस्पानियदेशं गतम्; तत्र च वैद्यकं, दर्शनानि, चित्रं पुस्तकर्म चाधीतानि। वैदेशिकानां शास्तृणां हिस्पानियानामनीतेरवहेलनकरीं 'नोलि मे तङ्गरे' नाम्नीं (Noli Me Tengere) कथां च लिलेख। १८८९-९१ तमेषु वर्षेषु स्वदेशस्वातन्त्र्यसमुद्धरणादिविषयकं बहु बहुविधं च साहित्यं तेन प्रकाशितम्। १८९१ तमे वर्षे च स्वप्रतिपक्षदोषोद्घाटनपरा 'तृष्णाधिराज्यम्' (Reign of Greed) नाम द्वितीया कथा प्रकाशिता। १८९२-तमे वर्षे राज्याभिद्रोहदोषमारोप्य स नियन्त्रितः, स्वदेशान्निर्वासितः, बार्सिलोनानगरे च गृहीत्वा कारायां प्रक्षितः राज्यपरिवर्तनजनक्षोभोत्तेजनादिकं दोषं प्रख्याप्य १८९६, डिसम्बर् ६-तमे दिने विचाराभासमारचय्य अपराधितया निर्णीतः वध्यदण्डं च प्रापितः। १८९६, डिसम्बर् ३० तमे दिवसे सप्तवादनावसरे वागुम्बायनक्षेत्रे नलिकास्फोटेन निहत्य घातितश्च। मरणात्पूर्वस्मिन् दिने, तथा रात्र्यां च बह्वलेखि तेन काव्यलेखादिकं, यत्रेदमप्येकं 'Ultimo Adios', 'चरममामन्त्रणम्' नाम, यत् तदीयकाव्येषु श्रेष्ठतमं प्रथते। मातृभूम्यर्थे कविनानेन प्राणत्यागो यः कृतः, ततः पञ्चाशद्वत्सरेभ्यः परं १९४६ तमे वर्षे तदीयदेशेन स्वातन्त्र्यमुपालम्भि; यत्स्वातन्त्र्यं जानराज्यं च त्यागवीरेण कविनानेनाशंसितं तत्तदीयामरशक्त्योदीरितमुत्तम्भितं बभूव।

प्राणांस्त्यजन्ति समरेष्वपरे विसंज्ञं
    युध्यन्त एव विशयं शुचमप्यपास्य ।
यः कश्चनापि भवतात् मरणप्रदेशः
    त्यागार्थमाह्वयति चेज्जननप्रदेशः ॥
        पुष्करं करवीरं वा शिबिरं शूलमेव वा ।
        युद्धं वाप्यपमृत्युर्वा तुल्यं जन्मभुवार्थितम् ॥ २ ॥

एष म्रियेऽद्य हि यदा रजनीतमोऽन्ते
    व्योमानुरज्यति विभातनिवेदनाय ।
वर्णं यदीच्छसि तवोषस उज्ज्वलश्रि
    मातर्गृहाण रुधिरं मम वर्ततेऽत्र ॥
        अस्मिन् मुहूर्ते मङ्गल्ये निपात्य रुधिरं मम ।
        तव प्रभामुदयिनीं समुज्ज्वलतरां कुरु ॥ ३ ॥

बालो यदासमविकस्वरयौवनोऽह-
    मासं यदा च तरुणः परिपूर्णशक्तिः ।
आशाभवन्मम तदैव कदाचिदीक्षे
    त्वां पूर्ववारिनिधिरत्ननिभामितीह ॥
        आशाभूद् द्रष्टुमानीललोचने ते निरश्रुणी ।
        फालं चाभ्रुकुटीरेखं मसृणं चालाञ्छितं ह्रिया ॥ ४ ॥

आशा जनेर्मम! ममोत्सुकतेऽतितीव्रे!
    त्वां गत्वरो द्रुतमुपह्वयतेऽयमात्मा ।
आः शोभनं कियदिवेदमहं पतामि
    यत्तुभ्यमुड्डयनमेव ततः प्रदातुम् ॥
        आः शोभनं कियद्दातुं जीवितं ते मृतिर्मम ।
        त्वद्व्योम्नि त्वद्विचित्रोर्व्यां मृतिर्निद्रा च मे सदा! ॥ ५ ॥

चैत्ये मम प्रसृतगुल्मघनान्तरोप-
रूढं कदाचिदवलोकयसे यदि त्वम् ।
किञ्चित्सुफल्गु कुसुमं, नय तत् त्वदोष्ठम्
आत्मानमेवमपि मे परिचुम्ब मातः ॥
एवमत्रातिशिशिरे चैत्ये प्रस्वपता मया ।
फालदेशेऽनुभूयेरन् श्वासास्ते कोष्णकोमलाः ॥ ६ ॥

निध्यायतां मसृणयाप्युपशान्तया मां
स्वज्योत्स्नया हिमकरः; क्षणविभ्रमां च ।
लक्ष्मीमुषा वितरतान्मम; वात एष
मन्दं करोतु रुदितं बत मर्मरैः स्वैः ॥
कदापि कोऽपि पक्षी चेत् मच्चैत्यस्वस्तिकोपरि ।
अवतीर्य च विश्राम्येत् शान्तिगीतं स कूजतु ॥ ७ ॥

सूर्यः प्रताप्य खर एष जलं प्रवृष्ट-
माक्रन्दितेन सह मेऽमलवायुरूपम् ।
आकाशमुन्नयतु; किञ्च सखात्र कश्चित्
उद्दिश्य रोदितु मदीयमकालमृत्युम् ॥
यदा प्रार्थयते कश्चित् शान्तसन्ध्यासु मत्कृते ।
प्रार्थयस्व त्वमप्यम्ब! मम विश्रममीश्वरे ॥ ८ ॥

त्वं प्रार्थयस्व जनकावनि! तत्कृते ये
सर्वेऽत्र दुर्भगतया मरणं प्रयाताः ।
सर्वेऽपि ये ययुरिहानुपमानपीडाः
दीनाश्च मातर इमाः शुचि या रुदन्ति ॥
अनाथडिम्भा विधवा बन्दिनो ये च हिंसिताः ।
तेषां कृते प्रार्थयस्व तव चैव विमुक्तये ॥ ९ ॥

रात्रिः श्मशानमिदमावृणुते यदान्ध-
कारेण यामिकवदस्ति शवौघ एव ।
एषां तदा भवति योऽत्र शमो विविक्त-
गम्भीरिमा च तममुं न विनाशय त्वम् ॥
कदाचिच्छृणुयास्तन्त्रीवाद्यानां मूर्च्छना इह ।
अहमेव स गायामि जन्मभूमे कृते तव ॥ १० ॥

मच्छावचैत्यमपि विस्मृतमेव सर्वैः
न स्वस्तिकं न च शिलास्ति तदीयलक्ष्म ।
एवं यदा भवति कालगतौ तदानी-
मेतां जनः कृषतु लाङ्गलफालकैर्गाम् ॥
यावच्च न भवेच्छून्यं भस्म मे तावदेव तत् ।
भूयान्मातर्वासचूर्णं त्वदास्तरणकम्बले ॥ ११ ॥

नास्ते ततः किमपि विस्मरणं यदाहं
स्यां प्रापितः, तत इतस्तदनु भ्रमामि ।
ते व्योम्नि गर्तभुवि ते तव चावकाशे
स्पष्टस्फुरत्स्वरमयः श्रवणाय ते स्याम् ॥
स्यामहं तव गन्धश्च ज्योतिर्वर्णाश्च गीतयः ।
मन्द्रालापाश्च रुदितं श्रद्धां नित्यं जपन्मम ॥ १२ ॥

पूज्ये ममोद्भवधरित्रि ! मदीयशोक-
सारायिते फिलिपिना दयिते शृणु, त्वाम् ।
आमन्त्रयेऽद्य, वचनं चरमं ममेदं
त्यक्तास्त्वयि प्रियजनाः पितरश्च तत्र ॥
यत्र सन्ति न दासा वा घातुकाः क्रूरशासकाः ।
श्रद्धा न मृतये, देवः शास्ता, तत्र व्रजाम्यहम् ॥ १३ ॥

स्वस्त्यस्तु वः सहभवाः पितरो मदंशाः!
　　नष्टे स्वधामनि च बाल्यसुहृज्जना ये ।
आयासकारिणि दिनेऽद्य समाप्तिभाजि
　　गच्छानि शान्तिमिति दत्त कृतज्ञतोक्तिम् ॥
　　　　स्वस्त्यस्त्वज्ञातबन्धो ते स्वस्ति ते मित्र मत्प्रिये ।
　　　　स्वस्ति सर्वे प्रियजनाः ! शान्तिर्हि परमा मृतिः ॥ १४ ॥

# अण्डप्रमाणकं धान्यम्

[1]टाल्स्टाय्—अनु० वे. राघवः

कस्मिंश्चिद्दिने गिरिनिर्दरप्रदेशे मध्ये सरेखं धान्याकारं, किन्तु अण्डवत्स्थूलं किमपि वस्तु कैरपि डिम्भकैरुपालम्भि। तत्पथेन गच्छता पान्थेन केनापि तदवलोक्य, एकया वराटिकया क्रीतं, नगरं नीत्वा कौतूहलकरमिति राज्ञे विक्रीतं च।

राजा तु स्वीयान् पण्डितानाहूय 'किमिदं वस्तु, निर्धारयत' इत्युवाच। बहुज्ञास्ते मुहुर्विचारयन्तोऽपि तत्स्वरूपमधिगन्तुं न शेकुः। एवमेव तस्मिन् वस्तुनि वातायनमूलदेशमधिशयाने, अन्तरुड्डीय कुक्कुटी काचन तच्चञ्च्वा अविध्यत् यावत् तत्र द्वारमजनि। ततस्सर्वैरपि तद्धान्यमित्यबुध्यत। विद्वांसस्ते राजानमासाद्योचुः 'तदेतद्धान्यम्' इति।

श्रुत्वैतन्नृपतिः परं विसिष्मिये, आज्ञापयामास च पण्डितान् 'ईदृशं धान्यं कदा कुत्र प्ररूढमिति मृगयत' इति। पण्डिता आलोचयामासुः, स्वपुस्तकेषु च व्यचिन्वन्, परं तु तद्विषयकं न किमपि ददृशुः। ततः प्रत्यावृत्तास्ते नृपमवादिषुः 'न वयं पारयामस्ते दातुमुत्तरम्; न तदधिकृत्य नो ग्रन्थेषु किमप्यस्ति; कर्षकाः प्रष्टव्याः, कदाचित्तेषु कैरपि स्वपितृभ्यः कदा कुत्र धान्यमियत्प्रमाणं प्ररुरोहेति श्रुतं स्यात्' इति।

ततश्च आज्ञा राज्ञा दत्ता वर्षिष्ठः कोऽपि कर्षकः स्वाग्रत आनेतव्य इति। भृत्यैस्तादृशः पुरुष आसादितः, राज्ञस्सकाशमानीतश्च। वृद्धः, आनताङ्गीभूतः, भस्मपाण्डुरः, दन्तशून्यश्च स आलम्बनयष्टिद्वयसाह्येन स्खलितस्खलितं भूपतेस्सन्निधिमाजगाम।

---

[1]ऐषमो नवम्बर्मासे प्रख्यातस्यास्य रूसीयलेखकोत्तमस्य स्मृतिशेषं गतस्य पञ्चाशत्तम आब्दिको महो भवति। तमुद्दिश्य श्रद्धाञ्जलिपुरस्कृतं विविधं साहित्यमयं कार्यं यत्प्रवर्तितं, तत्र संस्कृतभाषया च किमपि कर्तव्यम्, साहित्यनिर्मातुरस्य लघुकथा कापि संस्कृतेनानूद्य संस्कृतप्रतिभायां प्रकाशनीयेति निर्दिष्टम्। तदनुसारेणात्रास्य लघ्वी कथा काचन मयानूद्य दीयते।—वे. रा.

तस्मै तद्धान्यं नृपतिर्दर्शयामास। वृद्धस्तु न तद् द्रष्टुमपि शशाक; करे त्वादाय स्पर्शेन विममर्श। राजा पप्रच्छ—

'अयि वृद्ध! एवञ्जातीयकं धान्यं कुत्र प्ररुरोहेति त्वया वक्तुं शक्यं किम्? अपि कदाचित्त्वया ईदृशं धान्यं क्रीतं, उप्तं वा तव क्षेत्रे?'

वृद्धस्तु तावद्बधिर आसीद् यन्नृपोक्तं न स शुश्राव; अतिकृच्छ्रेणैव तदुक्तं बुध्यते स्म।

अन्ततश्चोत्तरमदात्—'एतत्सदृशं न मया उप्तं, न वा उच्चितं मत्क्षेत्रेषु, न वा कदापि ईदृशं मया क्रीतम्। यदा तु धान्यमस्माभिः क्रीतं, तद्धान्यं सदैव प्रतन्वेव बभूव, यथा तदधुना वर्तते। किन्तु मदीयः पिता भवद्भिः प्रष्टव्यः, कदाचित्तेन श्रुतं स्यात् कुत्रैतादृशं धान्यं प्ररूढमिति।'

एवं च वृद्धस्य पिता नृपेणाकारितः। स लब्धो, नृपसन्निधिं प्रापितश्च। एकया प्रचारसाह्ययष्ट्या स सञ्चरमाण आजगाम। नृपो धान्यं प्रदर्शयामास। द्रष्टुं शक्त एव स वृद्धः कर्षकः तद्धान्यं सुष्ठु न्यरूपयत्। राजा च पप्रच्छ—

'अयि वृद्ध! कुत्र धान्यमीदृशं प्ररोहशीलं बभूवेति किं नो निवेदयितुं न शक्नोषि त्वम्? ईदृशं किमपि कदापि त्वया क्रीतं वा, त्वत्क्षेत्रेषु उप्तं वा?'

वृद्धतरोऽयं किञ्चिदिव मन्थरश्रवणोऽपि स्वपुत्रापेक्षया समीचीनतरं श्रोतुं शशाक।

स उत्तरयामास—'नैव; नैव मया धान्यमीदृशमुप्तमुच्चितं वा मत्क्षेत्रे। क्रयस्तु नासीदेव। न मया किमपि क्रीतं, यतो मदीये काले पणो नोपायुज्यत; सर्वोऽपि स्वं स्वं धान्यं पुपोष। वस्त्वन्तरापेक्षायां सत्यां मिथो विनिमयमकरवाम। कुत्रेदृशं धान्यं रुरोहेति नाहं वेद्मि। अस्मद्धान्यं तु स्थूलतरमासीदेव, अद्यतन-धान्यादधिकमेव च पिष्टं ददौ, परं तु एतादृशं किमपि कदापि नाहमालोकयम्। किन्तु पित्रा मे कथ्यमानमिदं श्रुतं यत् तदीये काले धान्यं स्थूलतरं ववृधे, अस्मद्धान्यापेक्षया भूयसा च ददौ पिष्टमिति। तं प्रष्टुमर्हन्ति भवन्तः।'

ततो वृद्धस्यास्य पित्रे सन्देशं नृपः प्रेषयमास। सोऽप्युपलब्धः राज्ञः पुरस्तादुपस्थापितश्च। स अनायासमेव प्रचचार, विना चालम्बनयष्टिम्; चक्षुरस्य विशदमासीत्, श्रवणं च स्पष्टम्; व्यक्तं च स बभाषे। राजा तं प्रदर्शयामास तद्धान्यम्। स वृद्धः पितामहः तदालुलोके, हस्ते तत इतः परिवर्त्त्य च निरूपयामास।

'चिरादीदृशमुत्तमं धान्यं पश्यामि!' इति वदन् तस्य खण्डमेकमखादत्, आस्वादयच्च। उवाच च—'सैवास्य जातिः' इति।

नृपोऽवादीत्—'ब्रूहि पितामह! कदा कुत्रैतादृशं धान्यं वर्धितम्? एतादृशं कदापि त्वया क्रीतं वा, उप्तं वा त्वत्क्षेत्रे?'

वृद्धः प्रत्युवाच—'मदीये काले धान्यमेतादृशं सर्वत एव प्ररोहशीलमासीत्। मदीये बाल्ये एतादृशेनैव धान्येनाहमवर्तयम्, अन्यानभ्यवाहारयं च। ईदृशमेव धान्यमस्माभिरुप्तम्, उच्चितं, खले पावितं च।'

नृपतिः पप्रच्छ—'ब्रूहि पितामह! किं तत् त्वया कुत्रापि क्रीतमुत सर्वं तत् त्वयैवारोप्य वर्धितम्?'

वृद्धो मन्दं जहास, प्रत्यब्रवीच्च—'मदीये काले नेदृशं पापं केनापि चिन्तितं यदाहारभूतद्रव्यस्य क्रयः, विक्रयो वा; पणं प्रति च न किञ्चिदपि वयमजानीम। एकैकस्य पुंसः पर्याप्तं स्वीयं धान्यं बभूव।'

'एवं चेत्, पितामह, ब्रूहि कुत्र ते क्षेत्रं बभूव, कुत्र चेदृशं धान्यं त्वया बीजाकृतम्?'

पितामहः प्रत्युवाच—'ऐश्वरी पृथिव्येव मे क्षेत्रम्; यत्र मया कृष्टं तत्रैव मे क्षेत्रं बभूव। क्षेत्रममूल्यं बभूव, न कोऽपि तत् वस्तु स्वीयमित्याह। कायपरिश्रम एवैकस्मिन् पुरुषाः स्वत्वबुद्धिं बबन्धुः।

'प्रश्नद्वयमपि मे व्याख्याहि' इति पप्रच्छ भूपालः। अयं प्रथमः—'तदा कुतो धरणिरीदृशं धान्यमसूत, अद्य च तथाकरणाद्विरता? द्वितीयोऽयम्—कुतस्ते पौत्रः यष्टिद्वयस्यालम्बनेन प्रचरति, पुत्र एकस्य, त्वं तावत्

नैकस्यापि? चक्षुस्ते दीप्तम्, दन्ता दृढाः, भाषणं व्यक्तं, श्रवःप्रियं च। कथमेते विषया एवं संपन्नाः?'

वृद्धोऽपि प्रत्याह—संप्रत्येते विषया एवं जाताः, यतो जना अद्य स्वीयेन परिश्रमेण जीवयात्राकरणाद् विरताः, परपरिश्रमाश्रयणशीलास्सञ्जाताः। प्राचीने काले ईश्वरविहितं विधिमनुसृत्य जना जीवयात्रां चक्रुः। यत्स्वकीयं तत्तेषां बभूव, केनस्वित्परेणोत्पादितं न ते जगृधुः' इति।

—१८८६

## निकषोपलः

### वासिष्ठवैभवम्

*प्रणेता कपालिशास्त्री । प्रकाशयिता—एस्. पि. पण्डित्, अड्वोकेट्, सिरसि, उत्तरकन्नड, मैसूर् प्रदेशः । मूल्यं रू० २ ।*

पूर्वोत्तरभागत्वेन विभक्तोऽयं ग्रन्थः अस्यैव विंशस्य शताब्दस्य पूर्वार्धे दिवं गतस्य काव्यकण्ठपदलाञ्छनस्य वासिष्ठस्य गणपतिमुनेः लोकातिशायि चरित्रं संक्षिप्य वर्णयति । मुनिरयं दाक्षिणात्यः । तिरुवण्णामलैक्षेत्रे अरुणगिरिगुहायां कृताधिवासस्य रमणमहर्षेः शिष्योऽभूत् । तदनुग्रहादाविर्भूतज्योतिरयं मुनिर्निरतिशयं प्राभवमध्यगच्छत् । प्राक्तन्यो विद्यास्तमुपातिष्ठन्त । विशेषतो वेदेषु धर्मशास्त्रेषु ज्योतिषे वैद्यके साहित्ये च निपुणोऽभूत् । भारतवर्षे सर्वत्र सञ्चरन् स तत्र तत्र विद्वत्सभासु स्वस्य प्रभावं प्रकटयामास । संस्कृतभाषया आन्ध्रभाषया चोपन्यस्यन् जनतामाचकर्ष । तस्य वाग्विलासेनाकृष्टया महत्या शिष्यसम्पदा व्यराजिष्ट । अनेके न्यायवादिनः, अध्यापकाः, पण्डिता अन्ये च महीयांसस्तस्य शिष्यत्वं प्रत्यपद्यन्त ।

मुनिरयमिन्द्रादिदेवताविषयकान् गीतमयान् ग्रन्थान् प्राणैषीत् । आहत्य सप्तविंशतिर्ग्रन्थास्तेन प्रणीताः । तेषु उमासहस्रं नाम ग्रन्थः प्रधानभूतः । द्वादशवर्षदेशीयोऽयं भृङ्गदूतं नाम काव्यं रचितवानिति तदुक्त्यैव ज्ञायते । तथाहि—

> मेघदूतमनुकृत्य निबन्धं भृङ्गदूतमिति नूत्नमकार्षम् ।
> चापलेरितमिदं क्व मदीयं कालिदासरचितं क्व च काव्यम् ॥

इति । आशुकविरयं समस्यापूरणे दक्ष आसीत् । तत्र तत्र विद्वद्गोष्ठीषु दत्ताः समस्याः क्षणेनैव निष्क्लेशलेशमपूरयत् । अयं शतावधानी चासीत् ।

कपालिशास्त्रिणो भाषाशैली रमणीया अनुकरणीया च । ग्रन्थोऽयमवश्यं पठितव्यः, परिचेतव्यश्च काव्यकण्ठलाञ्छनस्य मुनेश्चरित्रार्थः ।

## गीतमाला

*वासिष्ठः काव्यकण्ठगणपतिमुनिः । प्रकाशकः—दे. सु. विश्वामित्रः, सिरसि, उत्तरकन्नड, मैसूर् प्रदेशः । मूल्यं न निर्दिष्टम् ।*

गीतमालेयं काव्यकण्ठगणपतिमुनिना विरचितेभ्यो ग्रन्थेभ्यः समुद्धृतैः गीतैः सङ्घटिता । गीतानि सर्वाणि देवताविषयकाणि रसमयानि मधुरपदानि च सचेतसां हृदयमार्द्रीकुर्वन्ति । कविरयं वागात्मनि ब्रह्मणि प्रबुद्धो दृश्यते ।

ग्रन्थेऽस्मिन् अग्निः, गणपतिः, इन्द्रः, वायुः, सूर्यः—इत्यादीनां देवतानां महिमा गीयते । वेदपुराणाद्यनुसारेण तत्तद्देवतास्वरूपाण्यपि सोपपत्तिकं निरूप्यन्ते ।

तपसि निरतोऽयं मुनिः लोकज्ञोऽपि दृश्यते । भारतवर्षस्याभ्युन्नतिमभिलषन् अम्बिकास्तुतिव्याजेनैवमाह—

स्वातन्त्र्यं वनितानां त्रातुं मातरधीशे ।
दूरीकर्तुमपारं दैन्यं पञ्चमजातेः ।
धर्मव्याजमधर्मं भूलोके परिहर्तुम् ।
वेदार्थे च गभीरे सन्देहानपहर्तुम् ।
घोरं वर्णविभेदं कर्तुं च स्मृतिशेषम् ।
उल्लासं मतिशक्त्योः मह्यं देहि महान्तम् ।

## महाविद्यादिसूत्रग्रन्थावलिः

*प्रबन्धा वासिष्ठगणपतिमुनिः । प्रकाशकः—जि. एल्. कान्तम्, येल्लमञ्चिलि । प्राप्तिस्थानम्—डि. एस्. विश्वामित्रः, बि.ए., एल्.एल्.बि., सिरसि, उत्तरकन्नड, मैसूर् प्रदेशः । मूल्यं न० प० ५० ।*

ग्रन्थावलेरस्याः प्रबन्धुश्चरितमस्माभिर्निर्दिष्टमुपरिष्टात् । ग्रन्थोऽयं द्वेधा विभक्तः । तत्र प्रथमे भागे काल्यादीनां देवतानां, द्वितीये गायत्र्यादीनां च स्वरूपं सूत्रैर्निरूपितमस्ति । सूत्राणि मधुरपदानि विशदार्थानि च । तत्तद्देवतातत्त्वं जिज्ञासूनामत्यन्तोपकारकोऽयं ग्रन्थः ।

### श्रीमहावीरवैभवम्

*प्रबन्धा एस्. कृष्णताताचार्यः, बि.ए., नं० ६२, 7 मैन् रोड्, सकेण्ड् ब्लाक्, जयनगर एक्स्टेन्शन्, बङ्गलूर्, मूल्यं रू० १½ ।*

वेदान्तसारज्ञेन विदुषा कोटिकन्यादानं-श्रीकृष्णताताचार्येण प्रणीतोऽयं ग्रन्थः तदन्तेवासिभिः श्रीयुतैः एच्. रामस्वामि-अय्यङ्गार्, वि. आर्. नारायणन्, पि. जि. श्रीनिवासन् इत्येतैः पञ्चषाणां वदान्यानां साहाय्येन प्रकाशतां प्रापितः । रमणीयार्थप्रतिपादनपरैः शब्दैः सन्दब्धोऽयं ग्रन्थः महावीरपदवाच्यस्य श्रीरामचन्द्रस्य लोकोत्तरान् गुणान् मनोहारिण्या सरण्या वर्णयति । वनगमनसन्दर्भेण, निषादसौहार्देन, जटायुःसंस्कारेण, शबरीवृत्तान्तेन, शरणागतविभीषणाङ्गीकारेण च व्यज्यमानाः श्रीरामस्य धैर्यौदार्यादयो गुणाः सप्रमाणं सोपपत्तिकं चास्मिन् ग्रन्थे निरूपिताः । रामायणमहार्णवे तत्र तत्र विप्रकीर्णतया स्थितानि महावीरस्य गुणरत्नान्यत्र राशीकृत्य निदर्शितानि । वालिवधरहस्यं तावत् विद्वद्गोष्ठीषु अन्यथा चान्यथा च व्याख्यायमानं दरीदृश्यते । सोऽपि विषयोऽत्र सोपपत्तिकं विचारितः ।

एवमादिभिः विषयैरुपगूढोऽयं ग्रन्थः संस्कृतज्ञैः श्लाघनीयश्चकास्ति । रमणीयं मुद्रणम् । मुद्रणभ्रंशा अतीव विरलाः । निर्दोषा गुणाढ्या प्रौढा च भाषासरणिः ।

### अमृत-मन्थन अथवा जीवन का दिव्यपक्ष

*डा० मङ्गलदेवशास्त्री । चौखाम्बा विद्याभवन्, बनारस् १ । मूल्यं रू० ४ । १९५६ ।*

प्रसिद्धेन संस्कृतसाहित्यविमर्शविदुषा भूतपूर्ववाराणसीसंस्कृतकलाशालाध्यक्षेण डा० मङ्गलदेवशास्त्रिणा विरचितोऽयं ग्रन्थः । अत्र ग्रन्थकर्तुरन्तर्मुखतामवलम्ब्य अनुसन्दधानस्य आध्यात्मिक्यश्चिन्ताः सरलोदात्तया शैल्या आविष्कृताः । लक्ष्यानुसन्धानं, जीवनपाथेयं, प्रज्ञाप्रसादः इति त्रिधा प्रवहतोऽस्य सन्दर्भस्य ब्रह्मचर्यं, व्रतं, चारित्र्यं, शरीरस्वास्थ्यं, कर्ममार्गः, लोकनीतिः, आत्मतत्त्वविवेचनं, ब्रह्मभावनमित्यादीनि शीर्षकाणि विषयप्रकारं,

प्रतिपादनगतिं च सूचयन्ति। प्रायोऽनुष्टुप्च्छन्द एवादृतम्, अथापि न विरलानि अन्यानि छन्दांसि। मनाक् अक्षरन्यूनातिरक्तता वृत्तस्य न भङ्गाय भवति, यतो ग्रन्थकृता वैदिकी च्छाया तत्र तत्र संयोजयितुमिष्टेति दृश्यते। सर्वथा आर्षीं रीतिमनुसृतं भावप्रधानं चेदं साहित्यम्।

**प्रतिराजसूयम्**

*य. महालिङ्गशास्त्री, एम्.ए., बि.एल्., साहित्यचन्द्रशाला, तिरुवालङ्गाडु। जि. तञ्जावूर्। मूल्यं रू० ६।*

सप्ताङ्कमिदं नाटकं सुविदितेन दाक्षिणात्यकविना श्री. य. महालिङ्गशास्त्रिणा विरचितम्। वनं गतेषु पाण्डवेषु सिंहासनाधिरूढः सुयोधनः प्रजानामनुरञ्जनाय पाण्डवानुष्ठितस्य राजसूयस्य प्रतिरूपतया राजसूयान्तरमाजिहीर्षति। तेनास्य प्रतिराजसूयमिति व्यपदेशः।

नाटकेऽस्मिन् दुर्योधनेन प्रेरितस्य सशिष्यपरिवारस्य दुर्वाससो मुनेः पाण्डवाश्रमं प्रत्यतिथित्वेन गमनम्, द्वैतवने गन्धर्वराजेन चित्रसेनेन दुर्योधनस्य बन्धनम्—इत्येतदुपाख्यानद्वयं महाभारतोपवर्णितं कथावस्तुत्वेनोपनिबद्धम्। मद्रनगरस्थसंस्कृतसमित्या नाटकमिदं पारितोषिकदानेन पुरस्कृतम्। अत्रत्या गद्यपद्ययोः शैली सरला ललिता च। सप्तमस्याङ्कस्यान्ते भरतवाक्यात् पूर्वमायोजितं युधिष्ठिरस्तोत्रात्मकं गन्धर्वगीतं कवेः सङ्गीताभिज्ञत्वं कथयति।

बहुषु अंशेषु नाटकमिदमाधुनिकीं प्रक्रियामेवानुसरति। कुञ्जरिकाकौक्कुटायनयोर्वृत्तान्तो हास्यरसमयो मनो हरति। आहत्य नाटकेऽस्मिन् ४९ पात्राणि सन्ति। एतच्च पात्राणां बाहुल्यं नाटकमेतदभिनयनार्थमुपाददानानां क्लेशावहं भविष्यति।

अत्र केचन शब्दाः साधुत्वविषये चिन्त्याः। तेषु कतिपये शुद्धिपत्रिकायां शोधिताः। अपरे द्वितीयावृत्तौ शोधनीयाः। संस्कृतप्रतिभायामस्य कवेः काव्यानि प्रकाश्यमानानि सहृदयैरास्वादितानि स्युः। अनेन संस्कृतपाठावल्यः, कलिप्रादुर्भावादीनि रूपकाणि, किङ्किणीमालादीनि पद्यकाव्यानि भासकथासारादीनि गद्यकाव्यानि च प्रणीतानि।

**श्रीधन्वन्तरिजन्मामृतं काव्यम्**

*पण्डित प्रभुदत्तशास्त्री, १७८६ स्टेट् बैङ्क् कालोनी, चन्दनी चौक्, देहली । हिन्दीभाषानुवादकः वैकुण्ठशर्मा, एम्.ए. ।*

काव्येऽस्मिन्नमृतमथनकथा १२६ श्लोकैः वर्ण्यते । सर्वत्र शार्दूलविक्रीडितमन्तिमे श्लोकद्वये मन्दाक्रान्ता मालिनी चेति वृत्तत्रयमुपयुक्तं कविना। शब्दधाटी गभीरा सरसा च । अभिनन्दनीयं पठनीयं चेदं खण्डकाव्यं विद्वद्भिः । ललितया हिन्दीभाषया काव्यार्थं यथावदनुवदन् श्रीमान् वैकुण्ठशर्मापि अभिनन्दनमर्हति ।

मुद्रणदोषास्त्वत्र बहवः समापतिताः । मुद्रणे पदानां संश्लेषविश्लेषाव्यवस्थितौ । अवैधाः सन्धयोऽपि दृश्यन्ते। श्लोकेषु प्रथमतृतीयपादयोरन्त्यस्य वर्णस्य लघुत्वं वसन्ततिलकादिषु द्वित्रेषु वृत्तेषु परं छन्दःशास्त्रेणानुमन्यते, नान्यत्र । अत्र तु काव्ये शार्दूलविक्रीडिते एवंविधा दोषास्तत्र तत्रोपलभ्यन्ते । 'पुच्-पुच्-रवं' जायते—रवशब्दः पुंस्येव । 'घटाख्ये तनौ'—शरीरवाचकस्य तनुशब्दस्य स्त्रीत्वं न्याय्यम् । जाजायते, खिद्यामैव, जनुर्मान्—इत्यादयोऽसाधुशब्दाश्च दृश्यन्ते । अन्यथा काव्यमिदं रमणीयं विभाति ।

**श्रीशङ्करगुरुस्तोत्रम्**

*करुप्पत्तूर् वे. कृष्णमूर्तिशर्मा, डेक्कान् कालेज्, पूना ६ । मूल्यं न निर्दिष्टम् ।*

अष्टत्रिंशता श्लोकैः सङ्घटितोऽयं लघीयान् ग्रन्थः प्रणेतुरलघीयसीं वैदुषीमाचष्टे । शार्दूलविक्रीडितं वृत्तम् । निरर्गलप्रवाहा वाग्धारा । साधुपदप्रयोगाः श्लोकाः । पञ्चमश्लोके प्रथमपादस्यान्ते लघुर्वर्णो दृश्यते । सोऽयमेको दोषः गुणसन्निपाते निमज्जति ।

स्तोत्रकाव्येऽस्मिन् श्रीमच्छङ्करभगवत्पादाचार्याणां जन्मनःप्रभृति सर्वज्ञपीठाधिरोहणपर्यन्तं मानुषोचितानि, कानिचिदतिमानुषाणि च चरित्रवस्तूनि

संक्षिप्य वर्ण्यन्ते। अत्र प्रतिपदार्थप्रदर्शनपूर्वकं श्लोकानामखण्डार्थाः सरलया द्राविडभाषया प्रकाशिताः संस्कृतेऽकृतपरिश्रमाणां संस्कृतप्रणयिनामुपकाराय कल्पिष्यते।

शारदा

*पाक्षिकी संस्कृतपत्रिका—अस्या गणतन्त्रदिनविशेषाङ्कः, सचित्रकः। सम्पादकः पं. वसन्त अ. गडगीलः। २५ बांक् रोड्, मुम्बई १। पाक्षिक्याः पत्रिकायाः वार्षिकं मूल्यं रू० ५। विशेषाङ्कस्य रू० २।*

अतीते जनवरिमासे गणराज्यदिने प्रकाशितोऽयं विशेषाङ्कः सविशेषमभिनन्दनमर्हति। "राष्ट्रदेवो भव" इत्येवं वचनपूर्वकं राष्ट्रध्वजवन्दनगीतं गायन्त्येषा स्वस्य निरतिशयां राष्ट्रभक्तिमाविष्करोति। भूयिष्ठतयाऽत्र प्रकाशिता आधुनिकविषयकाः प्रबन्धाः संस्कृतभाषायाः सर्वार्थप्रतिपादनक्षमत्वमावेदयन्ति।

राष्ट्रपतिना श्रीराजेन्द्रप्रसादमहाशयेन संस्कृविश्वपरिषदो द्वितीयवार्षिकाधिवेशने कृतस्योपन्यासस्य सारः, प्रधानामात्येन श्रीजवाहर्लाल्महाभागेन कतिपयेभ्यो मासेभ्यः पूर्वं देहल्यां 'भारतं- वर्तमानं भावि च' इतीमं विषयमधिकृत्य कृतस्य 'आझाद' स्मारकोपन्यासस्य संस्कृतानुवादश्चास्मिन् विशेषाङ्के प्रकाशितः। गीर्वाणगीताञ्जलिः, पञ्चतन्त्रस्य विश्वयात्रा, मल्लुपुराणम् इत्यादयः सर्वेऽपि विषयाः संस्कृतलोकादरणीयाश्चकासति। कतिचन लेखाः प्रायो विमर्शमार्गानुयायिनः, द्वौ पाश्चात्यसंस्कृतविदुषामाङ्कितौ च। अथातो जामातृगवेषणा इत्ययं प्रबन्धो हास्यरसप्रधानः। श्रीभास्करवर्णेकरकृतस्य 'शिवोदय' नाम्नः काव्यस्यादिमं सर्गद्वयमप्यत्र प्रकाशितम्। राष्ट्रपति-प्रधानामात्यप्रभृतीनां केषाञ्चन महापुरुषाणां चित्रैः परिकर्मितैषा स्वस्य शोभां पुष्णाति।

केवलमेकहायन्यप्येषा शारदा विपश्चितां चेतो विनोदयितुं प्रभवति। देशसेवायां प्रसितैषा शारदा चिरं जीयादित्याशास्महे।

साहित्यवाटिका

*मासपत्रिका, प्रकाशकः—यशोदानन्दभरद्वाजः, दिल्लीराज्यसंस्कृत-विश्वपरिषत्, २३ एफ् कमलानगर, कोल्हापुररोड्, दिल्ली ६।*

भारतीयलोकसभाधुरीणस्य श्रीमतः म. अनन्तशयनमय्यङ्गार् महाशयस्य शुभेन सन्देशेनालङ्कृतैषा दिल्लीकविसम्मेलनद्वारा प्रकाशिता। समस्या-पूरणानि पत्रिकायामस्यां प्रधानतया मुद्रितानि दृश्यन्ते। तथा हि—

१. कालोऽस्ति नायं शयनस्य मान्याः।
२. भारतं भारतं नः।
३. साधवोऽपि समागताः।

एतास्तिस्रः समस्याः पञ्चषैः कविभिः पूरिताः पत्रिकायामस्यां प्रकटिताः आगामिन्यां पत्रिकायां प्रकाशनार्थम्—

१. मनीषिणः सन्ति न ते हितैषिणः।
२. युगरूपानुसारतः।
३. यायात् कामुपयोगितां सुरगवी।

इत्येतास्तिस्रः समस्याः प्रदत्ताः।

अद्यापि सहृदयमनोरञ्जकाः समस्यापूरणक्षमाः संस्कृतकवयो भारतवर्षेऽस्मिन्नुन्मिषन्तीति यत्सत्यमुल्लसति हृदयम्। भारतसीमामधिकृत्य कश्चित्प्रबन्धः, मार्कण्डेयपुराणोक्तं कूर्मचक्रं च पत्रिकायामस्यां प्रकाशितम्। इयत्पुनरभिधीयते यत्—अत्र केचन दोषाः समुपलभ्यन्ते। केचिल्लेखकाः संयुक्तवर्णपरस्य पूर्ववर्णस्य गुरुत्वं न गणयन्ति। क्वचित् समस्याभागे पूरणभागे च वृत्तान्यत्वं दृश्यते। तथाहि—'कालोऽस्ति नायं शयनस्य मान्याः'—एषा समस्या—

विप्रस्य सर्वमिह किञ्चिदस्ति
मान्यैरमानि जगतीतलेऽस्मिन्
विप्रोऽधुना याति तु दासभावम्

इति पूरिता दृश्यते। केचिदपशब्दाश्चाप्युपलभ्यन्ते।

एवंविधाः प्रमादाः प्रकाशकेन मुद्रणात् पूर्वं यावच्छक्यं परिशोधनीयाः। सैषा साहित्यवाटिका सचेतसां हृदयं यथावर्जयेत्तथा चिरमेधताम्।

**तरङ्गिणी—संस्कृतपत्रिका**

*मार्गदर्शकः—श्रीखण्डे राव् देशपाण्डे, एम्.ए., अध्यक्षः—डा. आर्येन्द्रशर्मा, एम्.ए., पि.एच्.डि., सम्पादिका—श्रीमती के. कमला, एम्.ए., (प्रथम) सहकारिसम्पादकौ—श्रीमन्तौ केशववामन पाटनकर, एम् .ए., (प्रथम) सुखदेवार्यः, बि.ए., (द्वितीयः) च। मूल्यं न निर्दिष्टम्।*

संस्कृतपत्रिकेयं हैदराबादविश्वविद्यालयस्थकलाशालातः प्रकाशिता। अत्रैकविंशतिः प्रबन्धाः सन्ति, तत्राष्टौ पद्यमयाः, इतरे गद्यमयाश्च। अन्तिमौ द्वौ त्वाङ्ग्लभाषामयौ। अत्र प्रकाशिताः सर्वेऽपि लेखाः तत्तत्प्रतिपाद्येषु विषयेषु नूतनं प्रकाशं प्रसारयन्ति। श्रीमता आर्येन्द्रशर्मणा बृहत्कथाविषयकः प्रबन्धोऽत्र प्रकाशितः। एवं संस्कृतवाङ्मये गीतकाव्यम, ऐतिहासिकं काव्यम्, भाग्यनगरात् श्रीनगरम्, षड्रिपूणामेकतमः, भारतवर्षे शिक्षाव्यवस्था इत्यादयः सर्वे प्रबन्धाः कौतुकमुत्पादयन्ति वाचकानाम्। न स्त्री स्वातन्त्र्यमर्हतीत्येतन्मनुवचनं प्राक्कालोचितत्वेन गजनिमीलिकयाऽवधीरितं, यथावद्व्याख्याय वाचोयुक्तिभिः समर्थितं श्रीमत्या वसुन्धरया। श्रीसुब्रह्मण्यशर्मणः शुकपिकसंवादोऽपि चेतोहरः। शतावधानिभ्यां श्रीश्रीनिवाससोदराभ्याम् 'आनङृतो द्वन्द्वे' इत्यस्य सूत्रस्यार्थं विचारयद्भ्यां 'मातृपितृकृताभ्यासः' इत्यादयः प्रयोगाः समर्थिताः। व्याख्यातृसार्वभौमस्य मल्लिनाथस्य वृत्तान्तोऽत्र साधु निरूपितः।

विद्यार्थिलोकसुलभाः केचिदत्र अपशब्दादयो दोषाः समुपलभ्यन्ते। भाविनीषु सञ्चिकासु यथा नैतादृशाः समापतिष्यन्ति दोषाः तथा सम्पादकैर्दृष्टिर्विधेया।

'उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणाम्' इत्यस्मिन् श्लोके कालिदासेनोल्लिखितं चित्रमत्र पत्रिकायामादौ प्रकाशितं शोभामावहति।

**परिणामः**

*श्रीचूडानाथभट्टरायः । प्रकाशिका—श्रीमती नूतनश्रीः, ८/३१५ काठमाडौं, नेपाल । मूल्यं भा० रु ५, ने. रू० ९. ५० ।*

नाटकमिदं काममपि नूतानां श्रियं भजति । अस्य प्रबन्धा श्रीमान् चूडानाथभट्टरायः सर्वदर्शनाचार्यः । प्रतिपाद्यो विषयश्चाधुनिकः । नान्दीमपहाय अन्यानि सर्वाण्यपि संस्कृतनाटकलक्षणानि नादृतान्यत्र कविना । विष्कम्भकादीनामभावात् प्रत्यङ्कमुपक्रमे वर्तिष्यमाणस्य कथांशस्य सूचनं कर्तव्यमासीत् ।

अत्र गान्धिवादप्रभृतयो राज्यतन्त्रसम्बन्धिनः प्राच्याः प्रतीच्याश्च विषयाः सविमर्शमुपन्यस्ताः । सङ्घटनाप्रकारस्य प्रतिपाद्यस्य वस्तुनश्च संस्कृतवाङ्मयेऽपूर्वत्वात् नाटकमिदं संस्कृतप्रणयिनामभिनन्दनमर्हति । तत्तत्पात्राणामनुरूपा व्यवहाराः काव्यस्य शोभामुत्कर्षन्ति । परन्तु बहुलमुपलभ्यमानाः मुद्रणभ्रंशाः केचिदपशब्दाश्चावश्यं द्वितीयावृत्तौ शोधनीयाः ।

**सिनेमाशतकम्**

*'पद्म' पद्मदत्ता ओझा । साहित्यसदन । व्यावर, राजस्थानम् ।*

शतश्लोकात्मकं काव्यमिदं हास्यरसप्रधानमद्यत्वे देश्यभाषासु दृश्यमानं काव्यवर्त्मानुसरति । अत्र बहव आङ्ग्लादिशब्दा उपयुक्ताः, तथा हि—
१. घड़ी छड़ी पेण्टयुताः कुमाराः । २. सुधासिनेमासिगरेटशेवम् ।
३. लिपिस्टिकालेपमनोहरोष्ठाः । ४. ताम्बूलसेवासिगरेटभक्षम् । ५. टीबिस्कुटं भक्षय होटलेऽस्मिन् ।

आधुनिकं नटीलोकमधिकृत्यैवमाह—

सुलोचना नर्गिस हेलनादयो मीनाकुमारी च तथैव कुक्कू ।
वसन्ति सर्वत्र च मोहमय्यां नृत्यन्ति गायन्ति च मोदनानाः ॥
किं प्रेष्ठवस्त्रं नइलोनसंज्ञं तासां कृते साहिसुशाटिका च ।
पादेषु नित्यं खलु सैण्डलानि सीताचरित्रं च प्रदूषयन्त्यः ॥

इदमीदृशं काव्यमाङ्ग्लशब्दभूयिष्ठं मनोविनोदाय कल्पेत, किन्तु अभिनन्दनीयं न भवति । अत्र बहवो मुद्रणभ्रंशाः अपशब्दा वृत्तभङ्गाश्च सन्ति ।

**कामायनी**

*हिन्दीकाव्यस्य संस्कृतानुवादः । अनुवादकः—भगवानदत्त शास्त्री 'राकेशः', १ जलालमल्लिक रोड्, कलकत्ता ६ । मूल्यं रू० ५ ।*

हिन्दीलेखकः श्रीजयशङ्करप्रसादः सुप्रसिद्धो महाकविः । तेन 'कामायनी' नामकं काव्यं हिन्दीभाषया विरचितम् । तच्चोत्तमकाव्यत्वेन प्रसिद्धं हिन्दीलोके । श्रीमान् राहुलः साङ्कृत्यायनः स्वभूमिकायां हिन्दीवाङ्मये 'शीर्षस्थानीयकम्' इदं काव्यमित्यभिप्रैति । ईदृशस्योत्तमकाव्यस्य संस्कृतानुवादो यः श्रीमता 'राकेश' महाशयेनाद्याविर्भावितः स प्रणयिनां हार्दं धन्यवादमर्हति । 'राकेश'स्य भाषासरणिः सरला मधुरा अन्यूनानतिरिक्ततया मूलार्थबोधने क्षमा च । यावच्छक्यं काव्यमिदं स्वतन्त्रकाव्यमिव यथा विभायात् तथा कृतम् । एतादृशानामुत्तमकाव्यानामनुवादः हिन्दीसंस्कृतयोः मैत्रीं वर्धयिष्यति ।

**भाषणसङ्ग्रहः**

*आदित्यनाथ झा, ऐ.सि.एस्. । वाराणसेयसंस्कृतविश्वविद्यालयसंस्कृतसमित्या प्रकाशितः । मूल्यं न निर्दिष्टम् ।*

ग्रन्थेऽस्मिन् वाराणसेयविश्वविद्यालयोपकुलपतिभिः पं० श्री० आदित्यनाथ झा, ऐ.सी.एस्., महोदयैः संस्कृतविश्वविद्यालयप्रतिष्ठापनदिनादारभ्य संस्कृतसम्मेलनप्रथमाधिवेशनं यावत् तत्र तत्र तत्तदवसरेषु विहिताः अधिकत्रिंशाः प्रवन्धाः प्रकाशिताः । तत्र द्वौ हिन्दीभाषामयौ, एक आङ्ग्लभाषामयः, अन्ये सर्वे संस्कृतभाषामयाः । श्रीमतां झामहाशयानां भाषारीतिः विषयगम्भीरिमा च परस्परस्योत्कर्षमावहतः ।

नूनमयं ग्रन्थः संस्कृतरचनारीतौ नूतनां सरणिं प्रसाधयत्सु ग्रन्थेषु प्रमुखो भवति । ग्रन्थोऽयं संस्कृतज्ञैः परिशील्यमानोऽपूर्वां कामप्युपन्यासशक्तिं नूनं तेषु जनयिष्यति । न चैतत् चित्रं, यतः श्रीमन्त एते झामहोदयाः पण्डितश्रेष्ठानां प्रथितयशसां म० म० डा० श्रीगङ्गानाथझामहोदयानामर्हत्तमास्तनूभवाः ।

श्रीमतां गिरिधरशर्मणां प्राक्कथनं काश्यां संस्कृतविश्वविद्यालयस्योत्पत्तेः क्रमिकाभिवृद्धेश्च वृत्तान्तं संक्षिप्य वर्णयति ।

संक्षिप्तसंस्कृतसाहित्यचरित्रम् (A Concise History of Classical Sanskrit Literature).

*डा० गौरीनाथशास्त्री । द्वितीयावृत्तिः । आक्स्फोर्ड् यूनिवर्सिटि प्रेस्, १९६० । रू. ७.५० ॥*

अयं संक्षिप्तसंस्कृतसाहित्येतिहासग्रन्थः आङ्ग्लभाषामयः । निबन्धा चास्य डा० गौरीनाथशास्त्री, कल्कत्ताराजकीयसंस्कृतमहाविद्यालयस्याद्य अध्यक्षः । अत्र च विपुलस्संस्कृतवाङ्मयाब्धिरतिसंग्रहेण प्रतिपादितः । वैदिक-वाङ्मयमपहाय आपुराणेतिहासम् आच शास्त्राणि सर्वमत्र दिग्दर्शनप्रकारेण वर्णितम् । उपक्रमे पाश्चात्यदेशेषु संस्कृताध्ययनश्रद्धोन्मेषः, प्राचीनलिपीनां वृत्तान्तः, वैदिकलौकिकसंस्कृतपरिणामः, इत्यादिकमपि विमृष्टं दृश्यते । यथा च बी.ए., एम्.ए., विद्यार्थिनामुपकाराय भवेत्तदा लघुभिरध्यायैस्सरलया रीत्या स्पष्टैर्विषयविभागैश्च संकलितोऽयं ग्रन्थः ।

---

## कीर्तिशेषाः जग्गु वेङ्कटाचार्याः

मैसूर्प्रदेशे यादवाद्रीतिख्यातं मेल्कोट्क्षेत्रमध्युषितवतां प्रसिद्धानां इलयवल्लि-जग्गुवेङ्कटाचार्याभिधानां पण्डितानां अस्मिन्नेव शार्वरिवर्षे श्रावणकृष्णाष्टम्यां भानुवासरे षडधिकाशीतितमे वयसि तिरोधानं श्रुत्वा परं विषीदामः । यशःशेषा एते पण्डिताः शास्त्रे साहित्ये च समं लब्धप्रतिष्ठा आसन् । एतैः संस्कृतप्रतिभायां प्रकाशनार्थं प्रेषितः 'अन्योक्तिमाला' नामको निबन्धो नचिरात्प्रकाशयिष्यते ।

—संपादकः

## Our Contributors:

### अस्यां सञ्चिकायां दृश्यमाना नूतना लेखकाः

N. P. Gune, Kaya Kalpa, Ghole Road, Poona 4.

ना. पा. गुणे—"कायकल्प", घोले रोड्, पूना-४ ।

Parasaram Gopalakrishnamurti, M.A., Lecturer in Telugu and Sanskrit, College of Arts and Science, P. O. Siddipet, Medak Dt., Andhra Pradesh.

पराशरं गोपालकृष्णमूर्तिः, एम्.ए.—आन्ध्रसंस्कृताध्यापकः, कलाशाला, सिद्धि-पेट, जि. मेदक्, आन्ध्रप्रदेशः ।

Ram Karan Sarma, M.A., Ph.D., (Calif.), Shahi Nivas, Prabhat Kunja, Muzaffarfur, Bihar.

रामकरणशर्मा, एम्.ए., पिएच्.डि.,—'षाहिनिवास्', प्रभात् कुञ्ज्, मुझफ़र्पुर्, विहारः ।

Vidhu Bhushan Bhattacharya, Sanskrit College, Calcutta 12.

विधुभूषणभट्टाचार्यः—अध्यापकः, संस्कृतकालेज्, कल्कत्ता-१२ ।

S. N. Punekar, B. Ag., Post Sarasvatipur, Dharwar, Mysore.

श्यामनन्दन नरसिंहाचार्य पुणेकर, बि. अग्.,—सरस्वतीपुरम पो०, धार्वार्, मैसूर् ।

Syama Nandana Sastri, Sahitya Sadan, Sivapur, Patna 6.

श्यामनन्दनशास्त्री—साहित्यसदनम्, शिवपुरम्, पाटलीपुत्रम्-६ ।

Gosvami Harikrishna Sastri, Poet, Jaipur 3.

हरिकृष्णगोस्वामी—कविः, जयपुरम्-३ ।

Rama kisora Misra, Ramasimhapur, Soro, Etah, U. P.

रामकिशोरमिश्रः—रामसिंहपुरम्, सोरों, एटा, उ. प्र.

S. K. RAMACHANDRA RAO, Reader in Psychology and Head of the Dept., All India Institute of Mental Health, Bangalore 2.

एस्. के. रामचन्द्रराव्—मनस्तत्त्वाध्यापकः, अखिलभारतीयचित्तारोग्य-विमर्शालयः, बङ्गलूर्-२ ।

K. TIRUVENKATACHARYA, Teacher, National High School, Bangalore 4. Has translated into Samskrit the entire Ramayana of Tulasidas.

के. तिरुवेङ्कटाचार्यः—अध्यापकः, राष्ट्रीयोच्चपाठशाला, बङ्गलूर-४ ।
अनेन समग्रं तुलस्युपज्ञं रामचरितमानसं संस्कृतभाषायामनूदितम् ।

PHATIK LAL DAS, Chandranagore Library, Chandranagore, Dt. Hughly, West Bengal.

Has rendered into Sanskrit many poems of Tagore and published them in the *Manjusha* and the *Samskrita Sahitya Parishat Patrikā*, Calcutta.

फटिक लाल दासः—चन्द्रनागूर् पुस्तकालयः, चन्द्रनागूर्, जि. हूग्लि, पश्चिमवङ्गदेशः ।

अनेन बहूनि रवीन्द्रनाथीयखण्डकाव्यानि संस्कृतभाषायामनूद्य कल्कत्तातः प्रचलन्त्यां मञ्जूषायां, संस्कृतसाहित्यपरिषत्पत्रिकायां च प्रकाशितानि ।

K. T. PANDURANGI, Sanskrit Dept., Karnatak College, Dharwar.
Has written short Sanskrit plays for AIR., Dharwar.

कृ. त. पाण्डुरङ्गी—अध्यापकः, कर्णाटककलाशाला, धार्वार् ।
आकाशवाणीद्वारा प्रयोगार्थं संस्कृते लघुनाटकानि अनेन रचितानि ।

VASANTA S. PATIL, M.A. Assistant Lecturer in Sanskrit, Govt. Arts and Science College, Aurangabad.
Has written and published some minor poems in Sanskrit.

वसन्तपाटील्, एम्.ए.,—संस्कृताध्यापकः, राजकीयकलाशाला, औरङ्गबाद् ।
अनेन कतिचन संस्कृतखण्डकाव्यानि विरचितानि, प्रकाशितानि च ।

# शुद्धिपट्टिका

पूर्वस्यां सञ्चिकायां (१-२) "द्वि 'बिघा' मिता भूः" इत्याख्ये रवीन्द्रसाहित्ये २१६-तमे पृष्ठे एकादशश्लोकानन्तरमेकः श्लोको मुद्रणसमये भ्रष्टोऽत्र दीयते—

कान्तारभूमौ विपणौ प्रतोल्यामित्थं प्रयाताः कति वत्सरा मे ।
अन्ते दृढाभूद् हृदि वासना मे पुनः स्वदेशं प्रतियामि चेति ॥

*अस्यां सञ्चिकायां*

| पृष्ठे | पङ्क्तौ | शुद्धिः |
|---|---|---|
| ४ | ११ | -ह्लादि |
| १५ | २ | -मूर्तिः |
| २४ | ५ | भवत्सपर्या- |
| ५७ | १६ | -रुत्पन्नेति |
| ५८ | ९ | स्वसारं |
| ६५ | ९ | पोर्तुगीजा |
| ६७ | ९ | बहून् |
| ६९ | ७ | विज्ञापयामि |
| | १३ | धृतराष्ट्रः |
| ७० | १२ | (सविनयम्) |
| ७१ | १० | भीमः |
| ७३ | १७ | (सनिर्वेद- |
| ८२ | ९ | हृदयम् |
| ८७ | २० | द्वारि |
| ८९ | १५ | स्वागती- |
| ९२ | ११ | -मुत्तमम् |
| १०१ | ८ | दृष्ट्वा |
| १२९ | शीर्षके | रामचरित० |
| ,, | १५ | श्रेयान् |
| १३० | १० | प्राप स्वं |
| ,, | १३ | -मेयात् |
| १३९ | १२ | निःशब्द |
| १४० | १५ | प्रति मां |

## साहित्य-अकादेमी-परिषदा प्रकाशिताः संस्कृतग्रन्थाः

१. मेघदूतम्—सु. कु. दे.
मुद्रितामुद्रितबहुमातृकापरीक्षणेन नूतनतया सोपोद्घातं सटिप्पणं परिष्कृतम् रू. २.५०

२. विक्रमोर्वशीयम्—ह. दा. वेलण्करः (संप्रति मुद्र्यमाणम्)

३. पुराणेतिहाससङ्ग्रहः—सु. कु. दे—रा. च. हज़रा
(पुराणेतिहासेभ्यः समुद्धृतः कोशः) रू. ७.५०

४. कुमारसम्भवः—सूर्यकान्तः (संप्रति मुद्र्यमाणः)

## अन्ये मुद्रणार्थमुपात्ता ग्रन्थाः

**कालिदासग्रन्थावलिः—**

१. अभिज्ञानशाकुन्तलम्—श्री. कृ. बेल्वेलकरः
२. मालविकाग्निमित्रम्—के. ए. एस. अय्यर्
३. रघुवंशः—वे. राघवः
४. ऋतुसंहारः—पि. एम्. लाड्—वे. राघवः

**कोशावलिः—**

१. वेदाः—विश्वबन्धुशास्त्री—सूर्यकान्तः
२. काव्यनाटकादि—वा. श. अग्रवालः—वे. राघवः
३. बौद्ध-जैन-शिलाशासनानि—न. दत्तः, ही. जैनः, ब. च. छाब्रा
४. सुभाषितानि—के. ए. एस्. अय्यर्—वे. राघवः

## सांप्रतिकं भारतीयसाहित्यम्

(आङ्ग्लवाण्यां, हिन्द्यां च मुद्रितम्)

अत्र आधुनिकसंस्कृतसाहित्यमधिकृत्य विपुलो लेखः अन्तर्भूतः।

**भारतीयलेखकसूची:**—अत्र अद्यतनीयसंस्कृतग्रन्थकर्तॄणां सूची अन्तर्भूता।
(मुद्र्यमाणा)

**भारतीयसाहित्यसूची:**—अत्र मुद्रितसंस्कृतग्रन्थानां सूची अन्तर्भूता।
(मुद्र्यमाणा)

**संस्कृतसाहित्यस्य संक्षिप्तचरित्रम्** (संपाद्यमानम्)

**भारतीयकविता**—अत्र नूतनसंस्कृतकवितानिबन्धाः अन्तर्भूताः। १९५४-५५-मुद्रिता —१९५६-५७ मुद्रणाय सज्जा।




# संस्कृतप्रतिभा

# SAMSKRITA PRATIBHA


द्वितीय उन्मेषः

द्वितीयो विलासः

अक्टोबर् - १९६०

साहित्य अकादेमी, नवदेहली

---

## Statement of ownership and other particulars about SAMSKRITA PRATIBHA

Form IV

*(As required by Rule 8 of Press Registrar's Act)*

| | | |
|---|---|---|
| *Place of Publication* | .. | 7, Sri Krishnapuram Street, Royapettah, Madras 14. |
| *Periodicity of Publication* | .. | Half-yearly. |
| *Printer's Name* | .. | K. Ramanathan, |
| *Nationality* | | Indian, |
| *Address* | | The Vasanta Press, The Theosophical Society, Adyar, Madras 20. |
| *Publisher's Name* | .. | Dr. V. Raghavan, |
| *Nationality* | | Indian, |
| *Address* | | 7, Sri Krishnapuram Street, Royapettah, Madras 14. |
| *Editor's Name* | .. | (Same as above) |
| *Nationality* | | ( ,, ) |
| *Address* | | ( ,, ) |
| *Owner's Name* | .. | Sahitya Akademi, |
| *Address* | | 74, Theatre Communication Buildings, Connaught Circus, New Delhi 1. |

I, V. Raghavan, hereby declare that the particulars given above are true to the best of my knowledge and belief.

23 - 3 - 1960

V. RAGHAVAN
*Publisher*

**संस्कृतप्रतिभा** द्वितीय उन्मेषः द्वितीयो विलासः
अक्टोबर् १९६०
साहित्य-अकादेमी नवदेहली

## विषयानुक्रमणिका

निकषोपलः (पुस्तकविमर्शः)—

गुरुवायुपुरेशाक्षरमालादिस्तवत्रयम् (पै. गणपतिशास्त्री), अष्टप्रासशतकत्रयम् (ए. रामस्वामिशास्त्री), श्रीबोधिसत्त्वचरितम् (सत्यव्रतः), कणः लुप्तः गृहं दहति (के. कृ. सोमयाजी), मनुचरित्रम् (को. य. ना. दीक्षितः), सरोजिनीसौरभम् (म. वे. शास्त्री), सौमित्रिसुन्दरीचरितम् (भवानीदत्तशर्मा), निष्किञ्चनयशोधरम् (ज. वि. चौधुरी), काव्यावलिः (शि. सं. सूर्यनारायणशास्त्री), जवाहरवसन्तसाम्राज्यम् (जयरामशास्त्री), आत्मदानम् (विजयसारथिः), शौरिराजस्तवः (ति. एस्. श्रीनिवासाचार्यः), शबरीचरितम् (सुन्दरेशशर्मा), भारतीयसांस्कृतिकनिधिः (रामजी उपाध्यायः), जीवनज्योतिः, प्रबन्धप्रकाशः (मङ्गलदेवशास्त्री), दीक्षान्तभाषणम् (रामकृष्णराव्), शारदा (व. अ. गाडगीळ), मालवमयूरः (रुद्रदेवत्रिपाठी), गुरुकुलपत्रिका (धर्मदेवः), उद्गातृदशाननम् (य. महालिङ्गशास्त्री), आदर्शराघवः (सोमनाथशर्मा), सङ्गीतसौभद्रम् (वेलण्कर्), आह्निकस्तवः (कपालिशास्त्री), साम्राज्यलहरी (बुद्धिसागरः), धर्मरक्षणम् (भू. लक्ष्मीनारायणः), दुर्गास्तोत्रम् (अरविन्दः—जगन्नाथः), कथामञ्जरी (माता), सन्मार्गः (के. एस्. नरसिंहशास्त्री), मातृमुक्तावलिः (माता—कपालिशास्त्री).

लेखकपरिचयः

'संस्कृतप्रतिभा'— सम्पादकः (तुरीयावरणपृष्ठे)

## सम्पादकीयम्—

अस्यास्तुरीयायास्सञ्चिकाया अयं विशेषः यदत्रान्ते प्रधानमन्त्रिणो 'भारतम् - अद्यतनं श्वस्तनं च' इति ख्याता उपन्यासमाला अनूद्य प्रकाशिता सञ्चिकाया मुकुटायमाना विराजते। अत्रास्या अनुवादस्य प्रकाशनमनुज्ञातवद्भ्यः राष्ट्रियपुस्तकप्रकाशसंस्थाधिकृतेभ्यः श्री चि० देशमुखप्रमुखेभ्यः प्रतिभा स्वमाधमर्ण्यमाविष्करोति।

द्वितीयवार्षिकसञ्चिकयोः पत्रसंख्या अधिकीभूता प्रतिभाप्रणयिभ्यः प्रमोदमाधास्यति। पूर्वतः समधिका लेखा अद्य प्रतिभायाः पत्रेषु प्रकटयितुं शक्या इति नूनमभिनन्दनीयोऽयं विषयः। प्रकाशनार्थं प्रेष्यमाणानि विरचनानि प्रतिपदं बहुलीभवन्ति। यावत्संभवं तानि प्रकाशयिष्यन्ते।

अस्मिन्नवसरे लेखकेभ्यो द्वित्रा अवधेया विषया निवेदनीया भवन्ति। तत्र प्रथममिदं वक्तव्यं यत् प्रतिभायां केवलं प्रकाशार्थं प्रेषिता लेखा एव प्रकाशमत्र प्राप्स्यन्ति, न तु पत्रिकान्तरेभ्योऽपि वितीर्णाः लेखाः। प्रतिभायां प्रकाशयितुमिष्टेन लेखेन प्रायो विषये प्रतिपादने शैल्यां वा कमपि नूतनमंशं मार्गं वा विवृण्वता भाव्यम्। परिमाणतः, यावच्छक्यम् एकस्यामेव सञ्चिकायाम्, अथवा परमावधिकतया सञ्चिकाद्वये समाप्तिं यास्यता च भवितव्यम्। पद्यबन्धेषु जागरूकैः निबन्धृभिः संयुक्ताक्षरात्पूर्वस्यादैर्घ्यं, कुत्रचिद्युग्मपादान्तस्य ह्रस्वता इत्यादिका दोषाः परिहरणीयाः। कथाश्च खण्डकथाः, रूपकाणि च एकाङ्कानि यदि स्युः ततः शोभनं भवेत्। सर्वथा एतानि लघूनि नातिदीर्घाणि च यथा स्युः तथा लेखकैः प्रयतितव्यम्। सर्वत्र च व्याकरणदृष्ट्या अपभ्रंशानां स्थानं न दातव्यम्; तदर्थं च शब्दज्ञैः सुहृद्भिः पण्डितैः परिशोध्य लेखाः प्रेषणीयाः। हिन्द्यादिप्रान्तीयभाषावासनानुपातिनी आङ्ग्लवासनावासिता च शब्दरचना तत्र तत्रानिवार्यतया आयात्येव लेखेषु; तत्र अवहितचेतोभिः प्रबन्धृभिः, यथा व्याकरणे तथा वाक्यप्रयोगे रीत्यां च या संप्रतिपन्ना महाकविपरम्पराप्रसाधिता अभिजाता सुन्दरी च संस्कृतशैली सा

समादर्तव्या, यद्यपि तत्रापि क्तान्त-कर्मणिप्रयोग-दीर्घसमासादिबहुला घटना पृथक्पद-साक्षात्क्रियापदादिप्रचुरैः प्रयोगैः परिष्कारमद्य अर्हत्येव। तादृशः परिष्कारश्च प्राचीनभाष्यकारादिशैलीमेव पुनरवतारयिष्यन् प्रयोगावबोधयोराञ्ज-स्यमापादयन् भाषायास्सरलसुभगतामुन्मीलयिष्यति। तथाविधेन प्रतिसंस्कारेणैव संस्कृतप्रतिभायाः कृतार्थतापि भवेत्।

## आलोकतिमिरवैरं नाम खण्डकाव्यम्

कालीपदतर्काचार्यः

(३)

### चरमवैरम्

दुर्वाचमुद्दीर्य गिरीन्द्रदर्यां प्रविष्टमालोक्य तमो विशङ्कम् ।
प्रविश्य बाह्यं विवरं कथञ्चिदालोक उच्चैः कथयाञ्चकार ॥ १ ॥
रे ध्वान्त ! विभ्रान्त सदोषवृत्ते नादर्शतामेषि यदिद्धरूपः ।
गुणी न ते सम्मुखतः स्थितोऽपि तथा त्वयीह प्रतिविम्बितोऽहम् ॥ २ ॥
आत्मन्यसन्तं गुणमप्यवैषि स्वबुद्धिदोषेण विमूढ ! सन्तम् ।
अविद्यया ब्रह्मणि मूढजीवो यथा प्रपञ्चं शिवबुद्धिबाध्यम् ॥ ३ ॥
न कृष्णरूपे त्वयि कृष्णदोषाः प्रयान्ति दृश्यत्वमिदं न चित्रम् ।
समाकृतिर्माषचयेऽतिकृष्णे स्थिता सुकृष्णा गुटिका न दृश्या ॥ ४ ॥
युक्त्या सुधीभिः किल तेऽनुमेया न धीदरिद्रैरभिमानसारैः ।
विद्मो वयं येन तवापराधानवैषि न त्वं च धिया वियुक्तः ॥ ५ ॥
दोषास्तवोक्ता मयका पुरा ये सर्वे हि ते निश्चलयुक्तिसिद्धाः ।
तेषां निषेधाय वृथा श्रमस्ते त्वदुक्तिभारो बत भार एव ॥ ६ ॥
तथा स्वरूपं मयका तवोक्तं प्राप्तं यथा सूक्ष्मधिया पुरस्तात् ।
तदन्यथोक्तौ वद सत्यनिष्ठा भ्रष्टा न किं, सत्यपरा हि सन्तः ॥ ७ ॥
उद्घाटिते दुष्टजनस्य दोषे कदापि दोषं स धिया प्रजह्यात् ।
नैव स्वदोषः सुगमः सदोषैः स ज्ञायते यद्यपरे वदन्ति ॥ ८ ॥
परे न पश्यन्ति मदीयदोषं मत्वैवमेके वृजिनं चरन्ति ।
प्राप्तप्रचाराद् विरमन्ति तस्मात् त्यजन्ति सर्वे न समाजलज्जाम् ॥ ९ ॥
प्रख्यापिते हेयतया च दोषे निन्दाभयात्तं न परेऽपि दध्युः ।
इत्थं समाजस्य हिता स्थितिः स्यात् समाजभव्यं हि सतामभीष्टम् ॥ १० ॥

अतो मयोक्तं तव दोषजातं न शात्रवान्नापि यशोऽभिलाषात् ।
नेयं ततः सौम्य! विकत्थना मे किं मां वृथा निन्दसि वैरबुद्ध्या ॥ ११ ॥
मम स्थितिर्यत्र जहासि तत् पदं यथा त्वमेवं किमहं तथा न हि ।
तदेवमन्योन्यविरोध आयते साम्यं न किं मूढ! निरूढमावयोः ॥ १२ ॥
दोषे समाने सति किं किलैकको दधात्यहो कापि परेण गर्ह्यताम् ।
किं कोकिलं कृष्णतयाधमं वदन् न हास्यतामेति परस्य वायसः ॥ १३ ॥
नरा यथा जीवगणास्तथापरे क्षुधादिभाजो विधिनैव निर्मिताः ।
हितं न तेषामपि किं न भाव्यतामित्युक्तिरत्यायतमोहशंसिनी ॥ १४ ॥
अदृष्टभेदेन विभिन्नयोनिषु स्रष्टा नियुङ्क्ते खलु जीवसंहतिम् ।
सुखस्य दुःखस्य च भोगहेतवे तत्तद्दशा तद्विधिसम्मतेक्ष्यते ॥ १५ ॥
पुरा कृताद् दुष्कृतराशिदोषाद् व्रजन्ति लोके पशुजन्म जीवाः ।
संभुञ्जते तत्र च दुःखमुग्रं किं तद्विरोधान्न विधेर्विरोधः ॥ १६ ॥
तद्दुःखभोगे विधिकाम्यभूते त्वं यासि वैरं सुहृदसि चाहम् ।
विधेर्विधानस्य निरोधकारी नैति प्रशस्तिं भुवने हितं वा ॥ १७ ॥
मां मन्यसे चेन्नृषु पक्षपातिनं तदीयकल्याणकरं समं तदा ।
न मन्यसे किं वद पुण्यकारिणे सुखप्रदं सौम्य! विधिं तथाविधम् ॥ १८ ॥
ददाति धाता सितकर्मणे सुखं दुःखं तथा दुष्कृतकर्मकारिणे ।
व्यतिक्रमो नास्ति कदापि तन्नये कर्मैव मूलं सुखदुःखभोगयोः ॥ १९ ॥
अचेतनं वस्तु सचेतनेरितं तनोति कृत्यं न तदन्यथा क्वचित् ।
विधेरधिष्ठातृतया निदानता स्थिता ततः कर्मफलेषु यौक्तिकी ॥ २० ॥
भूताः प्रसिद्धा अणिमादिशालिनः शिवस्य काम्याश्च सहायतावशात् ।
तेषां विधेया महतानुकूलता न जातु बाधेत्यपि नो मतं सहे ॥ २१ ॥
मायाविनो लोकसमक्षमेव प्रदर्शयन्तो बहुवस्तु तुच्छम् ।
किं देववद् बुद्धिमता प्रपूज्या न भूतिदृष्ट्या महिमानुमेयः ॥ २२ ॥

उद्बन्धनादौ त्वयकात्मदूषणं प्रकीर्तितं यत् सह दूषणेन मे ।
तस्यांशमात्रेण सहे प्रमाणतां यत्तत्र हेतुत्वमयुक्तिकं मयि ॥ ३५ ॥
उपायमिच्छन्ति फलेच्छया बुधा न तं विना कार्यमिति व्यवस्थितेः ।
उद्बन्धनादौ मरणाभिलाषतस्तमः किलेच्छन्ति जना न तु प्रभाम् ॥ ३६ ॥
न वाच्यमेवं यदितो निबन्धनं नोद्बन्धनाद्येव हि तन्निबन्धनम् ।
यदन्यथासिद्धमिदं नये विदामनन्यथासिद्धगतैव हेतुता ॥ ३७ ॥
उद्बन्धनादि प्रमितं मनीषिभिर्द्वारं न तत् क्वापि निहन्ति हेतुताम् ।
अतस्त्वमत्रासि मतं निबन्धनं मुमूर्षुणा नाहमनिष्टसन्निधिः ॥ ३८ ॥
कथञ्चिदेवान्तरतः प्रयोजकात् तदा विशेषोऽस्ति फलोपकारिणः ।
तदा तदा तन्मरणोत्थपातके किं तारतम्यं न हि युक्तमावयोः ॥ ३९ ॥
नास्त्येव वा लघ्वपि मेऽत्र पातकं किमन्यथा पापकृतः पिता तथा ।
पितामहाद्याः स इवाघशान्तये न कुर्वतां पापहरक्रियां पुरः ॥ ४० ॥
मोहात्मकं सुप्तिगतं तमो न सत् सहैव सौख्यानुभवस्य वर्जनात् ।
सुखानुभूतिः खलु जीववाञ्छिता न येन सा तत् कथमस्तु मङ्गलम् ॥ ४१ ॥
परस्परस्पर्द्धिविरोधिपक्षयोरेकस्य भव्ये न हि भव्यमन्यतः ।
युद्धे त्वयैकस्य हिते सुरक्षिते कथं तदन्याहितमन्ध! वार्यते ॥ ४२ ॥
निष्पक्षपातं प्रकृतस्य वीक्षणे तव प्रभावो न हि तत्र शस्यते ।
ममाधिकारे तु विरोधिनोर्द्वयोः सद्दत्तया वीर्यपरीक्षणं क्षमम् ॥ ४३ ॥
श्रुतौ त्वयोत्प्रेक्ष्य निषेधबोधकं मा-शब्दमिद्धा प्रतिभा व्यतानि या ।
श्रुत्यन्तरैरत्र विरोधमुद्धतं कथं न सा पश्यति नेदमूह्यते ॥ ४४ ॥
वैरेण मय्यर्पितदोषसंहतेः प्रमार्जनं तावदकारि पूर्वतः ।
अथो किमप्यात्ममहत्त्वसाधकं वदामि वैरेण विनावधीयताम् ॥ ४५ ॥
जगत्यभीष्टोत्सवयामिनीमुखे तमोलवं नो बहुमन्यते जनः ।
अतस्तदुत्सारणहेतवे भवे समिद्धमालोककुलं तनोत्यलम् ॥ ४६ ॥

नवीनजायापतियोगयामिनीशुभक्षणेऽन्योन्यमुखावलोकने ।
शिवप्रचारे वरकन्ययोर्नवे मदीयसाहायकमेव सम्बलम् ॥ ४७ ॥

आरात्रिके धूपजधूमतामसं भृशं घनं हन्तुमनन्तरं न किम् ।
विधीयते दैवतपूजनान्तरे नीराजनं दीप्ततमप्रदीपकैः ॥ ४८ ॥

निशागमे यानमुखप्रदीपिका निजान्यदीयव्यसनापसारिका ।
न चेदसौ सम्मुखवस्तुदर्शिका पदे पदे हन्त विपद् बिभीषिका ॥ ४९ ॥

वितत्य चित्रं विपणीषु सुक्रमं वणिग्जनाः पण्यगणं निशागमे ।
न यान्ति चेद् दीपसहायतां तदा जनं समाकर्ष्टुमलं न कञ्चन ॥ ५० ॥

न यत्र गेहे खलु बाधकादृते दोषच्युतालोकसमीरसङ्गतिः ।
न तत्र वासो जनमङ्गलप्रसूरस्वास्थ्यमेवात्र चिरं निवासिनाम् ॥ ५१ ॥

लतास्तथा वृक्षगणा निरन्तरं सुदीप्तमालोकसुशन्ति शर्मणे ।
स यत्र नास्ते न हि तत्र तादृशी वृद्धिर्न वा तत्र तथा फलादिकम् ॥ ५२ ॥

सञ्जीवयाम्योषधिजातमात्मना सुधामयेनाहमितः सुधाकरम् ।
येनौषधीशः स निरुच्यते बुधैः शिवानि सूते जगतां किलौषधिः ॥ ५३ ॥

चन्द्रार्धमौलिर्विबुधो महेश्वरो दधाति शीर्षेण कलां कलानिधेः ।
तया समं तेन ममापि धारणान्नालोककीर्त्तिः किमु युज्यते भवे ॥ ५४ ॥

आलोकजाले मनसश्चिरं रतिर्मृत्योः परस्तादपि तत्प्रभावतः ।
चन्द्रे मनो दीप्तिमये निलीयते सर्वं जगद्वाञ्छति मामिति स्फुटम् ॥ ५५ ॥

आकर्णयोत्कर्ण ! ममान्त्यवर्णान् न विस्तरस्यावसरोऽस्ति भूयान् ।
मित्रेण साकं दिवसः प्रयाति प्रवर्त्तते च त्वरितं त्रियामा ॥ ५६ ॥

अथार्धकालं भज भूतिमात्मनो निष्पक्षपातं कुरु पाशवं जयम् ।
चौरान् समानन्दय चात्मघातिनः प्रतिष्ठते दूरपदं रिपुस्तव ॥ ५७ ॥

उक्त्वालोकः परुषमृदुलां वाचमेवं सगर्वं
त्यक्त्वा क्षोणीधरमुखदरीं क्वापि दूरे प्रतस्थे ।
मत्वा दूरं गतमथ रिपुं दृप्तसिंहादिनादैः
स्वं साम्राज्यं तिमिरमभितो घोषयामास हर्षात् ॥ ५८ ॥

अस्तव्यस्तस्तम इव दिवा दैववैगुण्ययोगाद्
राज्याद् भ्रष्टो नरपतिरिव त्यक्तनैजाधिकारः ।
दीनालोको विचयनपरः प्राप्य गेहप्रदीपान्
भूयो भूतिं दिनसमुदये भावयन्नास्त सुस्थः ॥ ५९ ॥

इत्यालोकतिमिरवैरे चरमवैरं (३) समाप्तम् ।
समाप्तं चेदं खण्डकाव्यम् ।

# कामः

विजयशङ्कर कानजी

जडविभवविलासान्लोष्टवद्यो विहाय
स्वयमविरतचिन्ताक्लेशमङ्गीकरोति ।
विधिबलविजयी यो विघ्नदुर्गावभेत्ता
स जयतु विमलानां सत्यकामः प्रयत्नः ॥ १ ॥

पद्मं यतः त्यजसि पीतरसं नवार्थी
वाणिज्यकार्यकुशलोऽसि पुनर्न कामी ।
कामस्तु काम्यविषये हि सदा निमज्ज-
न्नन्यं न पश्यति कुतो गमनावकाशः ॥ २ ॥

एतत्तु दुर्भगमिदं ननु लोकनिन्द्यं
यत्नैरलं विपुलविघ्नमयेप्सितार्थैः ।
एवं विचारयति तुच्छमना न कामी
कामः स एव विधिनापि न रुध्यते यः ॥ ३ ॥

नृत्यं गीतं स्वादुलावण्यकान्ति-
र्दिव्यामोदो भोगरम्यो विरामः ।
नो रोचन्ते तीव्रकामातुरेभ्यः
स्वेष्टैकाग्रो रुद्धवृत्तिर्हि कामः ॥ ४ ॥

यदीप्सितार्थेष्वसि सिद्धिकामो
यथाबलं त्वं सततं यतस्व ।
आरम्भशूरा न न विघ्नभीता
अभिन्नयत्ना हि जयं लभन्ते ॥ ५ ॥

दुराग्रहं मानमदं मलं च
त्यक्त्वाभिमानं सकलं च शान्त्या ।
विचार्य निश्चित्य सुखं ध्रुवं च
कार्यः प्रयत्नस्सततं हि तस्मै ॥ ६ ॥

व्यर्थं हि तद् यत्खलु हेतुशून्यं
भावेन किं तस्य वरोऽप्यभावः ।
न यस्य हेतुर्न हि कश्चिदर्थः
व्यर्थेन किं तेन तु जीवितेन ॥ ७ ॥

हृदयरसविलासबुद्धिहीनो जडविभवेषु सुखानि तानि पश्यन् ।
भवतु निजसुखेन गर्वितोऽसौ हृदयसुखं हि सुखं सुखं किमन्यद् ॥ ८ ॥

स्नेहार्थि शान्तहृदयस्य विशुद्धभावः
शान्तं कृतं हि हृदयं यदिदं मदीयम् ।
आनन्दसान्द्रहृदयो नु वहामि नित्य-
मानन्दभारमिव मित्र तवोपकारम् ॥ ९ ॥

ज्ञानं विद्या महैश्वर्यं वीर्यं शास्त्राणि शक्तयः ।
अस्त्वार्याणां हि सकलं विजयाय शुभाय च ॥ १० ॥

## काकान्योक्तयः

जग्गु वेङ्कटाचार्यः[1]

दृष्टिर्वक्रा गतिरपि तथा वाक् च वक्त्रात्प्रवृत्ता
भेत्त्री श्रोत्रे तनुरपि मषीकान्तिहारिण्यरिष्ट ।
वृत्तिस्सत्त्वैरतिशमपरैर्यच्च गेहं विशेस्त्वं
तत्त्याज्यं स्याच्चिरमपि ततश्चान्त्यजोऽसि द्विजेषु ॥ १ ॥

गत्वाऽज्ञातस्तुदसि शनकैस्सुस्थितांस्त्वं द्विजातीन्
पुष्टान्स्वेन श्रुतिसुखरवान्द्रावयस्याम्रकुञ्जात् ।
आहूतस्त्वं सुलभ इतरैस्साकमागत्य भुंक्षे
पिण्डं पित्र्यं ह्यपचितिरियं नान्यसाधारणी ते ॥ २ ॥

गृध्रैर्मर्त्यैर्वियति च हठाधिष्ठितैरुह्यसे त्वं
सुप्तानां त्वं तुदसि नयने पायुदेशं पशूनाम् ।
नैका रीतिर्वियति च गतेः किन्तु नैकापि तूच्चैः
मृत्युस्तुष्टस्तव वरमदात्पैतृकीं ते तु तृप्तिम् ॥ ३ ॥

तावत्पिक इति विदितस्साम्यादाकारवर्णयोः काक ।
विवृते तुण्डे भाग्यादस्माकं काक एवाभूः ॥ ४ ॥

कुसुमपल्लवरम्यरसालके पिककुलैस्सह कोमलकूजितैः ।
स्थितिरियं यदि दैवबलादभूत्तव रुतेन हि नो भवति व्यथा ॥ ५ ॥

प्रासादशिखरवासादात्मानं मन्यसे पूज्यम् ।
उच्चैरितोऽपि गच्छेर्न हि गरुडः काक एव स्याः ॥ ६ ॥

कतिकतिविधानि लोके फलानि नो सन्ति काक मधुराणि ।
निम्बान्येव तु तेऽमून्यतीव तिक्तानि भोग्यानि ॥ ७ ॥

---

[1] नातिचिरात्कीर्तिशेषतां गतमेनमधिकृत्य गतायां सञ्चिकायां द्रष्टव्यम् ।

चित्रा मैत्री कदा दृष्टा लोकेऽस्मिन्काकघूकयोः ।
तत एव हतः काको नाऽभव्यं भूतये भवेत् ॥ ८ ॥

यद्गृहच्छदिमधिष्ठितवांस्त्वं काक रौषि विकृतेन रुतेन ।
तस्य बन्धुमचिरादुपयन्तं शंससीति कथयन्ति पुराणाः ॥ ९ ॥

द्विजेभ्यस्सर्वेभ्यः प्रथमतरमुत्थाय विरुव-
न्प्रभाते च स्नानं क्वचिदपि जले काक कुरुषे ।
अमेध्यानां खण्डान्यथ च तनुषे तुण्डपुटयोः
इदं ते शौचं नः प्रथयति हि चित्ते बहुरसान् ॥ १० ॥

दोषेष्वनेकेष्वपि सत्सु काक! श्लाघ्यस्तवैको विदितो गुणोऽयम् ।
कार्यस्य सिद्धिः प्रकृतस्य सद्यो दाक्षिण्यतस्ते गमने प्रयातुः ॥ ११ ॥

सकृत्प्रसूतिस्तव जातिरेषा न चेद्विधात्रा विहिताऽभविष्यत् ।
अतीव हिंसामभजिष्यदेव जगत्ययं जन्तुगणः पिकारे ॥ १२ ॥

# अन्योक्तिदशकम्

श्रीकान्तपाण्डेयः

प्रातः समीरण हरन् यदमन्दगन्धं
    गर्वं वहन् वियति गच्छसि मन्दमन्दम् ।
तस्यैव युज्यत इदं विनिपातनं किं
    शाखाचयात्तव सखे कुसुमावलीनाम् ॥ १ ॥

रे मौकुलेय! तव भाति मनोविमोहो
    यत्त्वं मदीयमिति रक्षसि कोकिलेयम् ।
सञ्जातपक्षतिरयं चपलः पुनस्त्वां
    त्यक्त्वैति किं न विदितः परवञ्चकस्ते ॥ २ ॥

धाराधरो ध्वनति वर्षति च प्रकामं
    तीव्रः प्रभञ्जनचयोऽप्यनिशं प्रवाति ।
देदीप्यते कटकटासहिता च विद्युद्
    धन्यो नगेश्वर यतो न हि कम्पितोऽसि ॥ ३ ॥

धन्यासि वल्लरि! पयोमुचि वर्षमाणे
    वृक्षः प्रभञ्जनरयेण विशीर्णशाखः ।
आन्दोल्यमानवपुषा सहसा त्वया तु
    स्वाधारभूततरुरेष न मुच्यते यत् ॥ ४ ॥

सिक्त्वा यदा खलु पयोद वसुन्धरां त्वं
    नीहारपुञ्ज इव गच्छसि पाण्डिमानम् ।
तस्मिन् क्षणे कथय स प्रियचातकोऽपि
    किंते सकाशमुपसर्पति चाटुकारः ॥ ५ ॥

नाम्नैव नीरनिधिरित्यवगम्य कोऽपि
मा सागरं व्रजतु पूरयितुं पिपासाम् ।
क्षारैरपेयसलिलैः परिपूरितत्वात्
लोकेऽस्य किन्न विदिता लवणाकराख्या ॥ ६ ॥

अम्भोरुहाणि सलिलं च निषेव्य यस्य
नीतोऽखिलः स्वसमयो भवता समोदम् ।
तस्मिन् गते सरसि घर्मदिनेषु शोषं
रे राजहंस भवितासि परीक्षणीयः ॥ ७ ॥

क्षारं जलं विविधघातुकजन्तुजालं
तुङ्गांश्च वीचिनिवहान् समवेक्ष्य कुक्षौ ।
"एतेन किम्" किमिति निन्दसि मित्र सिन्धुं
सिक्ता धरा जलधरैरधुनाऽमुनैव ॥ ८ ॥

प्राप्ते वसन्तसमये समुपागतासु
ज्योत्स्नाप्रवाहभरितासु च यामिनीषु ।
खिन्नस्त्वया तव सखा सदयं मनोभू-
र्धन्योऽसि रे मलयवाह सुसेवितो यत् ॥ ९ ॥

कुर्वे निजामृतरसैर्मधुरं पयोधेः
क्षारं जलं किमिति दृप्यसि देवि गङ्गे ।
यातं नदीशतमिमं भवतीव मत्वा
कल्लोलवेल्लितमभूल्लवणीकृतं च ॥ १० ॥

## श्लिष्टप्रकीर्णकम्

वे. राघवः

ओष्ठोऽसावरुणो, मुखं हिमकरो,ऽपाङ्गश्च ते लोहितः
सौम्यो वाक्प्रसरो, गुरुः कुचभरः, शुक्रश्च दन्तव्रजः ।
पादः किञ्च शनैश्चरोऽ,पि च तमः केशोऽयम्, अङ्गं पुनः
केतुश्चित्तभुवो, नितम्बिनि तनुः सर्वग्रहा भाति ते ॥



मिथ्यामध्यविलासिनि! स्खलितवत्यत्यन्तनीचैर्गतिः
वक्त्रं ते द्विजराजवैरि हृदयं चात्यर्थमुद्रेकवत् ।
वक्रा दृष्टिरतीत्य च श्रुतिपथं सा वारुणीपाटला
स्वर्णस्तेयरुचे प्रियासि भवती त्वत्पाप्मनैवाधिकम् ॥



शोणोऽधरः कुचतटी तव तुङ्गभद्रा
भात्यायतेह कबरी तव कृष्णवेणी ।
गाङ्गेयगात्रि कुरु मय्यसितां दृशं ते
त्वं नर्मदा भव सरस्वति मे प्रसीद ॥



वक्त्रे तव द्विजपतिः, पृथिवीधरौ ते
बाह्वन्तरे, विशति धन्यजनस्तवोर्वीः ।
सेवाकृतस्तव लुठन्ति पदेऽत्र, वर्ण-
चातुर्यहो तव सुगात्रि विराजिरूपे ॥



कुचावपि नितम्बश्च यस्यास्ते गुरवस्त्रयः ।
कथं तस्या न नम्रत्वं कथं नानुद्धता गतिः ॥



प्राप्तुं ते वक्त्रलक्ष्मीं क्षपितनिजवपुश्चन्द्र आकाशवासी
पद्मं चाकण्ठमम्भस्यमितरणि हठात्तप्यतेऽलं तपांसि
लब्धुं दृग्विभ्रमं ते भ्रमति च मधुकृद्वृत्तिमाश्रित्य भृङ्गः
हंसीभूयापि हंसो व्रजति हिमगिरिं गत्यभावाद्विरक्तः

## अश्वपालस्याञ्जनस्य कथा

य. महालिङ्गशास्त्री

आसीत् कस्यचित् प्रभोरञ्जनो नाम अश्वपालः। स ग्रामान्तरं जिगमिषोः प्रभोः पर्याणितमश्वं गृहद्वार्युपस्थापयामास। प्रभुरश्वमारूढः प्रास्थित। अञ्जनः कविकाप्रसक्तहस्तोऽन्वधावत्। गच्छतोस्तयोरंशुमाली पश्चिमदिशि व्यलम्बत। प्रभुर्बभाषे—अञ्जन, कियानध्वाऽवशिष्यते।

स्वामिन् क्रोशपञ्चकमात्रं गन्तव्यमस्माकम्।

मूर्ख, क्रोशपञ्चकं किं गोप्रतरं मन्यसे। अस्तं गतश्चांशुमाली। न च रजनीसंचारः सुकरः अस्मिन् पथि। कुतश्च हयो मारयिष्यते। तच्चिन्तय कुत्र सतुरगावावाम् आप्रभातं विश्रमिष्यावः।

स्वामिन् व्यतिलङ्घित इदानीमेव कश्चिन्मठः मार्गनिविष्टः। तत्किं परावर्त्यतामश्वः।

तथा कुरु।

अथ निवृत्येतस्ततश्च अन्विष्य प्राप्तमठौ तौ मठकौटुम्बिकस्य अनुमत्या तत्र रात्रिं वस्तुं प्रासज्येताम्।

**प्रभुः**—आर्य, किमावयोर्भोजनं संपादयिष्यसि।

**कौटुम्बिकः**—महामान्य, इयं मे प्रार्थनीया वरिवस्या, यदागन्तुका भोजयितव्या इति। तन्न किमपि हास्यते। संपन्नं भोजनं निर्वर्तयिष्यामि।

**प्रभुः**—परं मे प्रियम्। पारितोषिकं ते दास्यामि। अथ शयनीयं कुत्र मे कल्प्यते।

**कौटुम्बिकः**—बहिर्वेदिकायामेव सुभगो मारुतसंचारः। परं तु यत्प्रभुवर्याणां चित्तं तदेवानुष्ठास्यते।

**प्रभुः**—मयापि मारुतसंवीत एव स्थले सुखशयनमिष्यते। अश्वः पुनः कुत्र स्थापयितव्यः। अस्ति काचिन्मन्दुरा, गोष्ठं वा। अथवा काऽप्यन्या गुप्ता शाला।

**कौटुम्बिकः**—प्रभो नात्र मन्दुरायाः प्रसक्तिः । न च वयं गाः केतयामः । यदस्मिन् मार्गपरिसरे प्रचुरप्रचाराश्चोराः । एतेषु अध्वसु दैनन्दिन एष आक्रोशः—मदीयः पशुरपहृतः, मदीयः बलीवर्दः मुषितः, मदीया धेनुश्चोरिता इति । तदश्वरक्षणमेव दुष्करम् । रात्रिं जागरितव्यं युष्मत्सेवकेन । पुरस्तात् दृश्यमानेऽस्मिन् निम्बतरौ अश्वं सन्नह्य तदन्तिक एवासौ स्वपितु ।

**प्रभुः**—जागर्तु किल ।

**कौटुम्बिकः**—आम् आम् । जागर्तु ।

**प्रभुः**—अञ्जन, श्रुतं त्वया अस्यार्यस्य भाषितम् । अस्मिन् निम्बतरौ अश्वं सन्नह्य त्वया आप्रभातं जागरितव्यम् । व्यग्राः किल तस्कराः अस्मिन् देशे । अहमपि इहैव बहिरलिन्दे शयानः त्वां तदा तदा शब्दापयामि ।

**अञ्जनः**—स्वामिन् एवं क्रियते ।

अथ प्रभुर्भुक्त्वा अञ्जनस्यापि भोजनं दापयित्वा शयनाय मतिं चक्रे । अञ्जनोऽपि अश्वमुपकल्पितघासं वृक्षस्कन्धे संयम्य तरोर्मूल एव शिश्ये । अत्रान्तरे शयानो निद्रया परिबाध्यमानः प्रभुरात्मानमक्षिप्रमृज्यादिभिः संस्कृत्य अञ्जनम् आहूयोवाच—"अपि जागर्षि । निद्रा नाम बलीयसी कदर्थना मनुष्याणाम् । मा तस्याः अवकाशं देहि । सा किल विप्रलंभवित्तिका ईषत्प्रसरन्त्यपि चेतनासर्वस्वं मुष्णीयात् ।

**अञ्जनः**—स्वामिन् न दास्ये निद्राया अवकाशम् । जानामि तत्र युक्तिम् ।

**प्रभुः**—कीदृशी सा ।

**अञ्जनः**—न किल स्वामिनं शिक्षयामि तथापि अञ्जनवराकोऽपि कार्ययुक्तिष्वभिज्ञ एव । जानातु स्वामी । यत्किंचिद् दुर्घटवस्तुविचारक्लेशेन अपसारयामि निद्राम् ।

**प्रभुः**—(आत्मगतम्) न हीयते खल्वस्य मीमांसकत्वम्। (प्रकाशम्) साधु अञ्जन, साधु मां पुनः निद्रा बाधते। यदा जागर्मि तदा त्वां शब्दापयामि। वक्ष्यसि मह्यं किं वस्तु चिन्तितम् इति।

**प्रभुः**—सुखम् आप्रभातं स्वपितु स्वामी। क्लेशानर्हं स्वामिनः शरीरम्। अहं निरन्तरं जागर्मि। मास्तु वश्चिन्ता।

स्वामी वाक्यावसानमनाकलयन्नेव निद्रापहृतचेतनो बभूव। अञ्जनः पुनर्ध्यायन्ननिमिषलोचनः तस्थौ।

अथ प्रथमयामस्य विरामे प्रभुर्मशकबाधया प्रबुद्धः। तुरगापायशंकातंककातरः अञ्जन अञ्जन इति तारतरं रुराव।

अञ्जनः किं किम् अत्याहितं स्वामिनः इति सत्वरमुत्थितः पार्श्वमभ्यधावत्।

**प्रभुः**—अस्ति तुरगः।

**अञ्जनः**—अस्ति कुशली।

**प्रभुः**—अपि च जागर्षि सर्वां वेलाम्।

**अञ्जनः**—बाढं जागर्मि।

**प्रभुः**—किं त्वया दुर्घटवस्तु चिन्तितमासीत् येन जागरणं साधितवानसि।

**अञ्जनः**—स्वामिन् निरवसानोऽयं मे वितर्कः। यदा सागरमखानीत् तदा मृत्तिकां क्व प्राक्षैप्सीदिति।

**प्रभुः**—स्थाने खलु मीमांसा। अञ्जन, खातमृत्तिकां दवीयसि पारे प्राक्षिपत्। तावदन्यां विचिकित्साम् आलंब्य याप्यताम् अपरो यामः।

**अञ्जनः**—यथा स्वामी आदिशति।

प्रभुरुपबर्हं समीकृत्य प्रावारकमाशिरःपदाङ्घ्रि परिकर्षन् पुनरविशन्निद्रापारवश्यम्।

2

अथ क्षीणप्राये द्वितीये यामे मत्कुणदंशदुर्दशया समुत्सारितनिद्रः प्रभुरश्वमनुस्मरन् ररास। अञ्जन, अञ्जन, किमरे, जागर्षि।

**अञ्जनः**—स्वामिन्। जागर्ति ते भृत्यः संजातसर्पशंको गृहजन इव। स्वस्ति च हयस्य।

**प्रभुः**—अहो ते स्वाधीनजागरणता। साधु अञ्जन साधु। अचिराद् द्रक्ष्यस्यस्य मत्प्रसादप्रसरम्। अथ किं वस्तु विचारमार्गगोचरीकृतमिदानीम्।

**अञ्जनः**—अस्ति किल उच्चैः गगनवितानम्।

**प्रभुः**—अस्ति।

**अञ्जनः**—अस्मिन् कथं नामैतानि तारकाख्यानि उज्ज्वलवर्णकचित्रकाणि संयोजितानि।

**प्रभुः**—सुष्ठु मीमांसितम्। तानि खलु निश्रेणीपरंपरामवस्थाप्याधिरूढैः संयोजितानि।

अथ तृतीयो यामः किमपि अन्यद् वस्तु चिन्तयता यापयितव्यः। निर्व्यूढप्रायः तव भारः। दिष्ट्या नात्र संचारस्तस्कराणाम्।

**अञ्जनः**—मयि जाग्रति संचरन्तोऽपि किं करिष्यन्ति।

**प्रभुः**—साधु अञ्जन साधु। मां भूयो निद्रा विभ्रमयति। त्वं सावधानो भव।

**अञ्जनः**—सुखं स्वपितु स्वामी।

सुप्ते प्रभौ चिरजागरणम्लानेन्द्रियः स्थण्डिलशयनखिन्नगात्रः परिणतायां निशायां सुभगशीतलेन मारुतेन समाश्वासितः पुनर्मीमांसनीयवस्तुविचयनेन जडीकृतः शनैरवशविस्रस्तहस्तपादः घूर्णन् अचिरात्सुषुप्तिमवजगाहे।

तस्मिन्नन्तरे कश्चन चोरः तदवस्थं तं प्रेक्ष्य अश्वस्थानेऽनियन्त्रणं परिभ्रमन्तं कमपि महोक्षं रज्जुसंयमनेनावस्थाप्य अश्वम् उन्मुच्यापवाहयामास।

ततश्च यावत् सन्निहिता प्रभातवेला तावत् प्रबुद्धः प्रभुः अञ्जनं शब्दापयामास। अञ्जन अञ्जन जागर्षि खलु। अये अञ्जन किं सुप्तः। हा धिक् अञ्जन मदाशाभञ्जन!

**अञ्जनः**—(सत्वरं प्रबुध्यमानः सभयम्) स्वामिन्, स्वामिन्, आदिशतु स्वामी।

**प्रभुः**—अस्त्यश्वः।

**अञ्जनः**—अथ किम्।

**प्रभुः**—अपि जागर्षि।

**अञ्जनः**—आम्। सुष्ठु जागर्मि।

**प्रभुः**—अञ्जन, किम् इदानीं त्वया पर्यालोचयता जागरः स्थापितः।

**अञ्जनः**—(अश्वस्थाने महोक्षं निर्वर्ण्य) स्वामिन् अत्याश्चर्यं चिन्त्यते।

**प्रभुः**—कीदृशम्।

**अञ्जनः**—पश्यत एव मम कथं विधात्रा अस्मदश्ववरस्य शृङ्गयुगलम् आरोपितम् इति। विवेचयतु स्वामी।

**प्रभुः**—किमिति किमिति। (इति ससंभ्रममुत्थाय प्रधाव्य दृष्ट्वा) उक्षा किल। अथ कुत्राश्वः।

**अञ्जनः**—स्वामिन् अयमुक्षा, नायमश्वः संजातशृङ्गयुगलः?

**प्रभुः**—धिङ्मूर्ख, कुत्राश्वः। न खलु मृगयसे। (इति ताडयति।) कुत्र अश्वः। किं हारितश्चोरैः। (इति परिभ्रमति।)

एतेनारवेण जातप्रबोधः कौटुम्बिकः कवाटमुद्धाट्य अभिपतन् अन्वयुंक्त- 'स्वामिन् किमिदमापतितम्। किमत्याहितम्'।

**प्रभुः**—अश्वो हारितोऽनेन वैधेयेन।

**कौटुम्बिकः**—भणितमेव मया चोरप्रचुरोऽयं देशः। रात्रिं जागरितव्यमिति।

**प्रभुः**— भणितम्। मयापि शिक्षितोऽयं जाल्मः।

**कौटुम्बिकः**—(दृष्ट्वा) कुतोऽयं देव, कुलबलीवर्दः निम्बतरौ निबद्धस्तिष्ठति।

**प्रभुः**—अयमेव किल अस्मद्भृत्यहतकस्य मते शृङ्गोत्पत्तिमनोहरोऽस्मदश्वः। (इति सासूयं हसति।)

**कौटुम्बिकः**—(विहस्य) अये चोरहतकानां प्रतारणवैदग्ध्यम्।

**प्रभुः**—आर्य, किमत्र प्रतिपत्तव्यम्।

**कौटुम्बिकः**—अनेन वाहनभ्रंशेन महामान्यस्य भृशं व्यथितोऽस्मि। अतिधृष्टाः एते चोरपाशाः। किमतः करणीयम्। न मे धीः प्रसरति।

**प्रभुः**—किमस्य हताशस्य धीः प्रसरति।

**अञ्जनः**—प्रभो, मम वक्तव्यमस्ति। हयेऽपि नष्टे पल्याणकविकादयः अश्वसंयोगाः शेषमध्वानं वोढव्याः। तच्च कर्म नैकेन साध्यम्। को नु स्यान् मेऽत्र सहायः।

**प्रभुः**—(सवैलक्ष्यहसितम्) ईदृशभृत्यभाग्यभरितोऽहं किं नाभियुज्ये अश्वेऽपि हारिते त्वया सह पल्याणभारवहनकर्मणि।

## पराजयः

टी· ए· सरस्वती

बालं ममैकं पुत्रं कथं पाठशालां प्रेषयामि इति चिन्ता बहूनि दिनानि यावत् मामपीडयत् । स प्रकृत्या प्रतिभाशाली क्षिप्रग्रहणपटुश्च । किन्तु अन्यैर्बालैः सह कदापि न क्रीडितवान् । अस्माकं गृहे विंशतिवर्षानन्तरं जातोऽयं शिशुः, परं सर्वैर्लाल्यमानोऽपि तुल्यवयस्कानां साहचर्यस्य अभावात् चिन्ताशीलो लज्जालुश्च । अन्यैर्बालिकाबालकैः सह क्रीडेत् इति कृत्वा चतुर्वर्षमात्रः स अस्मद्गृहसमीपवर्ति शिशुमन्दिरं प्रेषित आसीत् । पञ्चषाणि दिनानि परमप्रीत्या विना कस्यापि चोदनेन स तत्रागच्छत् । किन्तु अकस्मादेकस्मिन् दिने प्रातराशवेलायां स भोक्तुं नागतः । "गमनसमये अयमेकाकी क्रीडन्नास्ते, आह्वयामि तावत्" इति अवरजा मे बहिरङ्गणं गत्वा द्वित्रवारम् उच्चैराक्रोशत् "कुट्ट, कुट्ट" इति । कुट्टः प्रतिवचनं नादात्, नाप्यदृश्यत ।

अनुजा मे अन्वेष्टुं गता प्रत्यागत्य अवदत् "भगिनि, स तिष्ठति पल्यङ्कस्याधस्तात्, आहूतोऽपि न निष्क्रामति, नापि किंचिद् वक्ति । त्वमेव गत्वा आनय तमिति"। "इदं किमस्य नूतनं चापलम्" इति ईषद् हसन्ती अहं तत्र सत्वरमगच्छम्, अवदं च "वत्स, आगच्छ, भुक्त्वा शिशुमन्दिरं गच्छ, वेला अतिक्रामति" इति ।

न किंचित् प्रत्युत्तरम् । तमहं बलादुद्धृत्य क्रोडेऽकरवम् ।

"किं ते अद्य गमनेच्छा नास्ति" ।

"न" ।

"अपि किंचिदनिष्टं ह्यः संवृत्तं तत्र?"

मौनम् ।

"तुभ्यं तत्र गमनं सुष्ठु रोचते स । अद्येयं अनिच्छा कुतः?"

मौनम् ।

"जानाम्यहं वीरपुरुषस्त्वं तत्रत्याभ्यो बालिकाभ्यो बिभेषि । किं तास्त्वां धावने पराजितवत्यः ।"

मौनम् । परिहासोऽपि अद्य निष्फलः संवृत्तः । अन्ते इयमेव बुद्धिर्ममासीत् ।

"अस्तु अद्य मा गमः, श्वोऽवश्यं गन्तव्यम् ।"

सहसा स वाणीमविन्दत इव ।

"नाहं कदापि तत्र गच्छामि ।"

परतः शिशुमन्दिराध्यक्षायाः मया ज्ञातं कुट्टः कदापि मन्दिरान्तर्न गच्छति, न वा शिशुभिः समं क्रीडति । द्वारपाल इव द्वारे तिष्ठन् अन्तर्बहिश्च प्रवर्तमानं सर्वं पश्यति । शिशुमनोभावज्ञाननिपुणा शिशुमन्दिराध्यक्षा कतिपयदिनानि तस्य यथेष्टकरणं सर्वमनुमेने । क्रमेण सा अलोकयत् तत्रागमने शिशूनां विविधप्रवर्तनानां निरीक्षणे च तस्य मनः पर्याप्तं प्रीतिमदिति । अनन्तरं एकस्मिन् दिने गृहप्रत्यागमनवेलायां सा तमवदत् "कुट्ट, यदि त्वं बहिरेव तिष्ठसि इहागमनेन किं प्रयोजनम्? श्वः प्रभृति त्वया नागन्तव्यं यदि अन्तर्नागमिष्यसि" । अनेनायं शीघ्रतरमन्तरागच्छेत्, अस्यापरिचितभीरुता अपसरेच्च इत्येवमासीत्तस्याः बुद्धिः । किन्तु फलं चिन्तितात् दूरं विप्रकृष्टम् । तदैव तेन निश्चितं नाहम् अत्रागमिष्यामि इति ।

अत एव सुकुमारप्रकृतिर्मानी अयं कथं पाठशालां गच्छेत्, कथं वा मत्सरसम्मर्दपूर्णेऽस्मिन् लोके जीवेत्, विशेषतः पुरुषो भूत्वा, इति सदाहं चिन्ताकुला आसम् ।

विद्यमाने एतादृशे व्यतिकरे तस्य विद्यालयगमनस्य द्वितीयवर्षे प्रथमदिन एव मध्याह्नभोजनार्थं तस्मिन्ननागते सर्वे वयं भृशमुद्विग्नाः । अतीते वत्सरे आसन्नायां वार्षिकपरीक्षायामेव स विद्यालयं प्रथमं प्रेषितः । परीक्षाया त्रिष्वपि विषयेषु उच्चाङ्कान् प्राप्य विद्यालयगमनेन स परं सन्तुष्टोऽदृश्यत च । तत्किं पूर्वं शिशुमन्दिर इव स पुनरपि प्रतिलोमः संवृत्तः इति चिन्तयत्सु अस्मासु,

प्रतिवेशगृही रामचन्द्रः, येन सह कुट्टः पाठशालां गच्छति, आगत्य कथयति "कुट्टः विद्यालयाङ्गणे रुदन्नास्ते, आहूतोऽपि वारं वारं, मया सह नागत" इति ।

वेला मध्याह्नः । गृहे अस्मत् स्त्रीभ्यः ऋते कोऽपि नासीत् । आवां भगिन्यौ एव विद्यालयं प्रस्थिते ।

कुट्टः कैश्चित् बालैः परिवृतः विद्यालयाङ्गणे तिष्ठति । असकृदावृत्तं अश्रुप्रमार्जनं अक्ष्णोरधस्तात् पाटलिम्ना रूयाप्यते । केचिद् बालास्तं तूष्णीं निध्यायन्ति, केचित्तं करयोराकृष्य ततोऽपसारयितुं प्रयतन्ते । किन्तु स पदमात्रमपि न चलति । आवां वीक्ष्य सहसा स धावन्नागत्य मम जानुनी परितः स्वहस्तौ प्रक्षिप्य मुखं दृढं गूहितवान् । वारं वारम् आवृत्तानां प्रश्नानाम् उत्तरम् अलभमाना विषण्णा अहं समीपस्थैः तस्य समानवयस्कैर्बालैः शनैरुक्ता यत् प्रथमकक्ष्याया उत्तीर्णानां बालकानां नाम्नां मध्ये कुट्टस्य नाम न पठितम्, अत एव वराकः स रोदिति" इति । व्यक्तमासीत् कुट्टस्य दीर्घस्थायिना निश्शब्दरोदनेन तेषां कोमलहृदयेषु अपूर्वः सहतापातिरेक उद्भूत आसीत् ।

इदं कथं स्यात्? कुट्टेन पुनः परीक्षायाम् उच्चाङ्काः प्राप्ताः, कश्चिद् व्यतिक्रमोऽस्ति अत्र इति कुट्टं गृहीत्वा आवां प्रधानाध्यापकस्य समीपमगच्छाव, सर्वं वृत्तं विस्तरेण अश्रावयं च । सोऽपि तत्क्षणमेव कार्यालयात् प्रथमकक्ष्याया उत्तीर्णानां बालकानां नामावलीमानाय्य, तां निरीक्षमाणः पप्रच्छ "वत्स, किं ते नाम, ब्रूहि ।" "कुट्टः" ।

तमाक्षिप्याहं "न हि, तत्तु अस्य गृहे वात्सल्यनाम, विद्यालये तु सि. बालकृष्ण इति" ।

"सि. बालकृष्णस्य नाम अत्र वर्तत एव । वत्स, कथं तव नाम न पठितं न श्रुतं वा?"

"अम्ब, त्वं किं ब्रवीषि? नाहं कुट्टः किम्?"

सद्यः समस्तं दुर्घटितमस्माभिर्बुद्धं, स्वस्य साक्षान्नाम न जानन्नयं भ्रान्तो नाहमुत्तीर्ण इति। सर्वे वयमुच्चैर्हसितुं प्रवृत्ताः। प्रधानाध्यापकः लज्जावनतं कुट्टं पृष्ठे संवाहयन् अवदत् "वत्स, मा भैषीः, त्वं कदापि अनुत्तीर्णो न भवेः। मात्रा सह गत्वा क्षिप्रं भुक्त्वा अपराह्णीयाय अध्ययनाय आगच्छ"।

बहिरौत्सुक्येन स्थिताः बालकाः सर्वे कुट्टादप्यधिकं प्रमुदिता अदृश्यन्त। स तु अन्तः प्रमुदितोऽपि स्वारोपितमौर्ख्येण लज्जित इतस्ततोऽनवलोकयन्, तैः सममालपन्त्यौ नौ पश्चात्त्यक्त्वा द्रुतपदं गतः।

तथापि तदानीमेव अन्यैर्बालैः सह सहतापरूपया शृङ्खलया स बद्ध इव, अनया अनुभूत्या च तस्य हृदये नूतन आत्मविश्वासः संजात इव। अधुना स समवयस्कानां नेता सदा आह्लादपूर्णश्च।

# नागराज-विजयम्

हरिहरत्रिवेदी

## नान्दीपाठः

अवतु सदा वसुधां वृषकेतुः ।
मालवादिगणपूजितपादः,
भारशिवैश्च विवर्धितनादः ।
आततायिरिपोरवसादः,
भस्मचर्चितोऽप्यखिलचराचर-
जन्मस्थितिलयहेतुः ॥
अवतु सदा . . . . . ॥

**सूत्रधारः**—एषोऽहं सूत्रधारः आर्यमिश्रान् विज्ञापयामि यत् इदानीम् आधुनिकेन कविना हरिहरेण रचितं नागराजविजयं नाम नवीनं नाटकं प्रयोक्तुम् उद्यता वयमिति । अस्यां कृतौ शान्तिप्रियाः भारतवासिनो जनाः स्वतंत्रतां प्राणेभ्योऽपि गरीयसीं मन्यन्ते इति प्रदर्शितमस्ति ।

धन्योऽस्य प्रतिभान्वितः कविवरः स्वातंत्र्यदीक्षाप्रदं
लोके हारि च नागराजचरितं वीर्यान्वितं स्फूर्तिदम् ।
धन्या भारतपुण्यभूमितनयाः सेवाव्रते दीक्षिताः
धन्या चोज्जयिनी यदत्र मिलिताः सर्वे रसज्ञा इमे ॥

तत्, आर्ये, आरभ्यताम् संगीतकम् ।

अथ च—

यासां स्वातंत्र्यवेला मुखरितककुभां मङ्गलानां विधात्री
प्रध्वस्तारिप्रमादा विदलिततिमिरा कौमुदीव स्फुरन्ती ।

दत्तोल्लासा बुधानां प्रगतिपथजुषामुन्नतिं चादधाना
तामेवाश्रित्य तौर्यत्रिकमधुररसं सुभ्रु, गीतं विधेहि ॥

**नटी**— आर्यपुत्र, भवदादेशानुरूपं गायामि ।

सुभगः स्वतंत्रतायाः समयः सततं सुधारसस्रावी ।
आर्यावर्तविपक्षम्लेच्छानां द्रावणेऽनुकूलोऽयम् ॥

**सूत्रधारः**—आर्ये, रसिकजनमनोविनोदकरेण सुधास्यन्दिना तव गीतेन स्मारितोऽस्म्यहमतीतस्य, यदा—

शान्तिप्रियायामिह पुण्यभूमावशान्तिमुत्पादयितुं सकामाः ।
साम्राज्यमास्थापयितुं यतन्ते युद्धैकतन्त्रा रिपवोऽस्मदीयाः ॥

यदा च आक्रमणकारिणः कुषाणान्, पह्लवान्, शकांश्च गणराज्यसेविताद् भारतात् बहिर्निष्कासयितुम् अस्मद्देशीयानां प्रयत्नाः प्रावर्तन्त ।

**नटी**—अथ कानि च तानि गणराज्यानि, अन्ये च राजानः?

**सूत्रधारः**—आर्ये, शृणु—

मघा भद्राश्च यौधेयाः कुणिन्दाः अर्जुनायणाः ।
मालवाः नागराजश्च शत्रुसम्मर्दने रताः ॥

**नटी**—अस्मिन्नाटके शतद्रुप्रान्तवासिनां यौधेयानां राज्यपालस्य भूमिका भवतैव संपाद्या ।

**सूत्रधारः**—आम्, ज्ञातम् । एषोऽस्मि यौधेयः संवृत्तः ।

**(नेपथ्ये)**—जयति महतां यौधेयानां गणो बलशालिनां
तरणितनुजातीरोपान्ते जयेत् स मघेश्वरः ।
जयति सततं मद्राधीशोऽर्जुनायणमालवाः
जयतु रुचिरा श्रीसम्पन्ना सदा भरतावनिः ॥

**यौधेयः**—यावद्देशोऽयमाक्रान्तः कुषाणशकपह्लवैः ।
प्रगतिर्न भवेत्तावत् परराज्यं न सौख्यदम् ॥

तस्मात्

अरातिहतकानां नः स्वातंत्र्यपरिपन्थिनाम् ।
शल्यस्यारुन्तुदस्येवोन्मूलनं स्यात् सुखावहम् ॥

कथं च तत् संभवेत् इति सततं चिन्तातुरोऽहम् । अहो, पराभूत-शकबलः मालवगणप्रमुख इत एवाभिवर्तते । तत् संभावयाम्येनम् । विजयतां मालवगणप्रमुखः ।

कुषाणैस्सार्धमामन्त्र्य दक्षिणां दिशमाश्रितान् ।
शकांस्तद्दिक्पतेः पार्श्वं तूर्णं प्रेषितवान् भवान् ॥
पराभूतशकानीकविक्रमाक्रान्तमालव ।
प्रीयताममुना देवो महाकालो जयेन ते ॥

तव च विजयेन महाकालवासपूता उज्जयिनी स्वातन्त्र्यमवलम्बते । वर्धतां महाभागः ।

**मालवः**—पञ्चनदप्रदेशे शतद्रुप्रान्तं स्वतंत्रं कुर्वतां यौधेयानामेव अनुकरणमेतत् ।

**यौधेयः**—शकानां पराभवेनानेन तेषां मित्रत्वमापन्नाः कुषाणाः प्रभञ्जनोद्धूत-तरव इव निर्बलाः संजाताः । ते च सुदूरं बाल्हीकदेशे निवसन्तः अस्माकं भारते चाधिपत्यं कुर्वन्ति आयुक्तस्कन्धनिहितराज्यतंत्रभाराः । तैश्च नियुक्ताः अधिकारिणः अत्र निरङ्कुशाः समजायन्त । तेषामप्युन्मूलनस्य एष एवानुकूलः समयः । यतः

लघीयानप्यरिर्जातु नोपेक्ष्यो भूतिमिच्छता ।
स्फुलिङ्गः काष्ठयोगेन दहत्येव महावनम् ॥

**मालवः**—अपि च

उन्मूलनमरातीनां सुकरं व्यसने श्रुतम् ।
नदीवेगक्षीणमूलः सुखमुत्पाट्यते तरुः ॥

तस्मात् संभूय समुत्थितैरस्माभिः युगपदेव कुषाणानां पराभवः कार्यः । तथा च यतनीयं यथा ते अस्माकं देशं संत्यजेयुरिति अस्माकं संप्रधारणा ।

**यौधेयः**—युक्तमभिहितम् । अये, सिन्धुपारासंगमस्थितायाः पद्मावत्याः स्वामी इत एवायाति । तत् प्रत्युपगमनेन संभावयाव एनम् । विजयते पद्मावतीशः ।

**मालवः**—स्वागतं ते मित्र । यथावसरमेव दर्शनं जातम् ।

**नागराजः**—जयोऽस्तु जयमंत्रधराणां यौधेयानाम् । अपि च विजयतां मालवाधीशः । भवता शकाः पराजिता उज्जयिन्यामेवेत्यवगम्य त्वामभिनन्दितुं स्वयमेवात्रायातोऽहम् । दिष्ट्या वर्धसे अनेन विजयेन । अहं तु तावत्—

सेवायै मातृभूम्याः पुण्यसंभारमूर्त्याः ।
आत्मानं स्वेच्छयाहं भक्तिनम्रोऽर्पयामि ॥
उत्पाट्यारिप्ररोहान् आहवे बद्धरागान् ।
उच्चैः सिंहासनस्थां कर्तुकामोऽहमेनाम् ॥

शकानां मित्राणि कुषाणा अपि भारतं कथं संत्यजेयुरित्येव विचारः सततं मामुद्वेजयति । यौधयेन पूर्वं विजिता अपि ते भारते निवसन्त्येव । यावच्चार्यावर्तसंस्कृतिविघातकानामेषां न क्रियते निष्कासनं तावत् सुखं स्थातुं न शक्यतेऽस्माभिः ।

अत एवाहम्—

हित्वा स्वां विदिशामतिक्रमपरैः पद्मावतीमाश्रितैः
सद्यः कान्तिपुरीं तथा च मथुरामाक्रम्य मे पूर्वजैः ।
या कीर्तिः समुपार्जितेन्द्रभवने जेगीयमाना भृशम्
सा स्थैर्यं कथमाप्नुयादविजिते देशद्रुहां सञ्चये ॥

**मालवः**—भवांस्तु एकाकी एव कुषाणान् पराभवितुं निःशेषमुत्सादयितुं च समर्थः ।

**यौधेयः**—युक्तमाह । यतः—

आर्यावर्तविवर्तसंकटततिं स्वातंत्र्यविध्वंसिनीं
कोऽन्यो वारयितुं क्षमोऽस्ति बलिनं नागाधिप, त्वां विना ।
वीराशंसनसेविनः करधृतो यच्चंडकौक्षेयकः
श्यामीभूतसपत्नकीर्तिबिरुदो धत्ते विसंवादिताम् ॥

अपि च

न हिनस्ति न नैशमन्धकारं द्युमणिर्व्योमगतोऽद्वितीय एव ।
समदद्विपकुम्भदारणेऽसौ न हि साहाय्यमपेक्षते मृगेन्द्रः ॥

तदस्मिन् स्वतंत्रतासंग्रामे समरनायकपदं स्वीकृत्य अनुगृह्णातु भवानस्मान् । संभाव्यते एतत् भवत्येव ।

**नागराजः**—अनुगृहीतोऽस्मि ।

अन्येषु सत्स्वपि भटेषु बलोत्कटेषु
प्रत्यर्थिसैन्यमवमर्दयितुं क्षमेषु ।
आयोजिता रणमहे वयमेव मुख्याः
साध्यं भवेत्तदखिलं भवतां बलेन ॥

तस्मादेवं योज्यम् । कुषाणानां प्रमुखः अधिकारी मथुरायां निवसति । तत्र दक्षिणतो मम सेना प्रविशतु, उत्तरतश्च यौधेयानाम् । मध्ये च धृतः अरातिः अन्येषां गणराज्यानां चमूभिः सम्मर्दनीयः । एवं च कृते कुषाणाः आर्यावर्तं विहाय पलायन्ते एव नूनम् । अपि च

मोघीकृतारातिविचेष्टितानां
तनुत्रशीर्षण्यधनुर्धराणाम् ।
ऊर्जस्वलानां गणवाहिनीनां
क्ष्वेडाः प्रसह्य प्रचरन्तु लोके ॥

अथ च अस्य शुभकार्यस्य सिद्ध्यै भगवन्तं महाकालं प्रार्थयामः ।
(सर्वे मिलित्वा)

नमामि चन्द्रशेखरं वृषध्वजं पुरान्तकं
ललाटनेत्रनिर्गताग्निदग्धपुष्पसायकम् ।
अकिंचनं स्वसेविनामशेषसौख्यदायकं
हिमाद्रिराजकन्यकापतिं नटेश्वरं भजे ॥

**नागराजः**—हे पिनाकिन्, हे खंडपरशो,

तव प्रसादादरयः पुरापि नष्टा इति श्रूयत इन्दुमौले ।
वरं तथा देहि, भव, प्रसीद, निष्कण्टकं भारतमाशु भूयात् ॥

**यौधेयः**—विजयतामस्मद्रणनीतिः । अथ सपद्येव—

भेरीदुन्दुभिशंखनादपटहध्वानैर्दिशः पूरयन्
हस्त्यारोहिपदातिवर्गचलनैर्विश्वंभरां कम्पयन् ।
धावद्वाजिखुराहतावनिरजोव्रातैः खमाच्छादयन्
विद्राणारिबलः प्रसर्पतु रणे संशप्तकानां गणः ॥

**नागराजः**—एवमेव वयं सर्वे सन्नद्धाः ।

**यौधेयः**—तदधुना गन्तुकामोऽहम्, मालवाधीशेन सार्धम्, स्वकार्यमनुसन्धातुम् ।

**नागराजः**—सत्वरमेव साधयितव्यं भवद्भ्याम् । शुभमस्तु ।

**यौधेयः**—एतौ गच्छावः । मालवाधीश, आगम्यताम् ।

**मालवः**—एष आगच्छामि ।

**नागराजः**—एतावुभावपि प्रस्थितौ । किं चाधुना मया कर्तव्यमिति विचारयामि । आम्, ज्ञातम् । प्रयाणात् पूर्वकम् राजमहिषी द्रष्टव्या । राजधानीं पद्मावतीं प्रति गमनमप्यावश्यकमेव । तत् तत्रैव गच्छामि । अहो, किमेतत् । महच्चित्रम् । देवी इत एवोपसर्पति । जाने युद्धाभिमुखं मां ज्ञात्वा सा स्वयमेवात्रागता । एषा सा । देवि, स्वागतं ते । इत आस्यताम् । कस्तावत् सहसात्रागमने हेतुः? अतर्कितमेतत् । ननु विस्मितोऽस्मि भवतीमत्रावलोक्य ।

**देवी**—विजयतां महाराजः । युद्धैकरसो भवान् कदाचिन्मां विस्मरेदित्याशङ्क्याहमेवात्रगता देवं द्रष्टुं, प्रोत्साहयितुं च । अपि च, नाथ, जानामि ते दृढं संकल्पमपरिमितं बलं च । किन्तु, स्त्रीस्वभावकातरं वेपते मे हृदयम् ।

**नागराजः**—आर्ये, मङ्गलवेलायामलं शङ्कया । युद्धं खलु उत्सवः क्षत्रियाणां, विशेषतश्च सर्वाभ्युदयहेतुकम् । अधुना प्रत्यासीदति प्रयाणकालः । तदनुजानीहि मां प्रस्थातुम् ।

**देवी**—हृदय, धैर्यमवलंबस्व । ननु सततं सन्निहित एव ते स्वामी । नाथ, विजयलक्ष्मीपरिवृतं त्वां सपद्येव द्रष्टुमीहे ।

**नागराजः**—ननु, विजयलक्ष्मीः सन्निहितैव मे ।

(नेपथ्ये शंखध्वनिः)

**नागराजः**—किमेतत् ? शंखध्वनिः ! मन्ये, यथा मित्रं मे यौधेयगणाधीश एव शंखमाध्मातवानिति । देवि, चिरादितः प्रस्थितः स तवागमनात् पूर्वमेव । तेनाधुना युद्धोद्यमे रतेन भाव्यं सुदूरम् । ध्वनिस्तु उपान्त एव । कथमेतत् ।

**देवी**—एतत् विस्माययति नूनं मामपि । भवतु, क्षणं प्रतिपाल्य ज्ञास्याव एव ।

**यौधेयः**—एषोऽहं यौधेयः सुहृद्वरं नागराजं द्रष्टुं पुनरायातः । एष प्रविशामि । पद्मावतीश, दिष्ट्या वर्धसे । अहो, नागमहिषी अपि अत्रैव । अभिवादये भवतीम् । अहं प्रत्यावृत्तः श्रवणसुखदां वार्तां श्रावयितुम् ।

**देवी**—विजयेतां सुहृदौ । मुदावहमुदन्तमवगन्तुमुत्सुकाहम् । किं तत् ?

**यौधेयः**—आकर्ण्यतां कुतूहलेन मुदा च । एवमेतत्

प्रस्थातुकामानथ भारतीयान् सैन्यान् विदित्वैव, विहाय देशम् ।
सर्वेऽरयो दूरतरं प्रयाताः मृगा यथा केसरिनादभीताः ॥

तदा सिद्धमभीष्टम्, संपादितश्च मनोरथः ।

**नागराजः**—किं कथयसि ? ननु कुषाणाः भारतात् पलायिताः ! अपि सत्यम् ?

**यौधेयः**—अथ किम् ?

**नागराजः**—नातः परं किञ्चित् विस्मयावहम् । सुहृद्वर, कथय कथय,
दृढं समभिघातिनः प्रहरणैकदीक्षाभृतः
विहाय किमु भारतावनितलं कुषाणाः गताः ?

**यौधेयः**—सत्यमेव ।

**नागराजः**—विनष्टविषपादपं किमुत भारतप्रांगणम्?

**यौधेयः**—एवमेव।

**नागराजः**—अथो भरतभूतलात् किमुत विद्रुता ईतयः? ॥

**यौधेयः**— एतदपि अवितथम्।

**नागराजः**—मित्र, प्रियं नः। अपि तु सुतरामाश्चर्यावहमेतत् सर्वम्। कथं ते कुषाणाः सुवर्णप्रसवामवनिमेनां सहसैव विहाय त्वरिततरं पलायिताः?

**यौधेयः**—नात्र विस्मयस्यावकाशः। यतः

अभ्यर्णवर्तिभिररातिगणैः समन्तात्
युद्धे धृते युगपदेव कुषाणराजे।
मित्रे च निर्जितबले शकनायकेऽथ
तैरुज्झिता सपदि भारतभूमिरेषा ॥

**नागराजः**—युज्यते एतत्। तदा विनैव युद्धं महान् विजयलाभोऽस्माकमिति महत्प्रीतिकरमेतत्।

**देवी**—दिष्ट्या वर्धते मे स्वामी पद्मावतीशः। यौधेयगणाधीश, वर्धतां भवानपि।

**नागराजः**—महाराज्ञ्यैव कृतमभिनन्दनं बहु मन्ये।

**यौधेयः**—देवि, एतत् सर्वं भारतलक्ष्मीस्वरूपायाः तवैव प्रसादः यदस्मिन् स्वतंत्रतासंग्रामे विनैव रक्तपातमस्माकं विजयलाभः। यतः

आयोधने शत्रुबलं निहत्य पराक्रमेणासिबलेन लब्धात्।
नूनं गरीयान् विजयस्स एकः शस्त्रप्रयोगेण विना य आप्तः ॥

अपि च

अहिंसया सत्यबलेन काम्यं सम्पादनीयं सकलं च यत्र।
स पुण्यदेशो जयतादमर्त्यसेव्यस्त्रिलोक्यां ननु भारताख्यः ॥

भगवति, इदमप्यस्तु तव प्रसादात्—

अपगतरिपुशंकं भारतं देवि भूयात्
दिशि दिशि गणराज्ये मोदमायान्तु लोकाः ।
अविरलसुखमूलं सर्वशान्तिप्रदायि
द्रुततरमभितः स्वाराज्यमीयात् समृद्धिम् ॥

अपि च

जयतुतरां भरतावनिरस्या
ईतिभीतयो यान्तु विनाशम्,
सिद्धिरविकला यातु सकाशम्,
गणराज्यं सुतरां च विकासम्,
सस्यरसैः परिपूरितभागा प्रतिपदमेतु विलासम् ॥
सत्यामोघमंत्रतरुशोभितसर्वोदयफलभूषा ।
पूर्णा भवतु मनीषा ॥
रम्यवनैर्निर्झरतरुकुसुमावलिभिः कृतबहुवेषा ।
जयतुतरां भरतावनिरेषा ॥

# सोपानशिला

दे. ति. ताताचार्यः

> कुशलं दिशताद्देवो विपुलं कमलेक्षणः ।
> स्मृतिविच्छेदतो यस्य क्षुत्सतां नोपवासतः ॥

(१)

**कापिलः**—अये पश्यसि तस्य अविवेकम्, अस्मदीयां सोपानशिलां स्वोपयोगाय अपेक्षते!

**जाजी**—कोऽत्र विस्मयः? स्वोपयोगार्हे वस्तुनि अपेक्षा सर्वस्य स्वतो जायते।

**का०**—प्रिये, एषा ते अक्षोभ्या शान्तिः अतीव नाम बहुमतिमर्हति, मम तु तद्वार्ताश्रवणात् प्रभृति ज्वलति चेतः, न केवलं विस्मयते। परेषां वस्तु तैरुपयुज्यमानं कश्चित् स्वयं जिहीर्षति चेत् स किं मनुष्यः?

**जा०**—कामं न मनुष्यः। मृग एव। लोके एवंविधाः सुबहवो मृगा वर्तन्ते। लीलारसिकस्य सर्वेश्वरस्य विचित्राः सृष्टयः। तत्र परितापो निष्फलः। कर्तव्यं तु चिन्तनीयम्।

**का०**—योगिनामपि दुर्लभा इयं ते निस्सङ्गता मम मनोव्यथां वर्धयति। तमाहूय तूष्णीं तत्प्रदानमेव वरं मन्यस इव।

**जा०**—नाहं कदाचिदपि आर्यपुत्राभिप्रायस्य प्रतीपगामिनी भवेयम्। वस्तुतत्त्वं तु निवेदयामि, आर्यपुत्रस्य अवसादकारिणीम् इमां मानसीं विक्रियां शमयितुकामा।

**का०**—मम आर्तिं चिकित्सितुमीहसे। न पुनस्तस्य दौरात्म्यमनुशोचसि।

**जा०**—अनुशोचनेन किं भविष्यति?

का०—केवलं बालभावं दर्शयसि। न वयसोऽनुरूपं भाषसे। परकीयाय वस्तुने कथं परः स्पृहां कर्तुमर्हति? इदं सम्यक् परामृश। किमेषा नीतिः? किमयं धर्मः?

जा०—(उत्थितं हासं नियच्छन्ती) मृगाणां का नीतिः? को धर्मः?

का०—न स मृगः। अपि तु मनुष्यः।

जा०—न। चतुष्पादो मृगा अन्ये। द्विपादोऽन्ये। द्वितीयराशिगतः सः।

का०—अलं ते उपचारोक्तिभिः। द्विपादो मनुष्याः। ते विवेकिनः, न मृगवन्मूढाः। मनुष्येण सता तेन "इदमेषां स्वम्। अनेन ते स्वकार्यं निर्वर्तयन्ति। तस्मिन् अस्माकमभिलाषो न युक्तः।" इति विजानता स्ववस्तुभोगमात्रसन्तुष्टेन भाव्यम्।

जा०—प्रकृत्या सात्त्विकस्य सात्त्विकजनैकसंसर्गशीलस्य आर्यपुत्रस्य खलस्वभावपरिचयावकाशो नैव भूतपूर्वः। अतः आत्मौपम्येन मनुष्याः सर्वे आर्जवनिधय इति दृढां प्रतिपत्तिं कुर्वन् अद्य ग्रामण्यो दुरभिलाषेण इयन्तमुद्वेगम् आर्यपुत्रो भजति।

का०—"लोकवृत्तान्तमजानतः तवैव बालभावः। न तु तत्र सुव्युत्पन्नाया मम" इति ब्रवीषि।

जा०—क्षन्तुमर्हत्यार्यपुत्रः। नाहं तथा उद्धता, यथा आर्यपुत्रं प्रति अविनयव्यञ्जिकां वाचं विसृजेयम्।

का०—न न। नाहं त्वामपराधिनीं प्रतिपद्ये। किमहं न जानामि, मद्धितैकपरा त्वं तत्तद्वदसीति। तदास्ताम्। इदं तु पश्य। प्राञ्चोऽस्मत्कुलपुरुषाः प्रदेशान्तरवासिन आसन्। कुतोऽपि निर्बन्धात् तत् स्थलं विहाय स्थिरवासहेतोः अत्र आगच्छन् मे पिता किल इह अभिनवं निर्मितस्यास्य गृहस्य पूर्वपुरुषाध्युषितगृहारम्भककिञ्चिद्वस्तूपयोगेन तत्सम्बन्धः

कश्चन कथञ्चित् सम्पाद्य इत्यभिनिविष्टः। महता श्रमेण इमां सोपान-शिलां तत आनीय मुखद्वारसोपानमिदं बबन्ध। इदं भित्त्वा उद्धृत्य इयं सोपानशिला अन्यस्मै देयेति कथमेतत् सह्यम्?

जा०—कोऽयमागच्छति?

(प्रविश्य)

पुरुषः—महन्, नमस्ते।

का०—को नु सौम्य त्वम्?

पु०—लेपकारः ग्रामणीस्वामिनः अभिनवं गृहं निर्मिमाणः।

का०—किं ते अस्मदभ्यागमप्रयोजनम्?

पु०—स्वामिना किल प्रेषितोऽस्मि।

का०—(क्रोधसंरक्तमुखः पत्नीं वीक्ष्य ततः पुरुषं प्रति) केन कार्येण?

पु०—स्वामी किल अभिनवं एकं गृहं निर्माति।

का०—लोके बहवो बहूनि कार्याणि कुर्वन्ति।

पु०—तत् अवसितप्रायम्।

का०—अद्य नावसितं चेत् श्वोऽवसितं भविष्यति।

पु०—बहिर्द्वारसोपानपङ्क्तिरिदानीं बध्यते।

का०—कामं बध्यताम्।

पु०—तत्र चत्वारि सोपानानि।

का०—तावन्ति वा न्यूनानि वा अधिकानि वा यावदपेक्षं बन्धव्यानि।

पु०—शिलामयानि सोपानानि बन्धुमिष्टानि।

का०—कामं तथा भवतु। स्वेच्छानुसरणे कः प्रतिबन्धः?

पु०—तिस्रः शिलाः सन्ति।

**का०**—ग्रामणीः प्रभवति । चतुर्थ्यपि तस्य अत्यन्तं सुलभा ।

**पु०**—बहुप्रयतितवताऽपि न लब्धा ।

**का०**—भवतु । न वयं परगृहवृत्तान्तश्रवणकुतूहलिनः । अस्ति नः कर्तव्यम् । साधयामस्तावत् । त्वमपि गत्वा स्वकर्म कुरु ।

**पु०**—न, महन्! श्रोतव्यम् । तदर्थमेव स्वामिनाऽहं भवत्सकाशं प्रेषितः ।

**का०**—शिलार्थम्?

**पु०**—आम् ।

**का०**—न वयं शिलावणिजः । ये ते, तान् प्रति त्वया गन्तव्यम् ।

**पु०**—किमिदं ग्रामणीस्वामिनो न विदितम्?

**का०**—विदन् कथं त्वां मत्सकाशं प्रेषयति?

**पु०**—इयं भवद्गृहसोपानपङ्क्तौ स्थिता श्लक्ष्णा शिला अत्रभवता दातव्येति स प्रार्थयते ।

**का०**—अये! सम्यक् तावदेतत् । नूनं श्वः स्वगृहवत्सस्य दृष्टिवैकल्यपरिहाराय अस्मच्चक्षुरपि उत्पाट्य दीयमानमपेक्षेत । ग्रामाधिकारे हि वर्तते । तेन स एको मनुष्यः अन्ये सर्वे पशवः तदुपकरणभूताः । स यथा वर्तयति तथा तैर्वर्तितव्यम् ।

**जा०**—आर्यपुत्र, अलं वार्ताहरेऽस्मिन् क्रोधं प्रदर्श्य । अयं तपस्वी किं कुर्यात्? सौम्य, त्वं याहि । स्वामिनं ब्रूहि तं विषयम् आवां चिन्तयन्तौ वर्तावहे इति ।

**पु०**—तथा । (निष्क्रान्तः)

**का०**—अयि, सुकृतिनी त्वम् । शान्तिमनुपप्लुतां रक्षसि । मम तु किमपि कल्लोलवान् क्रोधप्रवाहः अनुकलं वर्धते । किं कुर्याम्?

जा०—आत्मनः कुलं विद्यां वृत्तं चानुचिन्त्य अन्तःशत्रुरयं नियन्त्रणीयः । अथ वा काऽहमार्यपुत्रमुपदेष्टुम् ।

का०—न तथा वक्तव्यम् । काले प्राप्ते सर्वे उपदेष्टारो भवितुमर्हन्ति । परन्तु तस्य दौरात्म्यस्मरणं पदेपदे जायमानं मां परवशीकरोति । नाहमात्मन ईशे ।

जा०—कामं तथा । किन्तु लोकस्वभावस्य यथावदवगमः क्रमेण शान्तिं फलिष्यति । तथा मे मतिः । पश्यत्वार्यपुत्रः—

परकीयं जिघृक्षन्ति कामनिर्दग्धचेतसः ।
तान् परे निजिघृक्षन्ति सदैवं दुःस्थितं जगत् ॥

का०—आं, प्रिये । एवमेतत् । किन्तु अस्मिन् विषये को निश्चयः ? तं ब्रूहि ।

जा०—किमहं ब्रवाणि? यदि दीयतामिति वदेयं तदार्यपुत्राय न रोचेत । यदि न दीयतामिति, तर्हि बलवद्विरोधमनुमतवती स्याम् । स कुपितः किं किं न कुर्यात्?

का०—तथ्यमात्थ त्वम् । अतिसङ्कटा स्थितिः । सर्वेश्वरः शरणम् ।

(२)

**ग्रामणीः**—कलम्ब, कच्चित् तमन्वयुङ्क्थाः? किमाह स्म?

**कलम्बः**—यथापूर्वं "अद्यापि पर्यालोचना वर्तते" इति वदति । दातुं नेच्छतीति भाति ।

**ग्रा०**—ममापि तथा मतिः । उपायेन प्रवर्तमानानां अर्थाः सिद्ध्यन्ति । अत्र साम नोपायः । अतः अगत्या उपायान्तरमवलम्बनीयम् । जानासि?

तथा कृत्वा निर्वर्तय कार्यं, अविलम्बितं च, अनन्यविदितं च। सूर्योदयात् प्राक् सर्वं निष्पन्नं भवितुमर्हति। समग्रं पारितोषिकं लप्स्यसे।

**क॰**—प्रभौ प्रसन्ने किं मे न सुलभम्? तदास्तां प्रभो। अभ्युपगतस्य कार्यस्य सम्यङ् निर्वर्तने मे दृष्टिः, नान्यत्र।

**ग्रा॰**—तद्विजानन्नहं त्वामन्विष्य आनाय्य अस्मिन् कर्मणि नियुञ्जे। गच्छ तावत् कार्यसिद्धये। देवी आगच्छति। (कलम्बो निष्क्रामति। देवी सुमतिः प्रविशति)।

**सुमतिः**—कोऽयं पुरुषः इतो निर्गच्छति?

**ग्रा॰**—अस्मद्ग्रामवास्येव।

**सु॰**—अदृष्टपूर्वः। किं खलु तस्य इहागमनप्रयोजनम्?

**ग्रा॰**—(सम्भ्रान्तोऽपि सावहित्थम्) न खलु किञ्चित्। केवलं मां द्रष्टुमागतः।

**सु॰**—आर्यपुत्रस्य दर्शनमात्रेण तस्य तदीयानां च उदरं पूर्यत इव।

**ग्रा॰**—भवत्याः साम्प्रतमत्र आगमनप्रयोजनमहं जिज्ञासे।

**सु॰**—मन्ये तदागमनप्रयोजने ज्ञाते मदागमनप्रयोजनं ज्ञातं भविष्यति।

**ग्रा॰**—कोऽनयोः सम्बन्धः?

**सु॰**—सुनिबिडः सम्बन्धः।

**ग्रा॰**—नूनं मया विनोदाभिलाषिणी त्वम्।

**सु॰**—सन्तप्यमाने मनसि विनोदस्य कोऽवसरः?

**ग्रा॰**—तर्हि कलहमिच्छसि।

**सु॰**—आर्यपुत्रेण कलहायिता क्व गच्छेयम्? किमियता कालेन कलहरुचिं मामार्यपुत्रो निश्चितवान्?

पतिना समग्रं संविधानं कार्यम् । जाग्रत्ता रक्षणीया । कथञ्चिद् वृत्ते-ऽपहारे, अपहृतं वस्तु सर्वप्रयत्नेनोपलभ्य प्रत्याहृत्य स्वामिसकाशं प्रापणीयम् । अपहारी च दण्ड्यः । एवं सति अधिपतिरेव यदि चोरान् प्रोत्साह्य तत्साह्येन कस्यचिद् ग्रामवासिनः स्वमपजिहीर्षति तत्र किं कर्तव्यम्?

ग्रा०—विदुषीव भाषसे । मौढ्यं तु प्रकाशयसि ।

सु०—प्रतिबोधनीया यद्यसम्बद्धं भाषितवत्यस्मि ।

ग्रा०—अधिपतिः किञ्चिदपेक्षते चेत् सद्यस्तदुपपादनपरैर्ग्रामवासिभिर्भाव्यम् । स्थानगौरवं एवं तैः परिपालनीयम् ।

सु०—(सविषादं स्वगतम्) अहो बत आर्यपुत्रस्य उन्मस्तकोऽहम्भावः ।

ग्रा०—यदा ते तत्र मन्दायन्ते, तदा बलात्कारोऽवर्जनीयो भवति ।

सु०—अधिपतेरपि परकीये वस्तुनि अपेक्षा कथं युज्यते?

ग्रा०—अधिपतित्वाद्युज्यते ।

सु०—त्रैलोक्यं जितवतः पौलस्त्यस्य मैथिलीकामना युक्तैव किलाभूत् ।

ग्रा०—सा स्त्री । प्रकृता शिला ।

सु०—स्त्रीति शिलेति को विशेषः परस्वत्वे समाने ।

ग्रा०—अप्रतिविधेयमौर्ख्या त्वम् । आवयोश्चर्चा सन्तिष्ठताम् । प्रतिनिवृत्य स्वकार्यं पश्य ।

सु०—अनर्थो भविष्यतीति अतीव बिभेति मे अन्तरात्मा ।

ग्रा०—कोऽनर्थो मम भविष्यति? (सहासम्) यथा स दाशरथी रामो राक्षस-राजस्य शिरश्चिच्छेद तथाऽयं दरिद्ररामो मम शिरश्छेत्स्यतीति किन्तु सन्त्रस्ताऽसि?

**सु०**—(अतिदुःखिता) मा मैवम्। स कामं दरिद्रो दुर्बलः प्रतिकाराक्षमः। कुलशीलविद्यावृत्तसम्पन्नेन तेनाराध्यमानः स एव तु रघुवीरः तदमित्रेषु स्वयं दण्डधारो भवेत्। (अश्रूणि मुञ्चति)।

**ग्रा०**—अये, दृष्टमगणयित्वा अदृष्टमनुप्रविष्टाऽसि। अलमलम्। प्रतिनिवर्तस्व। युष्मत्सुलभं ब्रह्मास्त्रं अश्रुमोचनमपि अन्ततः आदृतवत्यसि। परन्तु निष्फलम्। दृढसङ्कल्पोऽहम्। श्व एव सुनिर्मितस्य महतः प्रासादस्य सर्वातिशायि रामणीयकं पश्यन्ती आनन्दाश्रु मोक्ष्यसि। निरातङ्का भव।

(३)

**कापिलः**—अयि; पश्यसि? गता शिला।

(आगत्य)

**जाजी**–निशीथे निद्रापरवशेष्वस्मासु चोरवृत्त्या जहारेव।

**का०**—तत्र कः संशयः? किं पुनरिदानीं कर्तव्यम्?

**जा०**—किं कर्तव्यम्? कालगतिरीदृशीति तत्वं जानद्भिः तूष्णीं स्थातव्यम्।

**का०**—न। नीतिस्थले व्यवहारः प्रवर्तनीयः।

**जा०**—तदपरं महत् सङ्कटम्। के साक्षिणः? सम्प्रति निशीथे अनन्यविदितं हि जहार।

**का०**—हा हन्त, अनाथं जगत्। अस्मादृशानां दुर्बलानां प्रबलैः पीड्यमानानां रक्षाप्रत्याशैव किल नास्ति।

**जा०**—परमार्थोऽयं यदार्यपुत्र आह।

**का०**—दैवाद् भयमेकं लोके धर्मप्रतिष्ठाहेतुः। तदत्यन्तं लुप्तम्। अतः प्रायः सर्वे उत्पथगामी। (अभिवीक्ष्य) कोऽयमागच्छति?

**जा०**—(दृष्ट्वा, उपांशु) अहिपतिः, यः किल 'खलः' इत्युपपदं कृत्वैव जनैर्निर्दिश्यते ।

(प्रविश्य)

**अहिपतिः**—नमो नमः ।

**का०**—आशिषः । उपविश्यताम् । यदि किमपि वक्तव्यमस्ति, तत् श्रोतुकामोऽस्मि ।

**अहि०**—अतीतायां किल रात्रौ अस्मिन् गृहे चौर्यं किञ्चिद् वृत्तम् । तदाकर्ण्य अतिमात्रं विषण्णोऽभूवम् ।

**का०**—न महार्घं किमपि हृतम् । सोपानशिलाऽत्र स्थिता न दृश्यते । यातु कामम् ।

**अहि०**—न तथा स्वामिन् । हृतं वस्तु महाघममहार्घं वेति नायं विमर्शः । किन्तु चौर्यं वृत्तं न वेति । वृत्तं चेत् हृतप्रतिलम्भे अपराधिनो दण्डे च यत्नः कार्यः ।

**का०**—सौम्य, लौकिकीषु प्रवृत्तिषु नास्माकं परिचयः । वस्तुनाशेन यावत्सङ्कटं ततो महत्तराणि बहूनि सङ्कटानि तत्र स्युरिति बिभिमो वयम् ।

**अहि०**—स्वामिन्, श्रद्धधातु भवान् मम वचनम् । अस्मिन् कार्ये सर्वं भरम् अहं वक्ष्यामि । अल्पाऽपि भीतिश्चिन्ता वा युष्माकं मा भूत् । यथा सङ्कटं किमपि न भवेत् तथाऽहं सर्वं करिष्यामि । केवलम् अभिशंसनपत्रे हस्ताक्षरं विन्यस्य स्वस्थ आस्तामत्र भवान् ।

**का०**—व्यवहाराय अपेक्षितं धनमस्मासु नास्ति ।

**अहि०**—सर्वं व्ययमहमेव करिष्यामि । तस्य कृते मनागपि चिन्ता भवद्भिर्न कार्या ।

**का०**—सौम्य, इदमिदानीं मे प्रष्टव्यं भवति । कुतस्ते अस्मिन् विषये इयती श्रद्धा? अस्मदिच्छानुसारं वयं करिष्यामः । कुतस्त्वं निर्बध्नासि?

अहि०—अत्र द्वे कारणे स्तः एकं ग्रामण्यः शासनम् । स हि अधिकार-मदमत्तः क्षुद्रः सार्वभौममानी इतरान् सर्वान् अत्यन्तमवन्यते । इदानीमत्र भवन्तमिव सर्वान् बहुधा उपद्रवन्नास्ते ।

अपरं अधर्मोपमर्देन धर्मप्रतिष्ठापनम् । अहमनक्षरज्ञः । अकिञ्चिज्ज्ञः । अत्र भवतः पुरतः स्थातुमप्यनर्हः । किं पुनर्भाषितुम् । तत्रापि धर्ममधिकृत्य । तथाऽपि महद्भ्यः श्रुतं धृतं च किञ्चिद् विज्ञापयामि । दयया क्षमया च श्रृणोत्वत्रभवान् । अहिंसा सत्यं अस्तेयमितीमे लोके सर्वेषां मनुष्याणां साधारणा धर्माः । यत्र जना एतन्निष्ठा भवन्ति स देशो राजन्वान् । तस्मिन् देशे 'प्रजाः पुरुषायुषजीविन्यो निरातङ्का निरीतयश्च' भवन्ति, यस्मादेषां धर्माणामद्य विप्लवो जातः, तस्मात् बहुविधाभिः बह्वीभिः दिनेदिने वर्धमानाभिः विपद्भिः जनाः पीड्यन्ते । इदं तत्त्वं विदद्भिः लोकक्षेमकांक्षिभिः उदारहृदयैः सज्जनैः अधर्म-प्रवृत्तिप्रतिरोधे यथाशक्ति यतनीयम् । ग्रामप्रधाने दुर्जने शिक्षिते इतरः कोऽपि एवंविधे पापकर्मणि न प्रवर्तेत । तदिदं लोकहितमुद्दिश्य अपरिचितपूर्वोऽपि अत्रभवतः सन्निधिमागतोऽस्मि ।

का०—(सविस्मयम्) हन्त! अनक्षरज्ञमात्मानं ब्रवीषि; विपश्चितामपि दुर्वचं धर्मतत्त्वमुपन्यस्यसि । (पत्नीमवेक्षते)

जा०—सौम्य, साधुरयं एकान्तशीलः स्वदैवं चिन्तयन् गृहान्तर्वर्तते । तं किमिति चत्वरम् आकर्षसि?

अहि०—(स्वगतम्) अये, पुरुषो वशं गतः । नेयं स्त्री । (प्रकाशम्) अम्ब, चौर्यानुमतिपापं प्राप्स्यथ, यदि चोरस्य दण्डने न प्रवर्त्स्यथ ।

जा०—चोरस्यैव पापमभिज्ञा आचक्षते । न तु चोरितवस्तुस्वामिनामपि ।

अहि०—न तथा । वृत्तस्य चौर्यस्य गोपनं हि भवद्भिः कर्तुमिष्यते । अधर्म-कारिणां यावत् पापं तावत् पापं तद्गोपनकारिणामपि ।

जा०—किं तत् गोपनं नाम, यदस्माभिश्चिकीर्षितमिव अभिधत्से। यदि केचिदस्मान् प्रक्ष्यन्ति किं युष्मद्गृहे चौर्यं वृत्तमिति, आमित्येव वयं वदिष्यामः, यथा त्वयि साम्प्रतम्। न त्वपह्नोष्यामहे। बहुक्लेशहेतुत्वात् व्यवहारप्रवृत्तिं तु नेच्छामः।

अहि०—व्यवहारप्रवृत्तिर्दुष्परिहरा। चौर्यं वृत्तं जानन्तो हि पालकाः चोरं यत्नादुपलभ्य युष्मान् साक्षिणः कृत्वा नीतिस्थले विचारणां कारयिष्यन्ति। न तु तूष्णीं स्थास्यन्ति।

का०—सौम्य, अत्र साक्षी दुर्लभः। निशीथे शिलां हृतवन्तं कः साक्षादपश्यत्? "अयं शिलामहरत्, अहमपश्यम्" इति को वक्ष्यति?

अहि०—भवन्तो न जानन्ति। बहवः सन्ति साक्षाद् दृष्टवन्तः। प्रतिरूपमपि गृहीतं वर्तते।

का०—(सविस्मयं) प्रतिरूपं गृहीतं वर्तते! कच्चित् सत्यं वदसि?

अहि०—सत्यं वदामि महात्मन्। गृहीतं वर्तते।

का०—किं केषाञ्चित् पूर्वमेव ज्ञातं सोऽस्मदीयां शिलां हरिष्यतीति। प्रतिरूपग्रहणसंविधानं च ततः कृतमासीत्?

अहि०—महात्मन्, किं तस्य सर्वस्य विस्तरेण? प्रायः सर्वे अत्रत्याः तं द्विषन्ति। तस्य यथार्हदण्डप्रापणे मदापनयने च चिरात् समयप्रतीक्षा अभवन्। समय आगच्छत्। सर्वमकुर्वन्। व्यवहारारम्भमिदानीं प्रतीक्षन्ते।

जा०—सौम्य, परेषामुत्साहेन यदि व्यवहारप्रवृत्तिर्भवति, कामं भवतु। वयन्तु स्वयं किमपि कर्तुं नेच्छामः।

अहि०—अम्ब, सर्वपीडाकरः स धूर्तः यथा यथा शीघ्रं दण्डेन युज्यते तथा तथा ग्रामस्य क्षेमः। तत्र कथं भवती परिपन्थिनी भवति?

का०——बलवदनिष्टापातशङ्किनी इयं भृशं बिभेति ।

अहि०——न मनागपि भेतव्यमित्यसकृदवोचम् । अहं प्रतिभूः । अल्पमपि सङ्कटं भवतां यथा न भविष्यति, तथाऽहं जागरूको भविष्यामि । दैवेन शपे सर्वं भरमहं वक्ष्यामि । निश्चिन्ता यूयं स्त ।

का०——तथा भवतु सौम्य । अभिशंसनपत्रं सज्जीकृत्य प्रेषय । हस्ताक्षरं विन्यस्य प्रतिप्रेषयामि ।

अहि० — धन्योऽस्मि । इदं महापुरुषलक्षणम् । साधयामि । (निष्क्रान्तः)

जा०——ममास्मिन् साशङ्कमेव मनः ।

का०——सर्वत्र ते साशङ्कं मनः । कुत्र विस्रम्भि ?

(४)

ग्रामणीः——स्याल, कच्चित् नूतनगृहालङ्काराः सर्वे निश्शेषिताः ? कच्चिद्वाद्यकारा उपस्थिताः, पुरोधाश्च ? कच्चित् फलानि, शर्करा, खण्डशर्करा, पूगताम्बूलानि पुष्पाणि च पतद्ग्रहेषु निक्षिप्य सज्जीकृतानि ? कच्चित् यावदपेक्षं रूप्याणि खण्डाश्च उद्धृत्य निहितानि ? यथा लग्नातिपातो न भवेत् तथा इतः प्रस्थातव्यम् ।

स्यालः——सर्वं सज्जम् । लग्नमागतम् । त्वरया प्रस्थातव्यम् । किन्तु आयुष्मतः पुष्कराक्षस्य आगमनं प्रतीक्ष्यते ।

ग्रा०——प्रातरेव वत्सेन आगतेन भाव्यम् । कुतो न जाने अद्यापि नागच्छति । धूमशकटागमनसमयो ह्ययम् । नूनमस्मिन् शकटे आगमिष्यति । मोटार्यानं प्रेषय स्थानकं प्रति । त्वरया तमानेष्यति ।

स्या०——तथा करोमि । (स्यालः श्रीकरो निष्क्रामति । पैतृष्वसेयः अग्निः प्रविशति)

ग्रा०—स्वागतं प्रियबान्धवाय पैतृष्वसेयाय। उपविश्यताम्। कच्चित् कुशलं गृहे सर्वेषाम्? कथमेकाकिनो भवत आगमनम्? कच्चिदन्ये पृष्ठत आयान्ति?

पै०—सर्वत्र समग्रं कुशलम्। अभिशंसनान्मुक्तो मातुलपुत्र इति तु श्रुतवतां प्रवर्धमानः प्रमोदोऽस्माकं वपुषि न माति।

ग्रा०—पैतृष्वसेय, मामभियुज्य प्रवृत्तस्य व्यवहारस्य पर्यवसानं कथमन्यथा भवेत्?

पै०—ख्यातो महापुरुषो ग्रामणीर्भवान्। तस्य चौर्याभिशंसनमभूदित्याकर्ण्य वयं उत्कम्पिताः, विस्मिताः, प्राड्विवाकनिर्णयं प्रति तीव्रजिज्ञासाश्च अभूम।

ग्रा०—प्राड्विवाकस्य निर्णयं किमवर्तत। विचारे उपक्रान्ते निर्दिष्टेषु साक्षिषु यः कोऽपि नोपस्थितः।

पै०—अविश्वसनीयेषु विश्वस्य व्यवहारमुपाक्रमतेव अभिशंसाकारी।

ग्रा०—स कश्चिदुञ्छवृत्तिः कुमतिः असमर्थेष्वग्रगण्यः स्वपरबलाबलमजानन् परवञ्चनयैव जीवतः खलस्य कस्यचित् प्रोत्साहनेन व्यामुग्धः दुष्प्रवृत्तिमकरोत्।

पै०—उं। ततः परम्।

ग्रा०—स खलः कन्याविवाहहेतोः धनार्थी। मामेत्य द्वे सहस्रे रूप्याणि ऋणमयाचत। गृहीतप्रत्यर्पणे तस्य न मतिः, नापि शक्तिः। अतोऽहं प्रत्याचक्षि। कालं प्रतीक्ष्य स्थितः सः मत्प्रतिकूलाचरणे तं दारिद्र्यारामं उपकरणमकरोत्।

पै०—महतामुपद्रवकारिणो दुर्जनाः कदा कुत्र नाभवन्। ततः—

ग्रा०—ततः किम्। तं पिशाचं तन्त्रेण आनीय अनुनीय तदपेक्षितं अनल्पं बलिमददाम्।

पै०—अहो बत धूर्तः अकिञ्चित्कारेण द्वे सहस्रे रूप्याणि लेभे !

ग्रा०—किं क्रियताम् । अस्मद्गौरवं हि कथमपि रक्षणीयम् । इयता स तृप्त आसीदिति तु सन्तोष्टव्यमभूत् ।

पै०—स मन्ये साक्षिणः सर्वान् विघटयामास ।

ग्रा०—आम् । असाक्षिको व्यवहार इति अधिकरणिक इमं परास्यति स्म ।

पै०—तत्त्वबुभुत्सया पृच्छामि किं तदीयं वस्तु तस्याविदितं भवता आहृतम् ?

ग्रा०—आम् । अन्यथा ग्रामाधिपत्येन मे किं फलम् ?

पै०—(विहस्य) अथ व्यवहारे भग्ने स तपस्वी किमकरोत् ?

ग्रा०—कथं तपस्वीति सानुकम्पमिव भवान् भाषते । स हि ग्रामण्यं मां तिरस्कुर्वन् अविनीतः विध्वंसनीयः । मिथ्याऽभिशंसनात् मम मानहानिमजनयदिति तं प्रति प्रतिव्यवहारप्रवर्तनाय अधिकरणिकस्यानुमतिं लब्धवानस्मि । दृढं मन्यतां भवान् कतिपयैरहोभिः तं तदीयं च सर्वं अभावसात् करिष्यामि । अन्यथा नाहं पुमान् ।

पै०—(सभयं स्वगतम्) हा कष्टम् । सीमातिलङ्घी मातुलपुत्रस्याहङ्कारः प्रागेव रूप्याणां सहस्रद्वयं दण्डं प्रापितः । पुनः किमनर्थान्तरं भविष्यति, न जाने । सर्वेश्वर इमं रक्षतु ।

(फट् इति कश्चन शब्दः)

ग्रा०—(शिरसि वामं हस्तं निधाय) हा, किमिदम् ?

पै०—(ससम्भ्रमं) किं किं, किं मातुलपुत्र । (लोष्टमेकं तस्य पार्श्वे पतितं पश्यन्) हन्तेदं लोष्टमावरणात् भवतः शिरसि सजवं पतितम् । हस्तमपनयतु भवान् । किं रक्तोद्गमोऽस्तीति पश्यामि । (दृष्ट्वा) त्स त्स त्स । तीक्ष्णेन पार्श्वेन पतित्वा त्वचमभैत्सीदयं सुधाघनः । दिष्ट्या नात्यगाधो व्रणः । अचिरात् शोषमेष्यति । कच्चिन्न तीव्रा वेदना ?

(झटिति प्रविश्य कश्चित् ग्रामण्यो हस्ते पत्रमेकमर्पयित्वा निष्क्रामति)

**ग्रा०**—(पत्रमपावृत्य वाचयित्वा 'हा वत्स' इत्याक्रन्द्य मूर्छितो भूमौ पतति)।

**पै०**—अहो अत्याहितम्। (ग्रामण्यः सविधे उपविश्य तस्य मुखं परिमृशन्) को नु भो अन्तः! शीतं जलं व्यजनं च त्वरितमानीयताम्।

(प्रविश्य)

**स्या०**—(ग्रामण्यमवलोक्य सविषादम्) हा कष्टम्। किं वृत्तं पैतृष्वसेय।

**पै०**—यः कोऽपि सहसाऽऽगत्य पत्रमेकं भवदावुत्तस्य हस्ते दत्वा निरक्रमीत्। तदनुवाचयन्नेवायं मूर्छां गतः पतितः शेते।

**स्या०**—(पत्रमादायानुवाच्य) हा हतविधे! ईदृशं नु ते दुश्चेष्टितम्। (उपविश्य रोदिति)।

**पै०**—श्रीकर, न युक्तं पुंसां धैर्यमुज्झितुम्। अत्रभवतो मूर्छां प्रथमं शमयेम। ततः परमन्यत् परामृशेम।

**स्या०**—महान् अशनिपातः कश्चन वृत्तः पैतृष्वसेय। तेनायं मूर्छितः शेते। हा हन्त कथं मे भगिनी सहिष्यते? एकोऽस्याः पुत्रः मतिमान् गुणवान् नूतनगृहप्रवेशे कर्तव्ये निश्चिते शमनगृहं किल प्रविशति स्म। कथम् अहमिदं तस्यै निवेदयेयम्। सद्यो हि भर्तुस्तुल्यावस्था भविष्यति! मरिष्यत्येव वा। हा हन्त किमिदानीं करवाणि?

**पै०**—आर्य, अलं स्त्रीजनोचितेन परिदेवितेन। दैवायत्तसकलवृत्तयो वयम्। आत्मनः सुखदुःखयोरनीशाः। पुत्रगतिरिदानीं मात्रे न प्रकटनीया। अस्य मूर्छापनयने यतेमहि। पश्चात् शनैः तां दुर्वार्तां तस्या विदितां करवाम।

**स्या०**—(उत्थाय गृहान्तर्गत्वा जलव्यजनहस्तः भगिन्या सुमत्या सह प्रविश्य ग्रामण्यो मुखे जलं प्रोक्ष्य हस्तेन मार्ष्टि। सुमतिः व्यजनमादाय वीजयति)।

**ग्रा०**—(शनैः नेत्रे उन्मीलयति)।

**पै०**—दैवात् प्रत्यागतप्रज्ञो मातुलपुत्रः। इतः परं न भेतव्यमस्माभिः।

**स्या०**—आवुत्त, का रुजा? कथमिदानीं वर्तते?

**ग्रा०**—(अश्रुपूर्णाभ्यां लोचनाभ्यां शून्यं पश्यन् उत्थातुमिच्छति)।

**स्या०**—(तं हस्ताभ्यामुत्तभ्य उत्थाप्य उपवेशयति)।

**पै०**—आर्य श्रीकर, युष्मदावुत्तोऽयं शून्या दृष्टीः परितः क्षिपति। नूनमयं विभ्रान्तचित्तः। कालक्रमेण मन्ये प्रकृतिं प्राप्स्यति। सादरं पर्यवेक्षणीयः। (अपवार्य उपांशु) अन्यदिदमवधेमम्। भवद्भगिनीसकाशे भागिनेयवार्ता न सहसा उद्भेदनीया, मा भूत् तस्या अपि इयं दशा, या ते आवुत्तस्य। अहं ग्रामं प्रति निवर्ते। अत्रत्या स्थितिः पदे पदे निवेद्यताम्।

५

**श्रीकरः**—स्वसः, विवेकसम्पन्ना त्वम्। अतिदुःखकर्शितेन आत्मना किं भविष्यति? आवुत्तस्य चित्तस्वास्थ्याय तीव्रं यतनीयम्। धैर्यमवलम्बस्व। दैवायत्तेऽर्थे किं वयं कुर्याम?

**सुमतिः**—जानामि भ्रातः, सम्यग्जानामि सर्वम्। विस्मर्तुमशक्या वत्सस्य गतिः पदेपदे स्मर्यमाणा शोकाग्निं सहस्रशिखमुद्दीपयति। आत्मनोऽनीशा भवामि। आक्रन्दामि, शिर आघ्ने, परिधावामि, पतामि, रोदिमि, उन्माद्यामि, प्रलपामि, तूष्णीं शये। हा! क्व गतो मे वत्सः? अम्बेति मामाह्वयन् पुनरिह किं नागमिष्यति? "क्षुधितोऽस्मि। अन्नं

देहि" इति किं माम् इतःपरं कदापि न वदिष्यति। हा वत्स, तस्मिन्नहनि मद्रं प्रति त्वां प्रेषयन्ती किमपुनर्निवृत्तये प्रेषितवत्यस्मि। . . .

श्री०—(सविषादं स्वगतम्) कथं प्रशमवचनान्येव मे अस्या दुःखमुद्दीपयन्ति। (प्रकाशम्) स्वसः, धीरा भव। मा स्मैवं शोकाय आत्मानमर्पय। मासा गताः शोचनीयस्य वृत्तस्य। अद्य वृत्तमिव कृत्वा एवमतिमात्रं दुःख्यसि। आवुत्तपरिरक्षणं ते सम्प्रति प्रधानं कार्यम्। इदमेकतः। अपरतः उचितं वयः प्राप्तवत्या वत्साया नलिन्याः परिणयनम्।

सु०—आं तात, वत्सापरिणयभरो महान् शिरसि वर्तते। अस्याः पिता एवं जीवच्छवः संवृत्तः। अहं स्त्री किं कुर्याम्। न खलु गृहाद् बहिर्गमने मनागपि मे परिचयः। किं वत्सोऽस्ति, य इतस्ततो गत्वा वरान्वेषणं करिष्यति। हा शिलाचित्त हतविधे, कथं सर्वमनोहरं मे वत्सम् अनिर्वृत्त एव जन्मफले झटित्याच्छिन्नवानसि? हा! किं करिष्यामि? का मे गतिः? समुद्रमध्ये मज्जन्त्यां किल नावि वर्ते।

श्री०—भगिनि, ननु वदामि धैर्यमवलम्बस्वेति। सहजातानि मनुष्याणां दुःखानि। विवेकवद्भिस्तानि सोढव्यानि। सायन्तने शकटे आगमिष्यति। स त्वरया आनेतव्य इति मोटार्यानं प्रैषयम्। स मोटार्शकटः मार्गपार्श्ववर्तिनं कञ्चन वृक्षमभिहत्य शीर्णः। अथ मद्रे यस्मिन् गृहे भाटकं दत्वा वत्स उवास, तस्य स्वामी वार्तां प्रेषयामास— इहागन्तुं प्रतिष्ठमानो वत्सः स्रवन्त्या विद्युन्नाड्या संसृज्य सद्य उत्क्रान्तजीवितोऽभवदिति। को वेद एवं घोरा विपदापतिष्यतीति। ईश्वरसङ्कल्पो हि तथाविध आसीत्। कर्तव्यं सर्वमहं करिष्यामि। तत्प्रति अल्पामपि चिन्तां मा कुरु। अस्मात् क्षणात् प्रभृति तदेकपरोऽहं वरान्वेषणं करिष्ये। अचिरादेव कञ्चन निर्धारयामि। ज्योतिर्विदो वदन्ति—नलिन्या विवाहे वृत्ते आवुत्तः स्वास्थ्यं प्रतिलप्स्यत

इति । तदद्य तस्या विवाहार्थे सर्व उद्यमः कार्यः । यदि त्वया चिन्तितपूर्वः वरः कश्चिदस्ति तं मे ब्रूहि । प्रथमं तमेव गत्वा पश्यामि ।

सु०—आं तात; कन्यादानसुकृतेन पितुरनिष्टशेषः सर्वो विलयं यास्यति । न परमनुभववन्तो वृद्धाः, मम मनोऽप्येवं कथयति । स्वप्नश्च कश्चिद-तीतायां रात्रौ मया दृष्टः । अनुरूपेण अत्युज्ज्वलेन वरेण पाणौ गृहीता वत्सा विवाहमण्टपे देदीप्यते । प्रणमन्तं जामातरं प्रति आशिषं प्रयुञ्जानः, सम्बन्धिवर्गमुपचरन्, कर्मकरान् तस्मिन् तस्मिन् कर्मणि नियुञ्जानश्च त्वदावुत्तः सम्भ्रमी प्रचरति । दम्पत्योरानुरूप्याति-शयविस्मितानां सुश्रावा वाचः श्रृण्वत्यहं हर्षनिर्भरा वर्ते ।

श्री०—सुशोभनमिदं निमित्तम् । अचिराद् वत्सा नलिनी अनुरूपेण भर्त्रा सङ्गता भविष्यति । वीतचिन्ता भव । समीचीने वरे लब्धे वाचिकं प्रेषयिष्यामि । तावत् तव विदितो यदि कश्चिद् भवति, मह्यं लेखं विसृज । अहमद्य प्रस्थास्ये । केनापि हेतुना आत्मानमायासभाजनं मा कार्षीः । आवुत्तपरिचरणे दत्तचित्ता एधि ।

६

सुमतिः—वत्से, चिरादद्य मे मनसि इदम्प्रथमं हर्षाङ्कुरो जायते । देव्या आलयं प्रविशन्त्योरेव आवयोः आरात्रिकघण्टा घणघणायते स्म । यावत्तृप्ति देव्या दर्शनं सम्पन्नम् । चिरन्तनक्रमविपरीतमधुना अर्चक-स्वामी सुप्रसन्नः चन्दनकुसुमकुङ्कुमादिरूपं देवीप्रसादं सादरमदित । मन्येऽनुग्रहोन्मुखी जगज्जननी सरोजनिलया । अचिरादेव निर्वृत्तकल्याणां त्वां द्रष्टुं मे भाग्यं परिणतं भवतु ।

नलिनी—मातः, अग्रे पश्यसि ?

**सु०**—(दृष्ट्वा विस्मिता निर्वर्ण्य) अहो सौन्दर्यसारसमुदायो युवा सुहृद्भिः परितः स्थितैः सम्भाषमाणः नक्षत्राणां मध्ये चन्द्रमा इव भ्राजते। नूनमयं महाकुलप्रसूतः। यदि भिन्नगोत्रः अनुगुणजातकश्च भवेत् लोकमाता तेन पतिवत्नीं त्वां करोतु। अद्य मातुलस्ते यदि सन्निहितो भवेत् . . . .

(प्रविश्य)

**श्रीकरः**—स्वसः, दिष्ट्या त्वां मन्दशोकां देवालयगमनशीलां पश्यामि। पञ्चषा वराः सन्ति। त्वया सम्मन्त्र्य तेष्वेकं निर्धारयितुमागतोऽस्मि। देवालयस्याग्रत एव त्वं सवत्सा दृष्टा। नूनमविलम्बेन शोभनं निश्चितं भविष्यति।

**सु०**—भ्रातः, स्मृतमात्र एवोपस्थितोऽसि। अनुकूले दैवे किं न सम्पद्येत। त्वया दृष्टैर्वरैः सह इममपि चिन्तयेम। पश्य पुरतस्तिष्ठति।

**श्री०**—(दृष्ट्वा सविस्मयम्) अहो लोकोत्तरं रूपम्। अन्यत् सर्वं अनेन रूपेणैव व्याख्यायते। न हि प्रज्ञया गुणैः श्रिया वा हीनस्य ईदृशं रूपं सम्भाव्यते। दुर्निरीक्षं तेजः। अस्य पादधूलितुलामपि इतरे वरा नार्हन्ति। अहं स्थित्वा तं तत्सम्बन्धि च सर्वं विचार्य विदित्वाऽऽगच्छामि। युवां गृहं गच्छतम्। सोऽपि मन्ये वत्सायां जातानुरागः। तदवलोकनानुवृत्तितृष्णयैव सुहृत्सम्भाषणव्याजेन इह तिष्ठति। गृहं गत्वा अचिरादागमिष्यन्तं मां प्रतिपालयतम्। (सुमतिः नलिन्या सह गच्छति)।

(कतिपयनाड्यपगमे गृहं प्रविश्य)

**श्रीकरः**—भगिनि, जानासि कः स लोकसुन्दरो युवेति। सोपानशिलाव्यवहारिणः साक्षात् कापिलमिश्रस्य औरसः पुत्रः। स हि विद्याधिगमहेतोः मातुलगृह एव चिरात् स्थितः अध्ययने समाप्ते पितरौ द्रष्टुमत्रायातः।

सु० — (सविषादम्) तर्हि अस्मन्मनोरथे मृत्तिका पतिता ।

श्री०—नैव । तस्य जननी अस्मिन् सम्बन्धे नितान्तमुत्सुका । तत्रभवान् कापिलमिश्रस्तु आवुत्तचर्ययाऽत्यन्तमुद्विग्नः न सम्मन्यते स्म । ततस्तया मया च चिरमनुनीतः 'अस्तु' इत्यब्रवीत् । भगिनि, वत्साया नलिन्याः आयुष्मतः प्रजागरस्य च लोकोत्तरं सौन्दर्यं परस्परानुरूप्यं च यथा यथा पश्यामि तथा तथा मे उत्कटो भवत्यभिलाषः क्षणमात्रविलम्बमपि विना सपदि विवाहं निर्वर्तयितुम् । कच्चित् सम्भाराः त्वरया सम्भर्तुं शक्यन्ते ?

सु०—सम्भारसम्भरणे नातीव क्लेशो भविष्यति । प्रकृतिमापन्नः त्वदावुत्तः किं प्रतिपत्स्यत इति तु मे मन आकुलं भवति । स हि प्रकृत्या उद्धतः । वरस्य पितरि कृतवैरः । कथमयं सम्बन्धः संविहित इति अस्मभ्यं सङ्क्रुध्य, न कदाऽपि कन्यां तस्य गृहं प्रेषयिष्यामीति ग्रहिलो भवेच्चेत् बहुसङ्कटा हि स्थितिर्भवेत् ।

श्री०—भगिनि, तत्प्रति त्वं कातरा मा भूः । परमसाध्व्या वत्साया मनः तस्मिन्ननुरज्यति । महालक्ष्मीप्रसादलब्धः स वरः । तव मम च चेतः अस्यां प्रवृत्तौ अत्यन्तं प्रसन्नं भवति । एतत्प्रस्तावे पदेपदे शुभानि निमित्तानि जायन्ते । एभिः कारणैः सर्वेश्वरः स्वयम् इमं सम्बन्धं घटयतीति निश्चितं ज्ञायते । अत आयतिरपि शुभा भविष्यतीति प्रत्येतव्यम् । निश्शङ्का सन्तुष्टा उत्साहिनी कर्तव्यं कुरु ।

सु०—आम् आम् । एवमेतत् । भ्रातः सम्यक् त्वया प्रतिबोधिताऽहम् । गृहे कर्तव्यं सर्वमहमवधास्यामि । त्वं पुरोधसमुपगम्य शुभमुहूर्तं निश्चिनु । आमन्त्रणपत्रिकां मुद्रयित्वा सर्वेभ्यः प्रेषय । आपणं गत्वा वस्त्राणि राजतान्यन्यानि च पात्राणि, मङ्गलार्थानि वस्त्वन्तराणि च क्रीणीहि । स्वर्णकारमाहूय । अपेक्षितानि भूषणानि कारयिष्यामि । वाद्यकारान्

आनाय्य सत्यङ्कारं देहि। कायमानकारेभ्य आदेशं देहि सालङ्कार-विवाहमण्टपनिर्माणाय। आवश्यकमन्यच्च सर्वं तत्तदुचितान् मनुष्यान् नियुज्य कारय। समर्थो हि त्वम्। किं मया बहुनोक्तेन।

(७)

**श्रीकरः**—आवुत्त, अद्य वत्सायाः सौभाग्यवत्या नलिन्याः विवाहः। कच्चित् पश्यति भवान् अलङ्कृतं विवाहमण्टपं, स्फुरन्तं वरं, जाज्वल्यमानां वत्सां च। एतु भवान् वराय कन्यां दातुम्। (करे गृहीत्वाऽऽनीय धान्यबीजमूते उपवेशयति)।

**पुरोहितः**—स्वामिन्, मन्त्रं ब्रूतां भवान्, पादशो वदामि—

कन्यां कनकसम्पन्नां सर्वाभरणभूषिताम्।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया॥

**ग्रा०**—(मन्त्रमनुपठति)।

**पु०**—कन्याया दक्षिणहस्तं गृहीत्वा वरस्य दक्षिणहस्ते अर्पयतु भवान्।

**ग्रा०**—(तथा करोति)।

**पु०**—(वरं प्रति) आयुष्मन् इदं माङ्गल्यसूत्रं गृहाण। हस्ते कृत्वा इमं मन्त्रमुच्चारय—

माङ्गल्यतन्तुनानेन मम जीवनहेतुना।
कण्ठे बध्नामि सुभगे त्वं जीव शरदः शतम्॥

अथ सूत्रं कन्यायाः कण्ठे बधान।

**वरः**—(तारे वाद्यघोषे तथा करोति। कन्याया उपरि पुष्पाक्षता वृद्धैः प्रकीर्णाः पतन्ति)।

श्री०—भगिनि, अद्राक्षीः अद्यावधि एकामपि वाचमनुक्तवान् आवुत्तः अद्य पुरोहितोदितं मन्त्रमस्खलितमन्ववादीत्। मन्ये वागिव मनोऽप्यनेन प्रतिलब्धं भवति।

सु०—आं तात, अद्राक्षम्। भगवतः कृपा। पश्य त्वां किञ्चिद् विवक्षुरिव आवुत्तः।

ग्रा०—श्रीकर, कथं मे सम्बन्धिनं न दर्शयसि? स हि मया अभ्यर्हणीयः।

सु०—(सहर्षं) कच्चिदार्यपुत्रो जानाति कः सम्बन्धीति?

ग्रा०—ओ। सम्यग्जानामि; तत्र भवान् कापिलमिश्रः।

सु०—(सप्रहर्षं) भ्रातः, झटित्यावुत्तं तत्सकाशं नय।

श्री०—इत एत्वावुत्तः। सङ्कोची सम्बन्धी कापिलमिश्रः। अप्रकटं काप्युपविष्टः। (गत्वा) अयं सः।

ग्रा०—(कट्यामुत्तरीयं बध्वा दण्डप्रणामं पुनः पुनः करोति)।

का०—(स्वगतम्) अहो बत परमधूर्तस्य भूतपूर्वस्याद्य विस्मयावहा सत्त्वोत्तरता। निर्मलस्यात्मस्वरूपस्य गुणकृता अवस्थाभेदा इति शास्त्रैरुपदिश्यमानं रहस्यमनेन सत्याप्यते। (प्रकाशम्) अयि भोः स्वामिन्, क्वाहमवस्तु! क्व भवान् ग्रामप्राधान्यभाक् महापुरुषः। कुत इयं विपरीता वृत्तिराश्रीयते?

ग्रा०—नैवं भाषितव्यं भगवन्। दयतां भवान्। सर्वे मदीया अपराधाः क्षन्तव्याः। कोऽपि ग्रहः मामाविश्य बहुधा नर्तयामास। पुत्रबलिं गृहीत्वा तृप्तेन तेनात्यन्तं विमुक्तोऽस्मि। अद्य मे स्वपरस्वरूपयाथात्म्यं स्पष्टं प्रकाशते। भवदीया सोपानशिला एका या मयाऽपहृता, तस्याः प्रति इमां स्वर्णप्रतिमां स्नुषात्वेन भवते प्रतिपाद्य तदागः परिमार्ज्मि।

या सा सोपानशिला न परं तां, सा यत्र अवबद्धा तमिमं नवनिर्मितं प्रासादं तत्रत्यं सर्वं स्वं च भवते भगवते सादरं सभक्ति सश्रद्धं सप्रमोदं च समर्पयामि। अस्मात् क्षणात् प्रभृति अत्रभवान् एतत्सदनस्वामी अहमतिथिः। भवताऽनुमतोऽत्र वत्स्यामि। अन्यथा अन्यत्र यत्र क्वापि। इतः परं ग्रामाधिकारोऽपि आयुष्मता प्रजागरेणैव वोढव्यः।

यथा भगवद्भजनमात्रसङ्गि मे मनो भवेत् तथा भवाननुगृह्णातु। तथा भगवान् प्रसीदतु।

**का०**—अलमलं महात्मन्। काष्ठां गतेनानेन भवदीयसत्त्वगुणोल्लासेन मधुरोदारगम्भीरपरमाद्भुतां वाग्धारां प्रवर्तयता समाप्लुतो मे अन्तरात्मा किमपि प्रतिवक्तुं मां न मुञ्चति। कुलद्वयस्य नः कल्याणदायी भवतु स करुणावरुणालयः कमलावासविशालवक्षस्स्थलः कमलेक्षणः।

**पु०**—(वधूवरावानीय ग्रामणीकापिलमिश्रयोर्हस्ते अक्षतान् दत्वा) आयुष्मन् प्रजागर, सौभाग्यवति नलिनि, श्वशुरं पितरं च प्रणमतम्। (तौ प्रणमतः)।

**ग्रा०**—(अश्रु मुञ्चन् तूष्णीं अक्षतान् क्षिपति)।

**का०**—(अक्षतान् क्षिपन्) वत्सौ—

शास्त्रे विश्वासवन्तौ तदुदितसरणौ नित्यनिष्ठां भजन्तौ
सर्वश्लाघार्हवृत्तौ सकलबहुमतौ सर्वसम्पत्समृद्धौ।
अन्योन्यप्रेमभूम्ना सुघटितहृदयौ साधुसन्तानहृष्टौ
भूयास्तं भक्तिमन्तौ भगवति भुवनक्षेमसिद्ध्येकलक्ष्यौ॥

**अन्ये सर्वे**—तथाऽस्तु।

## वसन्तविजयः[1]

कवि ‘कान्त’ मणिशङ्कररत्नजिभट्[2]

‘मा मा नाथ न जानीहि प्रभातेयं निशीथिनी ।
तमो गाढमहो व्याप्तं भविता समयो ननु’ ॥ १ ॥

सहस्राण्यब्दानामतियुरथाद्यास्य वचसो
    न वक्ता श्रोता वा भवति न च तद्विस्मृतिमितम् ।
न कः पाण्डुं माद्रीमुभयमभिजानीत सहसा
    कृते नामोच्चारे निरवधिरपायाच्च समयः ॥ २ ॥

शतशृङ्गगिरिप्रान्ते राज्ञीद्वययुतो नृपः ।
पर्णशाले विनिर्माय चक्रे कालस्य यापनम् ॥ ३ ॥

अल्पापि नो नृपतिनाधिगताथ निद्रा
    दुःस्वप्नदर्शनभरेण निशा व्यतीता ।
‘गत्वा बहिः क्षणमहं भ्रमणं करिष्य’
    इत्थं विचार्य नृपतिः शयनादुदस्थात् ॥ ४ ॥

शनैरुत्थाय शयनान्नृपो यातुं प्रचक्रमे ।
‘मा मा नाथे’ति शब्दश्च गतोऽस्य श्रुतिगोचरम् ॥ ५ ॥

‘प्रिये माद्रि व्यग्रा किमसि न खलु स्नानविषये
    ह्यहं गन्तोन्निद्रे क्वचिदटितुमीहास्ति मनसि ।
तमश्चैतन्नष्टं न महदवशिष्टा च रजनी
    यथापूर्वं पश्चाद्विधिमिह विधास्यामि सकलम्’ ॥ ६ ॥

---

[1] इदं गूर्जरभाषाखण्डकाव्यं वने माद्रीसंगमाज्जातं पाण्डोर्मरणं विषयीकरोति । अस्य समश्लोकसंस्कृतानुवादकः **गौरीप्रसाद चु. झाला** ।

[2] 1887-1923.

प्रतिषिध्य नृपं देवी गता निद्रावशं पुनः ।
प्रबोधः क्षणमात्मानं संनिधाप्य तिरोदधे ॥ ७ ॥

'दिष्ट्या सुखं स्वपिति मे दयितेयमत्र
भूतार्थगोपनमहो न हि शक्यमस्याः' ।
प्रातिष्ठताथ नृपतिर्हृदये प्रतीतो
गाढे तमस्यपि पथि स्खलनं न याति ॥ ८ ॥

झिल्लिकाजतुकादीनां रवाः सर्वत आपतन् ।
शान्तयोरुभयोर्देशकालयोः सदृशा इव ॥ ९ ॥

तदाटव्यां शीतो वहति वितरञ्छान्तिमनिलो
विराजन्ते केचित्क्वचिदुडुगणा अत्र नभसि ।
प्रबोधं तावन्नो पशुरपि गतोऽद्रेः परिसरे
तथाप्येषोऽरण्ये चरति नृपतिः सान्द्रतमसि ॥ १० ॥

प्राप्तश्चाभिमतं राजा सुन्दरं समया सरः ।
'माद्रीविलास' इति यत् तेन दत्ताभिधं पुरा ॥ ११ ॥

छायान्वितेऽम्बुनि विलोकयतोऽस्य शान्तिं
भूपस्य मानसमभूदतिरूढतर्कम् ।
आसाद्य कामपि शिलामधिरुह्य चैनां
व्यग्रो न्यमज्जदिव तर्कतरङ्गराशौ ॥ १२ ॥

अनिद्राजनितक्लान्त्या धैर्यमासीदपच्युतम् ।
स्मरणैः पूर्ववृत्तानामनल्पः समयो गतः ॥ १३ ॥

गतैर्व्यक्तिं चिह्नैर्दिनकृदुदयोऽसूच्यत तदा
प्रबुद्धायाः सृष्टेर्विषमरवसंवाद उदितः ।

द्रुतं यावद्दिग्भ्योऽपसरति तमः सर्वत इदं
दिशि प्राच्यां रागोऽभिनव इव तावत्समुदभूत् ॥ १४ ॥

विरावश्चोद्गतस्तावदरुणस्योदये सति ।
प्राच्याश्च मुखरागेण सह क्षोभोऽप्यवर्धत ॥ १५ ॥

दृष्टिं प्रयान्ति तरवस्तिमिरावृता ये
स्वच्छानि निर्झरजलानि वहन्त्यधस्तात् ।
अस्मात्समुत्पतति चक्षुषि भूमिभागा-
दभ्रं लिहन्ति शिखराणि समुन्नतानि ॥ १६ ॥

'अहो बत कियान्कालो मया व्यर्थोऽतिवाहितः' ।
उक्त्वैवं सहसा भूप उदतिष्ठन्निजासनात् ॥ १७ ॥

अपश्यच्चावस्थान्तरमयमरण्यश्रियमितां
च्युतं धैर्यं चास्य स्मृतिपदमुपेता प्रियसखी ।
'अहो रम्यां पश्याम्यभिनववसन्तश्रियमहं
विकारः कोऽयं मे बत हृदयमत्राभिभवति' ॥ १८ ॥

सृष्टेः सौन्दर्यमालोक्य रोमोद्गतिरजायत ।
अनश्यच्चिरकालीनं 'योगान्धत्वं' च तस्य तत् ॥ १९ ॥

जले धावं धावं विदधति विहारं जलचरा
निरीक्ष्यैतानद्रिं प्रति पुनरसौ दृष्टिमकरोत् ।
मता नैषा वृत्तिः पुनरयमरुन्द्ध स्वयमिमाम्
'अयं स्नातुं कालो' नृपतिरिति तत्राप्सु पतितः ॥ २० ॥

स्नानस्वस्थमनाश्चासौ नित्यकर्म समाचरत् ।
गते रागे पुनश्चित्तं धर्मैकप्रवणं स्थितम् ॥ २१ ॥

निर्वर्त्य चाह्निकमसौ त्यजति स्थलं तद्
वृत्तिं नियम्य परनिग्रहमातनोति ।
'किं वा फलं त्यजत आश्रमधर्मजातं
किं सुन्दरं किमु जगत् तप एव मित्रम्' ॥ २२ ॥

आश्रमं पुनरागम्य यथापूर्वमसेवत ।
निद्रामीषदिवाकाङ्क्षन्द्वनं विस्मर्तुमुत्सुकः ॥ २३ ॥

क्षणं कृत्वा निद्रां नरपतिरथाबुध्यत यदा
तदा चेतो जातं स्तिमितविशदं सात्त्विकमपि ।
कियद्दूरं गत्वा परमनिलमासेवत हिमं
यदृच्छादृष्टायां वनभुवि दृशं चाक्षिपदसौ ॥ २४ ॥

अक्षुब्धहृदयो भूप ऋतोर्वैभवमैक्षत ।
द्रष्टुं राज्ञ्यावथ प्रायादन्यां पर्णकुटीं प्रति ॥ २५ ॥

एकाकिनी तदुटजे ननु मद्रपुत्री
कुन्ती गता बहिरसंनिहिता तदासीत् ।
नासत्यजद्वयमसूत पतिव्रता या
हा तापसी सह नृपेण बभूव सैव ॥ २६ ॥

सूक्ष्मेण वल्कलेनास्याश्छन्नमङ्गं हि वाससा ।
न ह्यस्या अङ्गलावण्यं वनवासेन दूषितम् ॥ २७ ॥

'पृथा किं नास्त्यत्र त्वमिह दयिते स्थास्यसि कथं
त्वमेकाकिन्यत्र स्वजनविरहे का धृतिरपि ।
विनोदं कर्तुं तत्क्षणमिह नु देव्यर्हसि शुभे
प्रिये गच्छावेषन्निकटविपिने कर्तुमटनम्' ॥ २८ ॥

एवं गते विसस्मार व्रतोपासनमात्मनः ।
तापसत्वं परित्यज्य भर्ता—स्वामी—बभूव सः ॥ २९ ॥

शान्तं मनो नरपतेर्न गतं विकारं
तेनैव नास्मरदसौ दिनपूर्ववृत्तम् ।
माद्री न चोदसहत प्रतिषेद्धुमेनं
गम्या भवन्ति न कदापि विधेर्विलासाः ॥ ३० ॥

पूर्वा गृहस्थभावस्य वासनास्योत्थिता पुनः ।
तदात्वमस्मृतिं नीत्वा दम्पती चरतो वने ॥ ३१ ॥

वहति निर्झरवारि हरच्छ्रमं
नयनतृप्तिरुदेति तदीक्षणात् ।
मधुरमत्र रुवन्ति विहङ्गमा
रतिपरं च मनो रसमन्वभूत् ॥ ३२ ॥

वसन्तः साम्राज्यं प्रबलमभितोऽस्थापयदसौ
नवं वासो वृक्षाः परिदधति सर्वत्र रुचिरम् ।
विभावैस्तैः सर्वं रतिवशमयासीज्जगदिदं
भृशं दीप्तिं नीता रसिकजनवृत्तिश्च चपला ॥ ३३ ॥

वेगाध्मातेऽपि रुधिरे नावधानमियाय सः ।
प्रेयस्या सह बभ्राम नर्मगोष्ठीरतो वने ॥ ३४ ॥

तुङ्गैरराजत वनं सहकारवृक्षै-
र्नम्रैस्तथागुरुकचन्दनभूरुहैस्तत् ।
वृक्षा लताश्च दधति श्रियमप्यपूर्वां
वर्धेत किं न सुहृदा बलिनाप्यनङ्गः ॥ ३५ ॥

विहरन्तावुभौ प्राप्तौ मालतीमण्डपं क्वचित् ।
सत्या सार्धं नृपस्तस्मिन्प्रवेशं विदधे ततः ॥ ३६ ॥

मन्दं मन्दं लहर्या वहति सुमरजो दोलयन्मातरिश्वा
वल्लीनां याति दिक्षु प्रसवपरिमलस्तृप्तिरक्ष्णोरुदेति ।
जानीते कः कुतोऽयं प्रसरति नु रवोऽपार्थिवः कोकिलाया
वैवश्यं याति चार्द्रं रसवशहृदयं संयमश्चैति वृत्तेः ॥ ३७ ॥

'मुग्धेन पञ्चमाढ्यं हि श्रुतं कोकिलकूजनम् ।
प्रिये पञ्चमवृष्ट्या मामभिषेक्तुं त्वमर्हसि' ॥ ३८ ॥

गतेषत्सा शङ्कां किमपि न च वक्तुं प्रभवति
प्रनष्टा शङ्कासौ नृपतिमुखमालोक्य च तदा ।
न वा युक्तं चायं नरपतिनिदेशोऽन्यथयितुं
विचार्यैवं गातुं कथमपि च माद्री प्रववृते ॥ ३९ ॥

प्रक्रान्तेऽलौकिके रागे जातं शान्तं हि तद्वनम् ।
अयस्कान्तेन सर्वेषां कृष्टानीव मनांसि च ॥ ४० ॥

गीतेरयं मधुरिमोच्छलति प्रदिक्षु
सद्येत हा किमु रवो हृदयंगमोऽयम् ।
सर्वो जनो द्रुतपदं मिलितः प्रियाभी
रागैकबद्धहृदयः परिरम्भमाधात् ॥ ४१ ॥

रागमत्तं जगत्सर्वं गाहते रससागरम् ।
पाण्डोरेकस्य हृदयं मथ्यते व्यथया बत ॥ ४२ ॥

गीतेऽस्मिन्प्रसृते सुधारसझरिण्यानन्द ऐत्सान्द्रतां
क्रूराश्लेषमुपानयामि दयितामित्येषणाजायत ।

व्यावृत्तः परितर्पणादथ पुनः सस्मार स स्वां स्थितिं
यत्नात् संयमने कृतेऽपि वपुषि व्यक्तिं विकारोऽभजत् ॥ ४३ ॥

विलोक्यैतां स्थितिं राज्ञो राज्ञी गानादुपारमत् ।
एतेन प्रत्युतैतस्य राज्ञः शान्तिरपास्रवत् ॥ ४४ ॥

'प्रिये माद्रि क्रूरं ! नहि नहि समर्थोऽस्मि सहने
फले नापेक्षा मे तपस इह ; नाशं व्रजतु तत् ।
प्रिये रम्यामेतां स्वरसरितमास्रावय पुनः
किमेतां रक्षित्वा नियमपरतामुत्सृज लघु' ॥ ४५ ॥

वृत्तिं संयन्तुमेतस्य सामर्थ्यं सकलं गतम् ।
अपूर्वस्वरमाधुर्यान्मदं स परमं गतः ॥ ४६ ॥

'सखि प्रेयस्येतत् किमपि कमनीयत्वमयि ते
प्रिये रम्भावत् त्वं रमयसि नु मां नन्दन इव' ।
निरूप्यासिञ्चत्तां प्रणयरसवृष्ट्या नयनयो-
र्गता शङ्कामीषन्मनसि बत भीरुः पतिरता ॥ ४७ ॥

अवसानं गते गीतेऽभिससार नृपो मिषात् ।
'मा मा नाथे'ति जल्पन्तीं भुजयोस्तां नृपोऽग्रहीत् ॥ ४८ ॥

'मा नाथ मा दयित मे'ति वचो ब्रुवाणा
तस्मादपासरदसौ नृपबाहुपाशात् ।
दृष्टिं विधाय च नृपे किल कातराक्षी
दीना व्यजिज्ञपदसौ दयितं तदानीम् ॥ ४९ ॥

'त्रस्तास्मि ननु भीतास्मि पश्यन्ती भवदिङ्गितम् ।
उग्रोऽसौ मुनिना दत्तः शापो विस्मर्यते कथम्' ॥ ५० ॥

नितान्तं भीता सा वदति दयितं वेपथुमती
विकारो भूपस्य श्रयति न तु काञ्चिच्छिथिलताम् ।
'प्रिये नार्हस्येवं हृदयमदयं मे व्यथयितुं
न सह्येयं पीडा क्व नु शरणमेष्यामि दयिते ॥ ५१ ॥

प्रिये प्रिये प्रिये प्राणास्त्वदधीनाः प्रसीद मे ।
द्रुतं संश्लेषयाङ्गानि नैतत्सोढुं हि पारये ॥ ५२ ॥

जाने न नेति मम किन्तु दशास्त्यपूर्वा
नेशोऽस्म्यहं मम जलोद्धृतमीनतुल्यः ।
देवि त्यज त्वमिह सर्वविकल्पजातं
स्पर्शामृतेन दयिते शमयार्तिमेताम्' ॥ ५३ ॥

एवं गते विकल्पस्य नावकाशस्तदाभवत् ।
नरेन्द्रभुजपाशान्तर्माद्री चात्मानमक्षिपत् ॥ ५४ ॥

* * *

परं नातः शक्तं हृदयमिदमुत्प्रेक्षितुमपि
श्रुतिं याताः शब्दाः सदयमुदिताः केऽपि चरमाः ।
स्खलद्रूपं वाक्यान्युपशममयुस्तत्र शनकै-
रथैतस्माद्यातोऽमितनियुतकल्पोऽद्य समयः ॥ ५५ ॥

# विवरणम्[1]

क्. चन्द्रशेखरः

'अहो शिल्पम्, अहो शिल्पम्!' इयमेव वार्ता तस्मिन् पत्तने समन्तात् अश्रूयत। नैकोऽप्यासीत् तत्र, यस्तस्य शिल्पिनः गगनाचार्यस्य शिल्पकौशलं नाश्लाघत। बेलूर्नगरे निर्मितः चेन्नकेशवाभिधस्य पुरुषोत्तमस्यालयोऽसौ होसलवंशीयस्य राज्ञो विष्णुवर्धनस्य विष्णुभक्तिविलासस्य विशिष्टं किमपि चिह्नं समजायत।

वाहिनीपतिः विजयतुङ्गः परं, गगनाचार्ये सदा यं कमपि दोषं ब्रुवाण एवास्त। शिल्पिनो दुहितुः किङ्किणिमालायाः शरीरसौन्दर्ये तदीयं मानसं मग्नमेव आसीत्। स तु स्वयमपि तत् नाज्ञासीदिव। द्वित्रेषु सन्दर्भेषु किङ्किणिमालायाः नाट्ये प्रचलति विजयतुङ्गस्य मनसि अयमेव सन्देहः असकृत् उदयन् आसीत्, 'कुतोऽयं गगनाचार्यः स्वां दुहितरमेवं प्राकृतजनसमक्षं नाट्यं विधातुं प्रवर्तयति? यतः सर्वलोचनलोभनीयं तस्या वपुः। निखिलमानसमोहनं च सौन्दर्यम्' इति। किं च तारुण्यशोभाविसारिणि तस्या वपुषि नाट्यानुगुणं चलति, प्राकृतो जनः को वा स्वीयं चेतः वशयन् तटस्थो नाट्यं रसिष्यति? आत्मनोऽन्यस्य सर्वस्यापि स्वान्तं समाकर्षेदेव तस्याः लावण्यप्रसरः, विशेषतः नाट्यकाले इत्यपि विजयतुङ्गः कृतनिश्चयोऽभूत्।

अथैकस्मिन् दिने आलये तस्मिन् कुम्भाभिषेकः प्रावर्तत। निर्वृत्ते तस्मिन् प्रचलिष्यतः किङ्किणिमालाया नाट्यस्य दर्शने कौतूहलेन सङ्घशो मिलितानां जनानाम् उत्सारणा प्रावर्तत। आलयगतानां शिल्पविशेषाणां निरूपणाय देवो विष्णुवर्धनः सान्तःपुरः समागमिष्यतीत्ययं वृत्तान्तः पूर्वमेव तत्र प्रसृतो बभूव। भूपेन निर्मापितोऽयं देवालयः तदीयकीर्तिप्रतिष्ठापकेषु विशिष्टकार्येषु अन्यतममजनिष्ट। किञ्च शिल्पिनः तस्य गगनाचार्यस्य कलाकौशलं भगवतः सन्निधावेव बिरुदैः पारितोषिकैश्च सभाजयितुं कृतसङ्कल्पोऽवर्तत स महीपतिः।

---

[1] 'विलक्कम्' इति द्राविड्यां लिखितस्यानुवादः। अनु॰ वा. ह. सुब्रह्मण्यशास्त्री।

गगनाचार्योऽपि अविरहित एव किङ्किणिमालया राज्ञः प्रत्युद्गमनाय आलयस्य अग्रतः सज्जः समास्त ।

'ईदृशेऽस्मिन् महति जनसमवायेऽपि तवेयं तनूजा आनेया भवति?' इति शिल्पिनमन्वयुङ्क्त, सेनापतिः विजयतुङ्गः। स किल राज्ञः तत्र समागमम् अवगत्य तदनुगुणं संविधानं विधातुं पूर्वमेव तत्र कृतावस्थानः आसीत् ।

स किल शिल्पी कुतोऽपि चिन्तामग्न इव क्षणं तूष्णीम् आस्त । ततः शिरः समुन्नमय्य आत्मनः प्रष्टारमजानन् इव किञ्चिदिव न्यरूपयत् । 'सेनापते, किं भवानेव? कुतोऽयमत्यादरो भवतः मयि मत्सुतायां वा? इति तम् अप्राक्षीत् ।

'न खल्वयम् आदरः; वनितासु विधेयः बहुमानः एव मया आवेद्यते । नाहं भवानिव स्वार्थसम्पादनव्यग्रः' इत्युच्चैः अवदत् विजयतुङ्गः । समन्ततः स्थितान् पर्याकलयन्निव सेनाधिपः सर्वतः प्राहिणोत् आत्मीयं चक्षुः। ततो वक्तव्यकृतनिश्चयः उपासर्पत् गगनाचार्यम् । उपह्वरे कथितवांश्च 'शिल्पिन्, किं ते अपेक्षितम्? ब्रूहि, तदहं विदध्याम् । किन्तु तवेयमात्मजा कथञ्चित् अन्यत्र नेया । कुतो वेमां चत्वरेऽस्मिन् नाट्योचितनेपथ्यां स्थापितवानसि? । सर्वथा न न्याय्यः तवायम् आचारः' इत्येवं वदत्येव तस्मिन् तदीयवचसि संजातं गद्गदं शिल्पीन्द्रोऽपि नैव नालक्षयत् ।

ततः साञ्जलिः तम् अवन्दत शिल्पीन्द्रः। अवादीच्च, 'सेनापते' मैवम्; मया सार्धमत्रास्या अवस्थितिः नैव दोषाय । महीपतिनात्र करिष्यमाणे मम सभाजने इयमपि अर्हत्येव एकं भागम् । अत्रत्यं शिल्पविलासम् अखिलं सविमर्शं विलोक्य अस्या नाट्यमपि द्रष्टव्यमेव महीपतिना । किञ्च, नेदं चत्वरम्; किन्तु भगवतः नारायणस्य महार्घं सन्निधानमिति न खलु भवान्नावगच्छति!

* * * * * *

'पराक्, पराक्, विष्णुवर्धनभूपतिः समायाति । अपसरत, अपसरत, मा पन्थानमावृत्य तिष्ठत' इति परिजनानामाघोषः अश्रूयत । समरेषु

नित्यविजयी विजयतुङ्गः अभूतपूर्वं पराभवमद्य प्रापत्। स्वयमपि पृथ्वीपतेः अवकाशं ददानः मार्गादपसृत्य एकतोऽतिष्ठत्।

विष्णुवर्धनस्य वदने अभूतपूर्वा दिव्या कापि शोभा समुल्लसति स्म। प्रारब्धस्यास्य आलयनिर्माणस्य तदानीं दश वत्सराः आसन्। अद्य सः निर्माण-व्यवसायः पूर्णताम् इयाय इति तस्य राज्ञः सन्तोष एव तादृशशोभातिशयस्य कारणम्। किंचायं भगवतः चेन्नकेशवस्य आलयः किमपि अतिशयितं शिल्पसं-विधानं संवृत्तमित्यपि तन्मानसं हर्षपरवशं समवर्तत। शिल्पकलासु संस्तु-तान्तराः अन्ये च सहृदयाः तस्य महीपतेः सकाशे तत्रत्यं शिल्पप्रकर्षं सबहुमानं पूर्वमेवावेदितवन्तोऽभवन्।

मूलस्थानम् आस्थितस्य भगवतो नारायणस्य प्रथमम् आरार्तिकं विधेयम्। तदनन्तरमेव सर्वैः शिल्पशोभानिरूपणे प्रवर्तितव्यम् इति पूर्वमेव निर्णीत आसीत्कार्यक्रमः। तदनुसारेण 'सज्जास्सन्ति पूजकाः देवस्य सन्निधौ' इति महीपतये सविनयं परिजनेष्वन्यतमः निवेदितवान्। सद्यो घण्टाः समा-घट्यन्त। धूपिताः धूपाः। दीपिताश्च दीपाः। अन्ते कर्पूरनीराजने क्रियमाणे भगवतो मूर्तस्य सौन्दर्यसंभारमालक्ष्य सर्वे सविस्मयाः संजाताः। 'कदाचित् गृहीतमोहिनीरूपः किलायं भगवान्? तत एवास्याङ्गेषु अङ्गना-जनसाधारणं सौभाग्यम्' इति भक्ताः केचिदचिन्तयन्। चेन्नकेशवः (सुन्दर-केशवः) इति नामापि तस्य देवस्य यथार्थमालक्ष्यत।

प्राकारान्तः भगवन्मूर्तेः सव्येतरे भागे भित्तौ समुल्लिखितानां प्रतिमानाम् इयत्तैव नासीत्। प्रदीपे प्रकाशिते कथानुसारेण रामायणपात्राणि तत्रोत्कीर्णानि अलक्ष्यन्त। एकत्र लग्नां दृष्टिमन्यतः नेतुमपि नास्मरन् प्रेक्षकाः। तत एव तेषामन्यतः अवलोकने कुतूहलमपि नोदभूत्। तस्मात् स राजा विष्णुवर्धनः, अन्ये तदनुयायिनश्च तत्रैव अविचलन्त आसन्। गगनाचार्यः स्वयमेव महाराजं सानुनयम् अन्यतो नयन् बाह्यप्राकारगतप्रतिमानां दर्शने चोदयामास। किङ्किणि-माला तु पितुः पार्श्वतः किञ्चिदिव दूरे तमनुगच्छन्त्यासीत्। आत्मानम् अन्यः

कोऽपि न लक्षयतीत्याश्वस्तहृदया सा किङ्किणिमाला स्वीयम् उत्तरीयं समीकृत्य तदञ्चलं साकर्षं कटितटम् आवृत्य न्यबध्नात्। तेन च तस्या उरसि सुश्लिष्टमुत्तरीयं तस्याः तारुण्योदयं प्रविभक्तावयवम् अदर्शयत्। विजयतुङ्गः परं यदृच्छयेदं निरूपितवान्। तदात्वे सापि तं व्यलोकयदेव। पुनरपि परस्परस्य दृष्टिः असज्जत परस्परम्। किङ्किणिमाला तु सहसैव अनमयदात्मीयं शिरः। तेन च विजयतुङ्गः नैकशस्तां विलोकयितुं प्राप्तावसरोऽभवत्।

शनैस्ताम् उपसृत्य सेनापतिः अस्पन्दिताधरम् अब्रवीत्, 'तरुणि, यदि तावकौ पादौ रुजतः तदेकान्ते उपविश्यताम्' इति। सत्यं, किङ्किणिमाला विजयतुङ्गस्य वाचि विसृत्वरम् अनुरागम् अवागच्छत्। अत एव सम्भ्रमाकुला मध्येमार्गं महीपतेः पुरत एवातिष्ठत्।

'वत्से, किमिदम्? पश्चादायान्तम् अवनिपतिमपि अविज्ञाय मार्गम् अवरुद्ध्य स्थिता?'। इति किञ्चित्प्रकटितकोपं वदति पितरि द्विगुणितसाध्वसा सा क्षणं कर्तव्यं नाजानात्। क्षितीन्द्रस्य कथमपि वर्त्म दित्सन्ती लेशतः पश्चादपासरत्। तदा तु तत्र स्थितस्य विजयतुङ्गस्य पार्श्वेऽसज्जत तस्या अङ्गलतिका। सद्य एव तस्या मुखे लज्जाजुगुप्साभ्यां शबलः कोऽपि भावः प्रत्यभात्। परन्तु स सेनापतिः तस्मात्प्रदेशात् लेशतोऽपि अचलन्नेवातिष्ठत्।

बाह्ये प्राकारे स्तम्भाः विरलान्तरा एवासन्। एकैकस्यापि स्तम्भस्याग्रे शिल्पनिर्वर्तिता कापि प्रतिमा प्रेक्षकाणां मनांस्यावर्जयन्ती व्यराजत। उत्तरोत्तरम् अधिकं संभृतशोभानां प्रतिमानां सौन्दर्यातिरेकं विस्मृतनिमेषेणैव चक्षुषा वीक्षमाणः चचाल पुरतः पृथिवीपतिः। धृतदर्पणा कापि तरुणी निजे ललाटे दक्षिणकराङ्गुल्या तिलकं विदधानेव कलिताभवत् काचित्प्रतिमा तत्र। सा किल जहार प्रेक्षकाणाम् ईक्षणेन साकं मनांस्यपि। अपरा काचित्प्रतिमारमणी आभुग्नं चापं वामेन करेण कलयन्ती, अपरेण च शरमारोपयन्ती सहृदयानां हृदयं हठादाचकर्ष। एवं प्रतिस्तम्भम् उट्टङ्कितानां नाट्यानुगतमधुरभावानां प्रमदाकृतीनां प्रतिमानां दर्शनेन ते सर्वे सत्यं निर्वृतेः परां काष्ठां प्रपेदिरे।

यदि कदापि विष्णुवर्धनः शिल्पेनावेद्यमानं भावं प्रति आत्मानं किमपि पृच्छेत्, तदा तस्य अनुगुणं विवरणं दातुकामः गगनाचार्योऽपि तमन्वसरत्। तदा तदा शिल्पविशेषस्य विलोकनावसरे राज्ञो वदने आविर्भूय तिरोभवन्ति विस्मयचिह्नानि आह्लादविलसितानि च निरूपयन्नेवास्त, स गगनाचार्यः। कस्याश्चित् प्रमदारूपायाः प्रतिमायाश्च भावम् अवगन्तुं स नाशकत्। सा किल तरुणी शिरसि, ग्रीवायाम्, उरसि, करयोः, कटितटे इति सर्वेष्वङ्गेषु भूषणभूषिता अतिष्ठत्। तदन्तिकगतः कोऽपि कपिपोतः उद्धुरकन्धरः तामेव पश्यन् तस्याश्चेलाञ्चलम् आकर्षन्नेवासीत्।

तदवलोकयतो राज्ञोऽधरतटे क्षणमेकं मन्दस्मितं प्रासरत्। क्षणान्तरे च तदेव अज्ञाततत्त्वस्य तस्य जिज्ञासावेदको हासः पर्यणमत्। शिल्पी तु राज्ञे अपृष्टोत्तरं वक्तुं न प्रागल्भत।

द्विवारं तामेव प्रतिमां निपुणम् आलक्षयत् नरेन्द्रः। ततो न किञ्चि दुक्त्वा प्रातिष्ठत। किन्तु तमनुबध्नन्त्योऽन्तःपुररमण्यस्तु शिल्पमिदम् आलक्ष्य स्फुटितकपोला जहसुः। पट्टमहिषी पुनः तस्याः प्रतिमायाः पुरः तिष्ठन्ती विजयतुङ्गमाहूय अन्वयुङ्क्त 'किमु भवानवगच्छति भावमस्य शिल्पविशेषस्य?' इति।

'नाहमवगच्छामि, कदाचित् शिल्पिना विदूषकायितेन किमप्येवम् आचेष्टितं स्यात्' इति सेनापतिः समाधत्त। अन्येऽपि तमाशयम् अनुमोदमाना आसन्।

अत्रान्तरे महीपतिः आलयस्य पुरोभागम् आगतवान्। तत्र प्राङ्गणे विहितस्य वितानस्य अधस्तात् स्वस्यैव कृते स्थापितम् अलङ्कृतं सिंहासनम्-अभजत। परिजनाः अन्ये च तदनुयायिनः यथार्हम् आसनेषूपाविशन्।

शिल्पीन्द्रो महाराजस्य वामतः, विजयतुङ्गो दक्षिणतश्चोपाविशताम्। किङ्किणिमालापि पितुरन्तिके भूमावुपविष्टा। द्वावपि पादौ एकतः आभुज्यो-पविष्टा सा तासु प्रतिमास्वन्यतमेवाभात्।

क्षणमेकं सा सभा निभृतमूकातिष्ठत् । ततो विष्णुवर्धनः गम्भीरेणात्मनः स्वरेण भिन्दन्निव तां मूकताम् अभाणीत् 'रसिकाः सभासदः, अद्यास्माभिरनुभूतस्य विस्मयस्य नास्त्यन्तः । अत्रत्यः एकैकोऽपि प्रस्तरः भाषते इवास्माभिः साकम् । सत्यं, सा किल भाषा, यां कला भाषते । कथमिवान्या भाषा प्रभविष्यति एवं मनोनिरूढस्य भावस्थावेदने ? । स्वयं चात्र सन्निधत्ते भगवान् चेन्नकेशवः । तदेतदखिलं समवेतं कलायाः अस्याः दिव्यताम् अवगमयति । नाट्यादुदितं वा शिल्पम् ? शिल्पादुदितं वा नाट्यम् इत्यपि सन्देहोऽत्र समुन्मिषति । सर्वस्यास्य मूलकारणम् अयं शिल्पाचार्य एव । अस्माकं भाविनी सन्ततिः नैव द्रक्ष्यतीमं शिल्पीन्द्रम् । अथापि सा अस्य शाश्वतं कलाकौशलं एषु प्रस्तरेषु विलोकयिष्यत्येव ।

'सत्यम् , अद्य वयम् इमं शिल्पिनं प्रशंसामः । तथापि भविष्यत्कालभाविनां श्लाघैव इमम् अमर्त्यं विधास्यति । सत्यप्येवं कृतज्ञताम् अनिवेद्य न वयं तूष्णीं स्थास्यामः । अतः इमं रत्नराशिं विशिष्टं वस्तुजातं चास्मै समर्पयामः ।

'हन्त! विस्मृतोऽस्मि एकं विषयम् । तस्य शिल्पस्य भावं न सम्यगवगतवानस्मि । तत्र हि शिल्पे कपिः कश्चित् कस्याश्चित्सुन्दर्याः वसनम् आकर्षति । कुतोऽयं शिल्पी मर्कटेनैवं हठात्कारं कारितवानित्येव मे वितर्कः । अत्र समवेतेषु यः कोऽपि वेत्ति चेदस्य तत्त्वं, निश्शङ्कम् अभिधत्ताम् । ततः एतं शिल्पाचार्यमपि तत्सङ्गतं न वेति प्रक्ष्यामः ।

इत्थम् अभिधाय भूपः जिज्ञासाकुलः शिल्पीन्द्रमैक्षत । सभ्यास्सर्वे चिन्तायाम् अमज्जन् । तेषाम् आत्मनोऽभिप्रायम् आवेदयितुम् एकतः सङ्कोचः, 'यदि स्वीयः आशयः असङ्गतो भविष्यति तदा पराभवः' इति चिन्ता अन्यतः । कष्टं! किं वा ते विदध्युः ? ।

क्षणं सा सभा तूष्णीमास्त । विजयतुङ्गः सहसा उदतिष्ठत् आसनात् । 'महाराज, अत्र शिल्पविलासस्य दृष्टिदोषं परिजिहीर्षुः गगनाचार्यः इदं

संविधानं विहितवान्' इत्येवाहं समर्थये। नास्त्येवान्यो निगूढो भावः।' इति वदन्नेव सगर्वं सर्वतः प्रसारयन् चक्षुः उपाविशत्।

राजापि तेन समाधानेन तृप्त इव परावृत्य शिल्पिनमपश्यत्। तस्य तु हास एव उद्भूत् अस्य श्रवणेन। स्वरेणैवावज्ञां सूचयन् शिल्पाचार्यः अवोचदेवम्—'महाराज, शिल्पमिदं दृष्टिदोषनिवारणायेति सेनापत्युक्तमपि नातथ्यं सर्वात्मना। किन्तु शिल्पेनावेद्यमानं तत्त्वं नैतावता विश्राम्यति। नाट्यमिदं देवानां कान्तं चाक्षुषं क्रतुम् अविज्ञाय नाट्यमाचरन्तीनाम् अङ्गनानाम् अङ्गेष्वेव निमग्नदृष्टीनाम् अपक्वधियां प्रेक्षकाणां शोच्यां चित्तवृत्तिं विवृणोत्यस्य वानरस्य चापलकृत्यम्' इति।

'साधु, शिल्पीन्द्र, साधु। भवदीयं सुसूक्ष्ममिमं भावं पटुतरं व्यञ्जयतीदं शिल्पम्। यदवादीत् सेनापतिः तदपि नासाधु। यतः अभिनयन्तीनां सुन्दरीणां वपुःप्रकर्षे एव दृष्टेः आसञ्जनं, नियतम् अभिनयकलायाः दृष्टिदोषं जनयेत्। तस्य परिहारोऽपि अवश्यकर्तव्य एव। नाट्यं कुर्वत्याः अस्याः प्रमदायाः सकाशे मर्कटस्यास्य अवस्थापनं नियतं दृष्टिदोषं परिहरेत्। ततः सर्वम् अवदातम्' इति नरेन्द्रः सान्तस्तोषम् अवदत्।

इदम् आकर्णयन् स्तब्धाङ्गः शिलीभूत इवास्त विजयतुङ्गः। किङ्किणिमाला तु तावत्पर्यन्तम् अवनमितम् आत्मीयं शिरः उदनमयत्।

# 'परभृतं प्रति'[1]

चि. द्वा. देशमुखः

नवमुदां निलयस्य रवं तव श्रुतिसुखं श्रुतवानहमन्यभृत् ।
किमु भवान् विहगः किमु केवलं धरणिसंक्रमणक्रमनिःस्वनः ॥ १ ॥

तृणमयीमवनीमधितिष्ठतो ध्वनिरयं स्पृशति श्रवणे मम ।
शिखरतो विचरन् शिखरान्तरं युगपदन्तिकवर्तिविदूरगः ॥ २ ॥

रविकरान् कुसुमान्यधिकृत्य ते प्रसरतीव दरीपुरतो वचः ।
अतिगतं स्मृतिमार्गमुपानयन् विचलयस्यमिता हृदि भावनाः ॥ ३ ॥

त्रिरभिनन्दित एहि मधोः सखे न हि शकुन्त इति प्रतिभासि मे ।
किमपि गूढमवीक्षणगोचरं रुतततिस्त्वमविग्रहधारिणी ॥ ४ ॥

अशृणवं यदहं मम शैशवे तदिदमेव रुतं तव यद्वशात् ।
प्रतिदिशं च मयाऽक्षि विचिक्षिपे व्रततिपादपराजिषु चाम्बरे ॥ ५ ॥

हरितभूमिवनेषु दिदृक्षया तव मयाटनमाचरितं बहु ।
त्वमभवः प्रणयेप्सितदर्शनश्चिरमलोचनगोचरगोऽपि सन् ॥ ६ ॥

अधिशयान इहापि पिक! स्थलीं तव रुतं शृणुयां पुनरप्यहम् ।
वचनसंश्रवणेन च संस्मरन् अभिनवे वयसि प्रसृतां मुदम् ॥ ७ ॥

त्वमयि धन्यतरोऽसि महीतलं विहग! भौतिकवन्न विभाति मे ।
किमपि दिव्यपदं खलु भाति तत् समुचितं वसतेस्सदनं तव ॥ ८ ॥

---

[1] आङ्ग्लभाषायां वेड्स्वोर्तूनामककवेः 'To the Cuckoo' इति ख्यातस्य खण्डकाव्यस्यानुवादः ।

## "हसत"

को. ल. व्यासराजशास्त्री

रोगी—आर्य! प्रायेण एको मासोऽतीतो गदान्निर्गतस्य मे। कस्मात् न स्नानमनुमन्यसे।

वैद्यः—अस्ति हि आभाणकः—'स्नातो वैद्यं न पश्यति' इति।

---

बालः—अम्ब! प्रातिवेशिक्या राधया मे मोदका दत्ताः, मया च भक्षिताः।

माता—किं त्वया तस्यै उपचारवचनमुक्तं न वा?

बालः—उक्तमेव।

माता—किमुक्तम्?

बालः—'त्वया मम पितुः भार्यया भवितव्यमासीत्' इति।

---

चोरः—(पथिकमवलोक्य) अपि त्वया यः कोऽपि रक्षापुरुषः निकटे दृष्टः?

पथिकः—तस्य छायापि न दृष्टा।

चोरः—तर्हि तव धनकोशं दत्त्वा याहि।

---

दाण्डिकः—अप्यद्य रथ्यायामस्याः कुमार्याः पृष्ठतो गतं त्वया?

युवा—आर्य! नैतदेवम्; तयैव मम पुरस्ताद्गतम्।

---

अध्यापकः—सायं कन्दुकक्रीडायाः किं प्रयोजनम्?

छात्रः—तावन्तं कालम् अध्ययनपीडा नास्ति।

---

**गर्भिणी माता**—जात! त्वया सह क्रीडनाय किं सोदरमपेक्षसे, उत सोदर्याम्?

**पुत्रः**—अम्ब! अहं श्वपोतकमपेक्षे।

---

**कामुकः**—यदि त्वं मे भार्या न भवसि, तर्हि नान्यामहमस्मिन् जन्मनि कामयिष्ये।

**प्रमदा**—यदि भार्या भवामि, तदा?

---

**गृहिणी**—मम माता मृगशालां गन्तुमिच्छति।

**भर्ता**—आगच्छतु। तत्रैकं पञ्जरं शून्यमस्तीत्युक्तं तदधिकृतेन।

---

**मित्रम्**—किं त्वं वदसि? तव पिता न किञ्चिद् धनमवशेषितवान्?

**चैत्रः**—नैव। प्रथमतः स धनार्थमारोग्यं नाशितवान्। पश्चात् आरोग्यार्थं सर्वं धनं व्ययीकृतवान्।

---

**वैदेशिकः**—अस्मिन् गृहे भार्याभर्त्रोरभिप्रायभेद एव न दृश्यते। महदिदं प्रमोदस्थानम्।

**गृहस्थः**—मया तु अवकाश एव न दीयतेऽभिप्रायभेदस्य। गृहिण्या यदुच्यते तन्मया क्रियते।

---

**लेखकः**—मम हास्यं श्रुत्वा कुतो न हसितं त्वया?

**वाचकः**—इदं हास्यमिति प्रथममेव कुतो नोक्तं त्वया!

---

# भारतम्-अद्यतनं श्वस्तनं च

(आज़ाद्-स्मारकोपन्यासाः)

श्री जवाहर्लाल् नेहरू

अनुवादकः डा० वे. राघवः

सङ्गत्वं यच्च बहूनां दृष्टिकोणानां परिगणने तस्य पाटवं, तत् तदीयवचसस्सर्वस्यापि असाधारणं किमपि गौरवं ददौ ।

मौलाना-आज़ाद् मुख्यतः पण्डितः, परिस्थितिबलात् राजकीयवादमाकृष्टः । बहिः प्रकटनाडम्बरं निषेद्धुं यत् स प्रायतत ततो नान्यत् किमपि तन्निष्ठं पण्डितत्वं स्पष्टं व्यञ्जयति । भारते वा अन्यत्र वा, राजकीयवादनेतारः प्रायः प्रजाभिस्सह ये स्वेषां संपर्काः तेभ्यो बलमाददते; मौलाना-आज़ाद्-महाशयस्तु मुख्यतस्सन्न्यासी बभूव, यस्मै राजकीयवादरङ्गात् स्वाध्यायैकान्त्यमेव रोचते स्म तराम् । तस्य लज्जालुः निवृत्तिप्रवणः स्वभावः भारतीयजनानां तमनुरक्ततरं चकार । तन्मरणादनुपदं यत्सार्वजनिकमतिमहत् शोकप्रदर्शनं श्लावनं चाभूत् न तत्समतया अन्यत् किञ्चिदभूत्, अपहाय तमवसरं यदा स्वसिद्धान्तस्य कारणात् पूज्यो गान्धी मारितः ।

तन्मरणे भारतीयसांस्कृतिकानुबन्धसंस्थायाः नष्टो न केवलं तत्प्रतिष्ठापकाध्यक्षः किन्तु प्रारम्भात् प्रभृति तत्कार्याणां प्रेरकश्च । तत्स्मृतिसत्कारचिह्नतया संस्थयानया निरणायि 'आज़ाद्-स्मारकोपन्यासाः' इति उपन्यासमालां प्रस्तावयितुं, तदर्थं च भारतादन्यतश्च प्रकृष्टान् पण्डितानुपनिमन्त्र्य मनुष्याभ्युदयं तदभिवृद्धिं चान्तरेण, विशिष्य भारतोद्देशेन, तान् भाषयितुं च । मानुष्यकपक्षपातिनो मौलाना-आज़ाद्-महाशयस्य श्रद्धा मनुष्यचिन्ताभाव-क्रियाणां सर्वमंशं व्याप्नोत् । संस्थाया एष विश्वासः-यदेते उपन्यासाः भिन्नानां जनानां मिथो भूयस्याः प्रतिपत्तेरभिवर्धनाय स्वकीयमर्घ्यमुपबृंहणं समर्पयिष्यन्ति, अद्य जगति सञ्चितान् विरोधवेगान् कांश्चन शिथिलीकरिष्यन्ति चेति ।

एषामुपन्यासानां प्रथमां मालां कर्तुं यत् श्री जवाहर्लाल् नेहरू संमन्यते स्म, तन्नो विशिष्टं भागधेयम् । नीतिविदिति वा सर्वदेशेषु प्रथितस्साहित्यकार इति वा तस्य यत्स्थानं तन्न मया वक्तव्यम्, किन्तु विचारकतया, लेखकतया कर्मठतया च तस्य यत् अत्यन्तम् अकृत्रिमं हार्दत्वम् अग्रगण्यो गुणो भवति तं निर्देष्टुमिच्छामि । तस्य बुद्ध्या चिन्तनं नाम हृदयेन भावनं भवति, भावनं च कायिकं करणं भवति । अनुवेदनस्येदृशी त्वरितता कदाचिद्दुरूहतामादधीत, मन्दतरा मतीः प्रकोपयेच्च; किन्तु सा प्रायः पुनरनुसन्धानासहस्य प्रकटस्य हार्दत्वस्य लिङ्गं भवति । पण्डितनेहरूमहाशयस्य अनुभवः अनुभावश्च प्रायः सदा समकालभाविनौ भवतः ।

हार्दत्वेन आत्मन ऐक्यापादनं भवति; इदमेव रहस्यं पण्डितनेहूरू-महाशयस्य स्थितिस्थापकरूपसंस्कारे बले च। कारागृहवासः सदा स्वभावस्य परीक्षा भवति, सा च परीक्षा न तथा तत्कृतस्य शारीरस्य श्रमस्य कारणात्, यथा पुरुषमतेर्वैषम्यमन्तरेण तदाहितस्य श्रमस्य कारणात्। स्वाभाविकव्यापारेभ्यो निरुद्धः, मनुष्यान्तरसंगमनावसराच्च निषिद्धः, मनुष्यः स्वकीयभावना-चिन्तनव्यवसायमात्रोपकरणशरणः क्रियते। बलाद्व्यापारशून्यता महान्तं खेदमावहति यस्य च खेदस्य प्रमाणं पुरुषस्य जीवातुशक्त्या बलेन च साक्षान्निर्धार्यते। एतेन व्याख्यातं भवति-कथं बहवो राजकीयनेतारः कारागृहवास-समये शारीरारोग्यभङ्गमनुभवन्ति, यद्यपि ते नानुभवन्ति आत्मतेजोवधम्। स्वकारागृहवासं प्रायोऽननुभूतविकार आस्थितवान् पण्डितनेहूरूमहाशयः। तस्य स्वात्मनि प्रतिभायाः, बुद्धिव्यापारस्य, व्यवसायस्य च यदैक्यापादनं तेनैवैतत्सुलभं बभूव। व्यवसायस्य यदा बहिः स्पन्दक्रियारूपेण आविर्भवितुं सारणी नाभूत्, बौद्धं भावमयं च यज्जीवितं तत् तस्य समानयाथार्थ्यमकारि प्रतिभया।

पण्डितनेहूरूमहाशयस्य सर्वाः राजकीयाः क्रिया उक्तयश्च कयापि शिल्पिनः संवेदनस्फूर्त्या लक्षिताः। शिल्पिनः प्रायः लज्जालवः स्वात्मनिष्ठाश्च; तथापि कस्यापि विचित्रस्य भाविकसाम्यतापादनन्यायस्य कारणात्, ते स्वसजातीय-मनुष्यसमक्षं स्वीयाः चिन्ताः भावांश्च प्रकटयितुं कामयन्ते। बाह्यप्रपञ्चप्रेरणानां स्वस्मिन् यानि प्रतिफलनानि तानि रेखायां वर्णे शब्दे वा अभिव्यज्य सन्तुष्टास्ते प्रायो भवन्ति। किन्तु असाधारणानां केषाञ्चिद्विषये एतत्प्रतिफलनं तथा बलवद् भवति, यथा एतदभिव्यञ्जनमात्रं न सन्तुष्टिकरं भवति; ते बाह्य-व्यवहाररङ्गप्रवेशमर्थयन्ते; यस्मिन् सन्निवेशे जातास्तं विपरिणमयन्ति च। शिल्पी ततो राजकीययोधे विलीयते, किन्तु विवादविग्रहयोर्मध्येऽपि शिल्पिता तस्मिन् लगत्येव। इतिहासेन नानीतो रङ्गे कोऽपि पुरुषः यस्सामूहिकव्यवहारे जवाहर्लाल् नेहूरूमहाशयात् सुलक्षणतरः शिल्पी भवति।

यस्मिन् कस्मिन् वा विषये भवतु, माहात्म्यं नाम विरोधांशं कञ्चन स्वस्मिन् बिभर्त्येव। विरुद्धानां समावेशः प्रतिभायाः समृद्धिं जटिलतां चादधाति। ततो नेदं चित्रं यत् पण्डितनेहूरूमहाशये कलासंबन्धिनी प्रकृतिरिव विज्ञान-संबन्धिनी प्रकृतिरपि प्रकटलक्ष्या। स्वेन क्रियमाणे मनुष्याणां व्यवहाराणां च परिशीलने अपुरुषपक्षपाता वस्तुस्थित्यवगाहिनी या विज्ञानलक्षणभूता दृष्टिः

तामानेतुं स सदा सपरिश्रमं प्रायतत। निपुणं निरूपकः, विमर्शकः, मार्गण-शीलश्च तदीयः स्वभावः तस्य ऐकदेशिकदृष्टिग्रहणं दुष्करमकरोत्; यद्येतेन कदाचित् कस्यापि कार्यक्रमस्य दुरन्तपर्यन्तानुधावने स विलम्बशीलः कृतः, एतदेव तदीयचिन्तालेखक्रियाभ्यः कमपि दृष्टिविस्तारं स्वस्थतां च अददात्, ये गुणाः सारतो विज्ञानानुरक्तस्य पुरुषस्य लक्षणं भवन्ति।

कालस्य क्षणिकता, क्षयस्य अनिवार्यता च सत्त्वमात्रस्य यत् करुणत्वं तद्भावनया नः पूरयति। तस्माद् भावात् सचेतसः कस्यापि नात्मा पलायितुं शक्नोति, किन्तु मनुष्यगौरवे न्यस्तनिर्बन्धो वीरभावः शोकं नैराश्यं चातिक्र-मितुं समीहते। स एव महान् नेता येन मृत्युतिमिरमयीषु द्रोणीषु सञ्चारः कृतः, किन्तु तदुपरि वर्तमानानि प्रकाशवन्ति शृङ्गाणि न कदापि विस्मृतानि। सति व्यसने मृत्यौ च ये पुरुषार्था धृतिपौरुषसहनरूपान् गुणान् अपेक्षन्ते तेषां संवेदनं नेहरूमहाशयः अस्मासु संबोधयति। तस्य लेखाः क्रियाश्च एतया पुरुषगौरवसंवित्त्या परिपूर्णाः। अयमेव स पट्टतन्तुः यो नेहरूमहाशयं मौलाना-आज़ाद्महाशयेन सह दृढं बबन्ध, भारतीयसंस्कृतेर्विशालानामनुकम्पात्मकानां प्रकाराणां प्रायो यथार्थतमं प्रतिनिधिं च तं चक्रे।

वचित्र्यमध्ये यद् ऐक्यं तदेव भारतीयभावस्य यदि सारांशः, स सारांशः तावान् यथार्थश्च भवति; यत्सत्यं लोकस्य भागान्तराणां च आवश्यकतया-पेक्षितश्च भवति। अत एव **अद्यतनं श्वस्तनं च भारतम्** अधिकृत्य यद् पण्डित-नेहरूमहाशयस्य दर्शनं तस्य विशिष्टः अर्थः न केवलं भारतीयानां,—यान् भारतीयान् नूतनप्रभवापेक्षितं सन्नाहाह्वानमभ्युपगन्तुं स पण्डितनेहरूमहाशय आमन्त्रयते—किन्तु लोके सर्वत्र ये सचेतसो वर्तन्ते तेषां सर्वेषामेव भवति।

आज़ाद्-स्मारक-उपन्यासानामुपक्रमोपन्यासं कर्तुं श्रीजवाहर्लाल् नेहरूमहाशयं महता प्रहर्षेण प्रार्थये।

नवदेहली हुमयून् कबीर्

२२ फ़ेब्रुवरि १९५९

# भारतम्-अद्यतनं श्वस्तनं च

## १

क्षमापणोक्त्या मयोपक्रमितव्यं भवति। यद्यप्यहं चिरात् सामान्यलोक-कार्यैस्समन्वितः, बहुशश्च जनानां पुरतो भाषे च, तथापि योऽद्य मया करिष्य-माण उपन्यासः प्रतीक्ष्यते, तादृशं कर्तुं सर्वथा नास्त्येव मे परिचयः। एतादृशेन उपन्यासेन विचारवैदुष्यभरितेन भाव्यम्। तत्संपादनाय महान् कालश्च देयः। न केवलमीदृशेषु कार्येषु न मे परिचयः, किन्तु लोकसभाया आयव्ययोजनाविचारार्थकेऽधिवेशने प्रवर्तमाने, सत्सु च बहुवेलाघस्मरेषु मदीयेष्वेव दैनन्दिनव्यापारेषु, सन्दर्भस्यास्य यदुचितं तन्मे सुतरां दुष्करमभूत्।

नियोगमेनमङ्गीकर्तुमप्रवण एवाहमासम्, तथापि क्षणं चित्ततारल्येन विवशीभूयाभ्युपागच्छम्। मौलाना-आज़ाद्-महाशयानां वार्षिकश्राद्धदिनेऽस्मिन् अस्माभिरादरणोपचितां तदनुस्मृतिमुद्दिश्य श्रद्धाञ्जलिं चिकीर्षामि। उपन्यास-विषयश्च यो मे सूचितः स च मामकर्षत्, यतो यथाकथञ्चित् भारतस्य अद्यत्व-भविष्यत्त्व्यां पूर्णमेव मे मानसम्। तथापि किञ्चिदिव भीतश्चाभवम्। विषयोऽयमतीव प्राणभूतः। अहं तु अद्यतनभारतेन सह तथा महदनुबद्धः, यथा विषयमेनमधिकृत्य निष्पक्षपाता दृष्टिर्न मे सुकरा भवेत्। ततः कार्यभारेण कारणान्तरेण च व्यग्रेण मया इदंप्रथमतया क्रियमाण एतादृश उपन्यास-समुत्साहे श्रोतृभिर्मयि दाक्षिण्यं प्रदर्शनीयमिति प्रार्थये।

अद्यतनभारतस्यावधारणं वर्णनं च धीरेणैव साध्यं कार्यं स्यात्, भाविभारतमधिकृत्य यत्किमपि वचनं तु साहसप्रायमेव स्यात्। यस्य कस्यापि वा देशस्य, अथवा लोकस्यैव, भाविनीं दशां कथयितुं यत्सत्यं लोकचरित्र एव कदापि इतो दुष्करतरं न बभूव। कार्यव्यतिकरा अश्रद्धेयेन वेगेन परा-पतन्ति, परिणामः परिणाममनुधावति। राज्यतन्त्रस्य यो बाह्यो भावः, स तलस्याधस्तनान् असंख्याकान् प्रवाहान् अन्तर्भावयति, यैः प्रवाहैः कदाचिद् उपरि उद्भिद्यमानैः कार्यस्वरूपं विपर्यस्यते।

अद्यतनभारतं न केवलं समनन्तरादेव भूतादुद्भूतम्, किन्तु अस्मद्देशस्यातिदीर्घचरित्रस्य संवत्सरसहस्रेभ्योऽपि। आशयः, अनुभवः, क्रिया, एतेषामेकस्योपरि अन्यदिति क्रमशः परिपतितैः संघातपटलैरवधारितस्वरूपा वयम्; यद् वयमद्य, तत्तैरेव निर्मितम्। ये भारते मम समकालिका अभूवन् तेषां विशेषेण रूपं परिसरश्च कयापि पुनरसंभवदावृत्त्या व्यतिकरपरंपरया दत्तमासीत्। न केवलमस्माकं केनापि महात्मना, प्रबलेन नेत्रा च संबन्धस्समभूत्, योऽस्मान् आमूलमचालयत्, जीवधारां विपर्यासयत्, दैनन्दिनजीवयात्रारेखातश्चास्मानाकर्षत्, किन्तु इतिहासपरिवर्तरूपगौरववत्सु कार्येषु च साक्षिणो भागिनश्च अभूम। पुनःपुनश्च अन्वभूम हृदयावेगलक्षितान् भावौदार्यशालिनश्च क्षणान्, कदाचिदाशाभङ्गे एतत्प्रतिपक्षिणं नैराश्यसोदरमपि भावम्। तथाप्येवं वक्तुं न सर्वथा युक्तं स्यात्, यतः उत्कटतां प्राप्तमावेगं यः प्रायोऽनुजायते मानसिकशारीरसमवसादात्मा भावः, तस्य वशे न वयमपताम। सदैव अवलम्बनाय किमप्यासीत्; आसीच्च नेता शिलोच्चयप्रायः दीपस्तम्भप्रायश्च; आसीच्च व्यवसायविशेषः यो नो रोमाञ्चमाततान, अस्मासु यदुत्तमं तदाकारयच्च। ते च क्षणाः न सदैव सुखाः, मनाग्दुःखावहा अपि आसन्, किन्तु सदैव महत्सु कार्येषु व्यापृताः स्मः, इतिहासगतिक्रमेण सह क्रामाम इति च कापि आत्मसन्तुष्टिरभूत्। यथा जीवपौष्कल्यमाधीयेत तथा भावः क्रिया च सहभावेन प्राक्रमेतां, राज्यतन्त्रव्यवहारेष्वपि धार्मिकेण मार्गेण उच्चैर्लक्ष्यैश्च सञ्चरामह इति यत् श्रद्धा आसीत्, तदन्यत्सर्वमतिक्रम्य नोऽवति स्म। विग्रहेषु, विशेषतो राष्ट्रियासु संयत्सु, यस्संभवी द्वेषः स नो न जघास।

गान्धिः सदैव नः पुरस्तान्मनसि च बभूव। अपरेऽपि च बभूवुः, मनुष्यसंख्यामतिवर्तमानाः। सख्यं च बभूव निस्संख्यैः नरैर्नारीभिश्च, येषां महद्भिर्लक्ष्यैर्महता नेत्रा च समन्वयेन स्वीयमौन्नत्यमुदकृष्यत। एतेषु च पूर्वतनेषु महापुरुषेषु मौलाना-आज़ाद् अप्येकः, वयसा यवीयान् किन्तु सदैव प्रौढतया ज्ञानवृद्धतया च गण्यमानः। अस्मत्समुद्यमे तस्य विशिष्टं स्थानमभूत्।

यस्य संस्कृतिसमन्वयस्य कृते भारतं सदा प्रयतमानमासीत्, तस्य अनितरसाधारणतया स प्रतिनिधिरासीत्। संकुचिता या राष्ट्रियपद्धतयः ततोऽस्मानेष बहिः प्रापयामास, दृष्टीर्नो विस्तारयामास च। स्वयमन्तरधिकं भिन्नमतयोऽपि यदेतावन्तः पुरुषाः प्रबलं मिथो बन्धमेकमपश्यन्, संभूय च स्वपरंपरां यावत् प्रायतन्त, तदाश्चर्यमेवासीत्।

२

कोऽयं भारतो नाम देशः? प्रश्नोऽयं पुनःपुनर्मे मनस्युदेति। मदीययैव अशिक्षितया रीत्या अस्य प्रश्नस्योत्तरमहं देशस्यास्य प्राक्तन्यामद्यतन्यां च स्थित्यामन्वैच्छम्। अस्मच्चरित्रस्य ये प्रथमारम्भाः ते मामद्भुतरसेन परिपूरयन्ति। वीर्यवत्या बलवत्याश्च जनजातेस्स आसीत्कालः, यस्याश्च परिप्रश्नशील आत्मा, या च विशृङ्खलया जिज्ञासया प्रेर्यमाणा बभूव, यस्याश्च चरित्रम् अतिप्राचीनायामपि दशायां कस्या अपि परिपक्वाया असूयाहीनायाः सभ्यताया लक्षणानि व्यञ्जयामास। जीवयात्रामनिराकुर्वदेव, तद्वारान् तत्सुखानि च ऊरीकुर्वदेव तत् सदा पार्यन्तिकं सर्वात्मकं तत्त्वं मृगयते स्म।

महतीं संस्कृतनाम्नीं भाषां निर्ममे। एतां भाषां, स्वीयां कलां, शिल्पं च द्वारीकृत्य स्वकीयं स्फुरत्प्राणं सन्देशं विदूरदेशेभ्यः प्राहिणोत्। उदपादयच्च उपनिषदः, भगवद्गीतां, बुद्धं च।

संस्कृतभाषया यत् प्राणभूतं कार्यं निर्वर्तितं, न तत् लोके कयापि भाषया कस्या अपि मानवजातेश्चरित्रे निर्वर्तितम्। न केवलमत्युदाराया मतेः, अतिश्लक्ष्णस्य साहित्यस्य च सा भाषा प्रकाशयित्री बभूव, किन्तु राजतन्त्रेण भिन्नस्यापि भारतदेशस्य सन्धानग्रन्थिर्बभूव। रामायणं महाभारतं च परस्सहस्राः समाः, प्रतिसन्तति, कोटिशो जनानां जीवने ओतं च प्रोतं च। मुहुरहं विस्मयेनैवं व्यतर्कयं यद्यस्माकं जनजातिरेषा बुद्धम्, उपनिषदः, महान्तावितिहासौ च विस्मरेत्, तदा कीदृशी सा भवेद् इति। सा निर्मूलिता भवेत्।

यानि अस्या आधारभूतानि लक्षणानि एषु महत्सु युगपर्ययेषु तामनवमुच्य सक्तानि, तस्याः प्रातिस्विकमुत्कर्षं च ददुः, तानि विनश्येयुः । न भारतो देशो भारतो भविष्यति ।

३

क्रमेण ह्रासस्समजनि; बुद्धेः प्रत्यग्रताऽनश्यत्; सा पर्युषिता बभूव। यौवनस्य या प्राणवत्ता पुष्कलता च सा दुर्मुख्या जरायाः पदं ददौ । साहसोत्साहस्थाने निस्सारा पुनरुक्तप्राया कापि दैनन्दिनचर्या बभूव । विशाला समुत्तेजिनी च या विश्वदृष्टिः पूर्वं बभूव, सा प्रावृता, निरुद्धा, जातिभेदैः सामयाचारिकैरनुष्ठानैश्च नाशिता । तथापि भारतं तावत्सजीवमासीत्, यत् स्वजनतामहासमुद्रान्तरापततो विदेशजनप्रवाहान् तदात्मसादकरोत् । न च सर्वथा व्यस्मरत् तान् भावान् ये स्वयौवनोर्जस्विदशायां प्रेरका आसन् ।

पश्चात् समापतितेन मुहम्मदमतेन मुसल्मानास्कन्दनेन च भारतं बलवत्परिवर्तितमभूत् । तदनु च पाश्चात्यसाम्राज्यान्यागतानि यानि दूरदेशेषु स्वानि स्वाम्यशासनानि स्थापयामासुः । नूतनमाक्रमणप्रकारं विदेशोपरि स्वाम्यं च तानि समानयन्, समानयंश्च तेनैव समं प्रत्यग्राणां भावानामुपमर्दम्, ऐरोपाखण्डे प्रवर्धमानां यान्त्रिकीं जीवयात्रारीतिं च । एतद्युगं द्राघीयसो व्यवसायस्यान्ते स्वातन्त्र्यलाभेन समाप्तिमगमत् । संप्रति अस्मदुपरि भूतकालनिसृष्टेन भारेण, तथा निर्मित्सिताया आयतेः प्रस्पन्दैः, संकीर्णैरुत्स्वप्नायितैश्च वयं भाविनं कालमभिमुखीभूय तिष्ठामः । या एताः कालदशाः तास्सर्वा अपि अद्यत्वे अस्मासु अस्मद्देशे च वर्तन्त एव । कार्यकारितया क्रोडीकृत्य व्यवस्थापिता शक्तिः बलं च अद्यतनयुगस्य लक्षणम् । अद्य भारते अणुतेजश्शक्तिविषयकस्य विज्ञानस्य वृद्धिर्वर्तते, तथा वर्तते च करीषयुगं च; एवमेकैकमपि युगमस्मद्देशे वर्तते । किञ्च वर्ततेऽत्रातिमहत् वैचित्र्यजातम् । एतस्य वैविध्यस्याधः किमपि ऐक्यमपि वर्तते । येन कालपर्यये दुर्जातेषु व्यापत्सु च सत्स्वपि अस्मज्जना एकतामापाद्य

संरक्षिताः । वैज्ञानिकयान्त्रिकप्रपञ्चे निमज्ज्य तथा नो ज्ञानं क्रोडीकर्तुं प्रयतामहे, यथा प्रकृतिशक्तयः उपर्युपरि तज्ज्ञानस्य वशीभवेयुः; परं तु न केवलमस्माकं दारिद्र्यमनभिवृद्धिश्च, संप्रदायागताः केचन भावा व्यवहारप्रकारा अपि अस्मानपकर्षन्ति । विज्ञानं यन्त्रं च विना नास्त्यस्माकमायतिः । तथैव यदि वयमस्माकं भूतं कालमुपेक्षामहे, अथवा विस्मरामः, तदास्माकमायतिर्गाधा शून्या तात्त्विकार्थविधुरा च भवेत् ।

४

अतश्च अस्मत्कालस्य प्रक्षोभव्यामोहाभ्यामुभयमुखा वयं तिष्ठामः, अग्रे भविष्यन्मुखाः, पश्चाच्च भूतमुखाः उभयोरपि दिशोः कृष्यमाणाः । एतं च व्याघातं कथं शमयेम, कथं च धारणार्थं प्रक्रियां काञ्चन निष्पादयेम, ययास्माकं न केवलं प्रापञ्चिकार्थाः पूर्येरन्, अपि त्वस्माकं मानसमात्मा च धार्येयाताम्? कानि तानि प्रत्यग्राणि वा पुराणानि वा लक्ष्याणि, यानि वैविध्यभाञ्जि नूतनप्रपञ्चौचित्येन ऊहितानि नो जनानां पुरतः उपन्यस्येम? कथं च ते जनाः सजागराः कर्मठाश्च यथा भवेयुः तथा तान् हठाद्व्यापारशालिनो विदध्याम?

सन्त्येवास्माकं समस्याविशेषाः भारतदेशगताः; किञ्च लोके याः प्रधानास्समस्याः तत्रापि भागिनो वयम् । लोकस्य चास्य सत्यामप्यतिमहत्यामभिवृद्धौ स्वात्मनि विश्वासो गलतीव । अद्यत्वे च भारते युक्तमेव वयमेकाग्रा आर्थिकाभिवृद्धौ पञ्चवार्षिकयोजनासु जनानां च जीवयात्राप्रकारोन्नामकेषु महाप्रयत्नेषु च । सर्वमेवैतत् अवश्यमेव, अभिवृद्ध्यन्तरस्य यस्य कस्यापि पूर्वापेक्षितं च । किन्तु कोऽपि सन्देहो अस्माकं मनो विशति किमेतदेव केवलं पर्याप्तम्? उत किञ्चिदन्यदप्यस्ति तेन सहाधिकतया योजयितुम्? यौगक्षेमिकं राज्यं प्रार्थनीयमेव लक्ष्यम्, किन्तु तदरसमपि भवेत्; यैश्च राज्यैस्तल्लक्ष्यं साधितमेव तैः प्रतिनवानि प्रश्नजातानि संकटानि च आविष्कृतानि, यानि आर्थिकाभिवृद्धिमात्रेण यान्त्रिकेण जीवनपरिष्कारेण वा न समर्थनीयानि । मनुष्यस्व-

भावस्य अत्यावश्यिकानां कासांचन एषणानां समर्पणे धार्मिकदैविकपारलौकिकश्रद्धाविशेषश्च प्रधानतया भागी बभूव। किन्तु तादृशस्य श्रद्धाविशेषस्य ग्रहणशक्तिर्दुर्बला जाता, विज्ञानस्य युक्तिवादस्य चाभिघाते तेन न प्रत्यवस्थातुं पार्यते। मतमावश्यकं वा न वा, जीवनसारवत्तासमर्पणाय अस्माकं संभूयावलम्बनाय च अर्हणीये लक्ष्ये श्रद्धा कापि आवश्यिकैव। दैनन्दिनजीवनस्य ये भौतिकाः कायिकाश्चार्थाःताननतीत्य कस्याप्युद्देश्यस्य प्रेक्षास्माकमावश्यिका।

सामूहिकवादः, सर्वसाम्यवादश्च एतामुद्देश्यप्रेक्षां दातुं प्रयतेते, किन्तु स्वीयानेव शपथप्रायान् हठाभिप्रायान् तौ पुष्यतः। सर्वसाम्यवादिनो ह्यद्यतनयुगे तत्त्वविचारका जाताः।

सर्वोऽपि समाजः किमपि सामरस्यमधिगन्तुं यतते। कदाचिदेतत् विग्रहद्वारा भवति, कदाचित् बुद्धिपूर्वमबुद्धिपूर्वं वा सामारस्यलाभार्थकेन प्रयत्नेन। यथाजातं वर्तमानः अपरिवर्तमानश्च समाजः प्रक्षुण्णायामेव रेखायां चरति। तद्द्वारा तस्य वर्तते सामरस्यं, किन्तु अनुदारे तले। प्रेरकशक्तिवेगाविष्टस्समाजस्तु प्रतिस्वं समाजे च तीव्रान् संस्कारान् जनयति। यदीदं तथ्यं स्यात्, येऽद्य लोके दृश्यन्ते तीव्रास्संभेदसंस्काराः, ते महतीं प्रगतिशक्तिं सूचयन्ति, सूचयन्ति च नूतनं सामरस्यमुद्दिश्य प्रयत्नं, मनुष्यसत्त्वे च कमपि नूतनमायामम्। एतद्ध्रुवमस्मद्धृदयमुपोद्बलयितुमुचितं, यदि नाभविष्यत् सततसन्निहितं भयम् अणुशक्तियुगीयानि आयुधानि मनुष्यजातिमेव समूलं नाशयिष्यतीति।

भविष्यदभिमुखैरस्माभिः सलक्ष्यं सश्रद्धं सवीर्यं च कार्यं कर्तव्यम्; तथैव यद्भूतकालादागतं तद्रक्षितव्यं, ततो धारका अंशा उपात्तव्याः। विपरिणाम आवश्यकः, परन्तु अनुस्यूतिरप्यावश्यिकैव। यद्भावि तत् भूते वर्तमाने च ये आधाराः स्थापिताः तदुपर्येव निर्मातव्यम्। भूतस्य निषेधे, ततस्सर्वथा विच्छेदे चास्माकं निर्मूलनमेव स्यात्; तदा निस्सारता शोषश्च भवेत्। गान्धेः एष गुणः यत्स नो जनसन्ततेः गुणाढ्येषु संप्रदायेषु अस्मदीयायां भूमौ च स्थिरं

प्रतिष्ठितचरणस्सन् विपरिवर्तभूमिकायां व्यवहरति स्म। अनाधुनिकान् वार्ताशास्त्रन्यायान् स अभ्युपागच्छत्, सांप्रदायिकं कमपि विषयं स उपष्टम्भयामास, प्रतीपगमनशीलानि कानिचिच्छक्तिस्रोतांसि स प्रोत्साहयामास चेति चोदयन्तो बहवस्तं गान्धिं खण्डयामासुः। तथापि तत्कृतकार्याणां स्थूलं स्वरूपं विमृशन् सर्वोऽपि तेषां परिवर्तोदर्कतया विवशीक्रियेत। राज्यविषये वा सामाजिकविषये वा तस्य याः प्रवृत्तयः ता निरूपयतामस्माकं तेषामिदं विपरिवर्तात्मकत्वं न सुकरप्रत्यभिज्ञानं भवेत्, यतः संमर्दविषये पाश्चात्यवासनासंस्कृता वयम्। गान्धी त्वेतदबुध्यत—यथार्थः परिवर्तः जनतातः उदभवत्, न तु उपरितनेभ्यः, तेन च मुख्यतस्सामाजिकेनैव भाव्यमिति। गान्धितः पूर्वमग्रगण्याः बहवस्समाजपरिष्कारका आसन्; अल्पानां परिणामानां साधने, अथवा नूतनमतभेदालम्बिनामुत्थापने, ते समर्था आसन्। गान्धिस्तु रामराज्यप्रक्रियामुदाहरन् यथा जनैरपि किमापततीति न सम्यक् अधिगतम्, तथा कोटिशो जनगृहेषु विपरिवर्तमापादितवान्। न कदाचिद्वर्णव्यवस्थां स्वरूपतो धिक्चकार (यद्यपि चरमवर्षेषु किञ्चिदिवैतदपि अकरोत्); किन्तु अन्त्यजानामस्पृश्यानामुद्धारनिर्बन्धेन स सर्वथा वर्णव्यवस्थाया मूले कुठारमर्पयामास; एतच्च बुद्धिपूर्वं तत्प्रसूतीर्जानान एव अकरोत्। राज्यतन्त्रे स्वोपज्ञेन कार्यक्रमेण स कोटिशो जनान् स्फुरज्जीवौजसो व्यधात्, तान् निर्भयानकरोत्, तेषु आत्ममानमात्मविश्वासं चोदपादयत्। स्वत्वाधिकाररहितानां दरिद्राणां च जनानां विषये यन्निर्भर्यमासीत्तस्य, तेन स बलादस्माकं मतीः समाजे सर्वसमभागितां प्रति व्यापारयामास। प्रायः कलहबुद्धिं परिवर्ज्य सर्वमेतत्प्रशान्तं रागद्वेषरहितं च समपादयत्। सर्वोपरि सत्ये प्रशमात्मक उपाये च निर्भरतां न्यधात्। सत्यं तस्य जीवितस्यैव आवश्यको धर्मो बभूव; यच्च प्रबलशक्तिमयं कार्यं स चकार तत्सदा सत्यानुगतमेव बभूव। तथा विदधानस्स भूते काले य आधाररूपा न्याया अस्मद्भारतजनतायाः समृद्धिकरा बभूवुः तेषां स्मृतीर्जनमनस्सु समुद्बोधयामास। एवं हि स प्राचीनाधारोपरि निर्ममे, तथा कुर्वाण एव तां निर्मितिं भविष्य-

दुन्मुखीं चकार। तदीया वार्ताशास्त्रीयादिदृष्टयः काश्चित् आधुनिकाभिप्रायैस्सह न चतुरश्राः, अथवा ताः तात्कालिकीमेवार्थवत्तां बिभ्रति स्मेति यत् तन्न तं व्याकुलयति स्म। विपरिवर्तिनीनामवस्थानामनुरोधेन स्वात्मानमभ्यूहयितुं स सदैव सज्ज एवासीत्, यदि तत्र आधारभूतो विषयः साधुरासीत्।

भूतं वर्तमानेन, भविष्यता च सह स यथा समायोजयत्, तत्सदा मे अद्भुतं प्रत्यभात्। यतस्स एवं कर्तुमशक्नोत्, ततः स स्वजनान् विच्छेदं विना पदात्पदं पुरोगन्तुं विरोधमपि भूयसा वर्जयितुं च क्षमानकरोत्। अत्यन्तजीवितभूतं यमुपदेशं स नः कृतवान्, अथवा वयं तेन स्मारिताः, स कर्मसु उपायकौशलं नाम। फलानि न कदापि स्वात्मना अलं, यतस्तानि तत्प्रापकैरुपायैः प्रतिपादितस्वरूपाणि भवन्ति। अस्मिन्न्याये तस्य गान्धेः कार्यकरणरीतौ वा यदि मूलभूतं तत्त्वं किमपि स्यात्, तदास्माभिरपि तदुपन्यस्ताधारोपर्यैव निर्मातव्यम्। नैतावता तदुक्तं वा तत्कृतं वा सर्वं याथातथ्येन अनुसर्तव्यमिति तात्पर्यम्, यतस्तत् अस्माकं तदानीन्तनजीवदशायां कस्यांचिद् उचितमासीत्, न त्वधुनोचितं भवति। परिवर्तमानपरिस्थित्यनुरोधेनास्माभिरपि स्वात्मविपरिणामः कार्यः, आधारभूता मार्गसूचका न्यायास्तु तथैव अनुस्यूततया भवितुमर्हन्ति।

९

राजकीयाक्रमणरूपेण इस्लाम्-मतं यदा भारतमाजगाम, तदा तेन विरोधोऽप्यानीतः। तस्य फलं द्विधा बभूव। एकतस्तद् हिन्दुसमुदायस्य यःस्वान्तस्संहरणरूपः स्वभावः तं पूर्वतोऽप्यधिकतया अवर्धयत्, अन्यतः कमपि नूतनम् अनिलागमं, नूतनान् भावांश्च आनिनाय, येन कारणेन कोऽपि प्रत्युज्जीवयिता प्रभावोऽपि बभूव। हिन्दुसमुदायः इयत्तया परिसमाप्तो भावनिकायो बभूव, यथा न बभूव भारतबुद्धेरेव प्रकृष्टं प्रसूत्यन्तरं बौद्धं मतम्। देशाद्बहिस्त आगता मुसल्मानाः स्वकीयमेव अवर्धिष्णु इयत्तया व्यवस्थापितं च मतमानिन्युः। एवं च द्वे परिनिष्ठिते स्वात्मविश्रान्ते मते मिथस्संमुखीबभूवतुः।

नैकमपि परमुन्मूलयितुं स्वात्मसात्कर्तुं वा पर्याप्तशक्तिकमभूत्। राजकीयः पराभवः अधिविद्यमधिधर्ममधिदैवमाक्रमणं नानिनाय। प्राचीनो भारतीयः संप्रदायः, श्रद्धा च, अद्यापि प्रबलः स्थिरश्च, नूतनाभियोगस्य पुरः प्रत्यवस्थातुं शक्तो बभूव। स्वकीयेन बलवताभिप्रायेण सह मुसल्माना आगताः, अतश्च यथा ततः पूर्वं येऽभ्यागताः तानिव एतान् सुलभतया भारतेन नात्मसात्कर्तुं पारितम्। न चैतैरपि भारतीयजनतायाः प्रातिस्विको मनोभावो विपरिवर्तयितुं पारितः। एवं च भारतीये मध्ययुगीये काले इयमासीत् महती समस्या—कथं नाम स्वात्म-परिपूर्णे स्वस्वदृढरूढमूलयुक्ते इमे द्वे मते स्वस्थमन्योन्यभावमुपचिनुयातामिति। अक्बर्सदृशाः प्रेक्षावन्तो नृपाः ददृशुः यदि कोऽपि समन्वयप्रकारः स्थाप्येत तस्मिन्नेव आयतेः प्रत्याशा भवितेति।

प्राचीनभारतीयानां दर्शनं, विश्वजनीना दृष्टिश्च, अद्भुततया सर्वदृष्टि-सहिष्णुशीलं बभूव, तथापि बह्वीभिः जातिभिः उच्चनीचसमूहैश्च तान् विभक्तान् अकरोत्। मुहम्मदीयानां च इयं नूतना संकटावस्था अभिमुखी सञ्जाता—कथं नाम परैस्सह समतयास्माभिः स्थातव्यमिति। यत्र ते गता देशान्तरेषु तत्र तेषां विजयस्तथा सर्वंकषोऽभूत्, यदेषा समस्या न प्रादुरासीत्। क्रिस्तुलोकेन सह तेऽभियुक्ता बभूवुः, तत्र गच्छन्तीष्वपि शताब्दीषु प्रश्नोऽयं न समाहितोऽभूत्। भारते मन्दंमन्दं समन्वयः कोऽपि उपाचीयत। किन्तु यावद् अयं समन्वयः परिपूर्येत, तत्पूर्वमेव अन्यादृश्यः प्रभावशक्तयो व्यापारिता बभूवुः। कर्मान्तमार्गेण वर्धिष्णवः पाश्चात्यजनसमुदायाः प्रबलीभवन्तः परोपरि स्वरूपत आत्मनि उत्कर्षं मन्वानाः स्वशासनाधीनान् अवमन्यमानाः पार्थक्येन अवर्तन्त। हिन्दूनां मुसल्मानानां चान्तरे यावान् पार्थक्यगर्तो यदा कदा वा बभूव, ततोऽपि महत्तरो बभूव मिथः शासकपाश्चात्यानां भारतीयानां च।

इदंप्रथमतया भारतदेशः विदूरस्थितविदेशेन स्वात्मसात्कृतः तच्छासन-क्रमाधीनो बभूव। प्रथमं ये भारताक्रमणाय भारतविजयाय च समाजग्मुः ते

भारतमेव स्वावासतयाङ्गीचक्रुः, न चान्यत्र बद्धदृष्टयो बभूवुः, मुख्येष्वंशेषु भारतीया एव ते जाताः। अद्य तु नूतनविधया किमप्याक्रमणमभवत्, यद्भारते रूढमूलं भवितुं नाशक्नोत्। एकतः आक्रान्तवताम्, अन्यतश्च प्रजानां—हिन्दूनां मुसल्मानानामन्येषां वा—मध्ये अनिर्भेद्यः प्राचीरो बभूव।

तथापि यः पाश्चात्यदेशीयो वैशाल्यशाली तत्त्वविचारः, ये च कार्मान्तिकपरिणामक्रमाः तेषां प्रभावेन भारतस्य मतिः जीवितं चाक्रान्तं बभूव। नूतना कापि राष्ट्रियभावना ववृधे, या विदूरवैदेशिकशासनस्य अनिवार्यतया विरोधिनी बभूव, स्वातन्त्र्यं च प्रार्थयामास, या च तथापि तस्यैव पाश्चात्यखण्डस्य भाषया, साहित्येन, पद्धत्या तदीययन्त्रमयजीवयात्राप्रक्रियया च क्रमेण अधिकाधिकमधिवासिता बभूव। इदं पाश्चात्यवासनाधिवासनं च प्रायो जनतायाः ये प्रमुखा वर्गाः तन्मात्रविश्रान्तं बभूव; यश्च प्रभूतो भागः सामान्यजनात्मकः स पूर्वतोऽप्यधिके दारिद्र्ये निममज्ज।

राममोहनराय आजगाम, येन प्राचीनभारतस्य नूतनमार्गाणां च कोऽपि समन्वयो मार्गितः। प्राचीनभारतीयतत्त्वविचारस्य या ऊर्जस्विता बभूव, तामेकदेशत आनाय्य आधुनिकनेपथ्येन प्रसाधयामास विवेकानन्दः। राज्यतन्त्रविषयकाः संस्कृतिविषयकाश्च प्रयत्नविशेषाः प्रारोहन्, ये गान्धेः रवीन्द्रनाथठक्कुरस्य च प्रादुर्भावे पर्यवसन्नाः।

ऐरोपाखण्डे सांप्रदायिकमतस्य आधुनिकविज्ञानस्य च कठोरस्समरो ववृते; क्रैस्तवः सृष्टिक्रमः वैज्ञानिकदृष्टिभिः सर्वथा सामरस्यं नाभजदेव। भारते तु आधुनिकं विज्ञानं तादृशं विरोधभावं नोदपादयत्। स्वमूलभूततत्त्वानां स्वरूपबाधं विनैव तद् विज्ञानं भारतीयदर्शनेन अभ्युपगन्तुं सुशकमभूत्। सामाजिकी व्यवस्थितिः परम् आधुनिकैः प्रसरैस्सह पदेपदे अघटमानमभूत्।

यथान्यत्र तथा भारतेऽपि द्वौ वेगौ अवर्धेताम्—राष्ट्रियभावनायाः प्ररोहः, सामुदायिकसमत्वसम्पादने त्वरा च। संभूयकरणवादः मार्क्सीयस्साम्यवादश्च

सामुदायिकसमत्वत्वराया अस्याः प्रतीकौ बभूवतुः। तयोर्वादयोर्यस्तत्त्वार्थस्स तिष्ठतु नाम, सामान्यजनानां तु हार्दी अभिरुचिरेतयोरुत्कटा बभूव। ऐरोपाखण्डस्य पश्चिमभागे यन्त्रायोजनप्रारम्भकाले या भीकरी सामाजिकी समवस्था आसीत्, तया प्राधान्येन मार्क्स्महाशयः प्रणुन्नहृदयोऽभूत्। तदानीं राष्ट्रस्य यथार्था जननायकप्रक्रिया कापि नासीत्, विधिपूर्वका विपरिणामाश्च दुष्करा एवाभूवन्। ततः परिस्थितिभेदाय परिवर्तमयी हिंसैव एकं मार्गं ददौ। ततश्च मार्क्सीयो वादः तीव्रं हिंसानुगतं परिवर्तमार्गमेवाभ्यचिन्तयत्। एतादृशः परिवर्तश्च ऐरोपाखण्डे संप्रदायसंप्रतिपन्न आसीत्। समनन्तरकाले तु तत्र राष्ट्रिया जननायकनीतिः प्रसृता, यया सह शमप्रधानो विपरिणामश्च संभावितोऽभवत्। महती वैज्ञानिकी कार्मान्तिकी च प्रवृद्धिरपि सञ्जाता, यया प्रापञ्चिकोऽभ्युदयः सर्वेषामेव हस्तमानीतः। ये मूलधनस्वामिनः तेषां कार्यप्रकारेषु संप्रति महान् विपरिणामस्सञ्जातः, यद्यपि तत्स्वरूपभूता अंशास्तथैव वर्तन्ते, व्यापारे तत्तत्स्वायत्तीकर्तुम् आर्थिकीं शक्तिं स्वेषु क्रोडीकर्तुं च प्रवणा भवन्त्येव ते। राज्यतन्त्रस्य सार्वजनिकता, कर्मकृतां नियमव्यवस्थितयः, सर्वस्योपरि समाजे सर्वस्यापि समभागितासंपादनेच्छा, वैज्ञानिकी यान्त्रिकी चाभिवृद्धिः, एतेन सर्वेण स्वामितायां दृश्यमानो विपरिणाम एष आपादितः। स्वामित्वप्रक्रियायामेव वर्तमानान् देशान् वयमद्य पश्यामः, यत्र सर्वप्रजासाधारणी जीवयात्रारीतेरुच्चता संपादिता वर्तते।

(नाशितस्वामित्वनीतौ) सोवियद्राज्यसमष्ट्यां च आर्थिकयोगक्षेमस्य महतीमभिवृद्धिं, यान्त्रिकवैज्ञानिकविस्तृतिं च पश्यामः, या देशान्तरापेक्षया स्वल्पेनैव कालेन साधिता। प्राधान्येन हिंसया संपादितमिदमिति वचनं न समीचीनं भवति। तन्त्रान्तरेष्वपि यावत्संभवं हिंसा अभूदेव। तथापि मन्ये, परिस्थितिविशेषस्य हेतोः, सोवियत्समष्ट्या अभिवृद्धौ हिंसाबाहुल्यमनभीष्टपुरुषनिष्कासनवधादिकं च समन्वितमभूत्। एतादृशायाः हिंसायाः प्रबलतया धिक्कारः सोवियद्राज्यनेतृप्रमुखैरेव कृतः।

६

सर्वदेशीयपरस्परव्यवहारा अद्य पाश्चात्यराज्यानां कम्यूनिस्ट्-राज्यानां च मध्ये समुद्भूतेन विरोधेन, विशिष्य अमेरिक-राज्यसमष्ट्याः सोवियत्समष्ट्याश्च मिथ ईर्ष्यया, परं समाक्रान्ताः। तथापि सत्स्वपि आपाततो विरोधेषु, अनयोरतिमहतो राज्ययोराश्चर्यावहं साम्यमप्यस्ति। उभाभ्यामपि औद्योगिक-यान्त्रिक-नागरिकता उच्चकोटिं यावदभिवर्धिता; उभयोरपि वर्तते श्रद्धा यन्त्रस्य निरन्तर-वर्धिष्णौ शक्तौ, तस्य मनुष्यसमस्यासमाधानशक्तौ च। उभयत्रापि जनताः सौहृद-शीलाः, आतिथेयाः, शमासक्ताश्च। अद्यत्वे वस्तुतो भेदस्तु संपत्तिमतां देशानाम् अद्याप्यपर्याप्तसंपत्तिकानां देशानां च मध्ये भवति। य एतेऽनन्तरोद्दिष्टा देशाः तेषामयं बोधस्समायातः, यद् वैज्ञानिक-औद्योगिकप्ररोहेणैव पुरः प्रसारविशेषः साधयितुं शक्यः, या च उत्कटा प्रापञ्चिकी अस्वस्थता तान्बाधते ततः स्वान् मोचयितुं च शक्यमिति। तस्मै फलायैव ते यतन्ते, सिद्धिस्तु पूर्णा अपूर्णा वा भवति; कष्टं हि तत्कार्यं भवति। ऐरोपाखण्डे साक्षाद् राज्यपरिवर्तात् पूर्वम् आर्थिकव्यवहारेषु परिवर्तस्समजनि; अतश्च यदा राज्यपरिवर्तस्समापतितः तदा अपेक्षिताः काश्चन सामग्र्यः आर्थिकपरिवर्तैः संघटितपूर्वा आसन्। आशियाखण्डे तु राज्यपरिवर्तः प्रथममागच्छत्; सद्य एव तमनुपतन्ती समागच्छत् सामाजिक-समुद्धारप्रार्थना, याम् आर्थिकदुस्थितेः सामग्र्यभावस्य च हेतोः पूरयितुं सुशकं नाभवत्। समृद्धिरहितानां देशानां समस्याः महता प्रमाणेन वस्तूत्पादनाय साधन-कलापं प्रतिष्ठापितवताम् औद्योगिकधारारूढानां देशानां समस्याभ्यो विभिन्नाः। येन द्राघीयसा मार्गेण ऐरोपाखण्डः अमेरिकाखण्डश्च यान्त्रिकोद्योगपरिष्कारं प्राविशतां, तेनाध्वना एतैरद्याप्यसंपन्नैर्देशैर्न गन्तुमुचितमिति स्पष्टम्। प्रजानामुत्कण्ठाः पूरयितुं यदि न किञ्चिद्दीयते, सामाजिक उपमर्दो यो निरन्तरं वरीवर्ति तेन राज्याङ्गपरिस्थितिरधरोत्तरीक्रियेत। इदमपरम्-यद्यदधिकतया वस्तुजातमुत्पाद्यते तद्ध्रस्वराणाम्, उपरितनाभिवृद्धये नीवीत्वेन न्यासाय अवशोषणाय वा अवकाशमददतां प्रसभमभिवर्धमानसंख्याकानां प्रजानां संबाधः। एवं च पर्याप्त-

संपत्तिमनधिगतवतां दारिद्र्यहतानां च देशानामियं प्रथमा समस्या—कथं पुरस्ताद् भूयस्यै समुत्पत्तये नीवीनिर्माणाय चापेक्षिताः शिष्टोच्चयाः उत्पादिता भवेयुरिति। एतदर्थके एकैकस्मिन् प्रयत्ने प्रजोपर्येव पतितो भारः महत्तरो भवति; तथापि एता एव प्रजाः वर्तमानेभ्यो भारेभ्यो निवृत्तिं प्रार्थयन्ते।

बलात्कारमया उपायाः अवलम्बितुं शक्याः। किन्तु अन्ततो गत्वा विविच्यमाने, बलात्कारोऽपि जनतानां विषये न दूरं गन्तुं शक्नोति, यदि न स आयतिप्रत्याशया असहकृतः। एवं च, तत्त्वतः, प्रबलतरप्रयत्नोन्मुखतया प्रोत्साहनं सर्वथा देयं, साधयितुं शक्यं किमप्युद्देश्यं च जनतायाः पुरो निधेयं, येन तासामायतेराशा भवति। सा चायतिः न महति दूरे भवितुमर्हति। जननेतृत्वलक्षणे समाजे एतादृश्या आशायाः प्रोत्साहनानां च समर्पणेन जनान् प्रबलतरव्यवसायार्थमुत्तेजयितुं या शक्तिः तस्यां सर्वमायतते; आयतते च प्रजानामवस्थायाः क्रमिके समुन्नमने।

असमृद्धेषु देशेषु भारतदेशः प्रायोऽन्येभ्यः सर्वेभ्यः समृद्धतरो भवति। गतेषु कतिपयेषु वर्षेषु, औद्योगिकायोजनार्थमपेक्षितमाधारं निर्मातुं कृषिपरिष्करणेन, विद्यारोग्ययोरभिवृद्ध्या च ध्रुवं पुरःपदमस्माभिर्निहितम्। परन्तु सर्वोत्कृष्टतया भारतस्य स्वातन्त्र्यमापादितवता राष्ट्रियव्यवसायेन व्यवस्थापितैः लक्ष्यैः विनयप्रकारैश्च समर्पितोऽधिको गुणो वर्तते। अद्यापि आशियाखण्डे राष्ट्रियभावनैव बलवत्तमा शक्तिर्भवति। अस्या भावनायाः अभिवृद्धिः स्पष्टैव। ऐरोपाखण्डेऽपि एषा क्रमेणाधिकं प्रकटा भवन्ती दृश्यते। फ़ासिस्ट्-नात्सी-रूप-एकाधिपत्यमन्तरेण अभवदेव घोरा सा राष्ट्रियभावना। तस्मिन् भये प्रतिहतेऽपि, तदपेक्षया मृद्व्याः, तथापि उद्धतायाः कस्या अपि राष्ट्रियभावनाया अद्यापि अधीनैव बहूनां राष्ट्राणां नीतिर्वर्तते। ऐरोपाखण्डे बहुषु देशेषु, लघुतरया मात्रया वा अधिकतरया मात्रया वा इयं प्रकटैव। इयं गतिस्तत्र ऐरोपाखण्डे स्वप्रतीपेन स्वराष्ट्रातिलङ्घिना ऐक्यात्मकेन गत्यन्तरेण सहभावेन वरीवर्ति, यस्य गत्यन्तरस्य प्रतिनिधित्वेन दृश्यन्ते सामान्यायाः

क्रयविक्रयभूमेः सामान्यानां बहूनां संस्थानां च अभिवृद्ध्यर्थं समाहृतेषु प्रयत्नेषु ।

कम्यूनिस्ट्-देशेषु च राष्ट्रियभावना दृश्यत एव । सोवियत्समष्टिरपि मार्क्स्-महाशयस्य भावैः तदनन्तरसञ्जाताभिप्रायप्रभेदैश्च निकाममधिवासिता प्रबलं राष्ट्रियभावनांशं बिभर्त्येव । अन्येषु पौरस्त्यैरोपादेशेषु राष्ट्रियभावनाया वेगः विशद एव । चीनेऽपि सर्वसाम्यवादः राष्ट्रियभावनामेव आधारत्वेन धत्ते । यत्र यत्र सर्वसाम्यवादोऽनुष्ठाने वर्तते, तत्र तत्र तस्य बलम् अंशतो राष्ट्रियभावना-समन्वयादेवायाति । यत्र उभयम् असहयोगि वर्तते, तत्र सर्वसाम्यवादो दुर्बल एव, यद्यपि असमृद्धिमत्सु दारिद्र्यहतेषु च देशेषु, या वर्तते असन्तुष्टिः तद्रूपमयमादधाति ।

विदेशाक्रमणाधीना ये देशाः तत्र राष्ट्रियप्रेरणा अनिवार्यतया स्वातन्त्र्य-प्राप्तिसमररूपं गृह्णाति । प्रबलेषु स्वतन्त्रेषु देशेषु, सा किञ्चिदिव विदेशेषु प्रसरण-प्रवणा भवति, यद्यपीदं प्रसरणं प्रतिकूलैः प्रवृत्तिविशेषैः किञ्चिदिवोपरुद्धं भवति ।

७

एवं च ऐरोपाखण्डे अन्यत्र च यथा दृश्यन्ते तथा विपुलतरमैक्य-संपादनं प्रति याः प्रेरणाः, सांप्रदायिकराष्ट्रियभावनाप्रतिनिधिभूताश्च याः केन्द्रतो विभिद्य विशकलीभावुकाः शक्तयः, एतयोरुपमर्दमद्य पश्यामः । महती वैज्ञानिकयान्त्रिकाभिवृद्धिः, विशेषतस्सञ्चारवार्ताधिगमोपायघटनाः विपुलतरैक्य-संपादनं प्रति बलवन्नयन्ति । आधुनिकजीवनाधारभूतवस्तुतत्त्वरूपं यद् विज्ञानं तदस्मिन् विषयेऽन्यत्र च अन्ततो विजयीभविष्यतीति सम्भावयितुं शक्यते । वास्तविकं भयं तु राष्ट्रियभावनाप्रयुक्तविरोधेभ्यो भवति, ये युद्धोन्मुखा भवेयुः ।

अद्य लोके यानि प्रधानानि राज्यस्थितिदर्शनानि तेषां परस्परमन-भिव्यक्तो युद्धमयो व्यवहारो यो दृश्यते, तेन ईदृशस्य विरोधस्य संभवो बहुली-

क्रियते। दर्शनानां परस्परभेदकल्पनाया अधःशयानं वर्तते महतां राष्ट्राणाम् अन्योन्यभीतानां राज्यीयं सापत्न्यम्। कम्यूनिस्ट्-देशानाम् अतथाभूतानां देशानां च मध्ये मौलिकाः प्रेक्षाभेदाः, तथा आर्थिकनीतौ स्वातन्त्र्यविषये राज्यस्वरूपे च भेदाः वर्तन्ते। लेशतोऽमी भेदाः ह्रासमुपगताः, प्रायः क्रमेणेतोऽपि ह्रासशीला भवेयुः, एतयोर्यदन्तरं विस्तृतमगाधं च भाति, तच्च संकोचमियात्। दर्शनविशेषेण मानवजीवनप्रक्रिया विपर्यासिता भवतीति न; वैज्ञानिकयान्त्रिकाभिवृद्धिर्हि निरन्तरं सामाजिकीनामार्थिकीनां च परिस्थितीनामाकारान् वर्तयति। उपयोगः कर्म च रूपमभिनिर्वर्तयति। एवं वास्तुशिल्पे वर्तते; अन्ततो गत्वा सामाजिकपरिस्थितिष्वपि इदं तुल्यमेव, तस्याः परिस्थितेः स्वरूपमर्थक्रियाकारितामनुसरति। अर्थक्रियाकारिता च निरन्तरं विज्ञानेन यन्त्रेण च विपर्यस्यमाना दृश्यते। ततः सामाजिकपरिस्थित्या च अवशाद् एतासां नूतनानामर्थक्रियाकारितानामानुरूप्येण स्वात्मानं विपरिणमयन्त्या भाव्यम्।

एवं च सांप्रतिकजीवनक्रमे सारभूतो विपरिवर्तापादकश्च अंशः न दर्शनविशेषो भवति, किन्तु यान्त्रिकाभिवृद्धिः। यत्र कर्मान्तविपरिणामो मन्दः, तत्र प्राचीनपरिस्थितिरूपमनुवर्तते। स्वल्पाभिवृद्धिकः पृष्ठवर्त्येव यः समूहः, तस्य रूपं परिस्थितिश्चापुरोगाम्येव भवति, आधुनिकवैज्ञानिकयुगेन सह तस्य समूहस्य योजनं न सहते। जीवयात्रायाः तात्त्विका अर्थाः न प्रतिषेद्धुं शक्याः, आगन्तव्यमेव विपरिणामेन, स्वपृष्ठपातिभिः फलान्तरैस्सह। स च विपरिणामः कदाचित् सपदि संपद्यमानः अधरोत्तरकारी च जातः; किन्तु अन्यथापि, मन्द-वेगेनापि, ते विपरिणामा आयान्त्येव।

जननायकराज्येषु, यत्र तरुणस्य सर्वस्य वागस्ति, यत्र च जनसभा-निर्णीयमानं शासनं प्रवर्तते, अर्थक्रियाकारितायाः तथा परिस्थितिरूपस्यापि कियदिव विपरिणाममापादयितुमुपायः परिकल्पितोऽस्ति। किन्तु चिरात् सुप्रतिष्ठितानि परिस्थितिरूपाणि रूढमूलाश्च स्वत्वभावनाः विपरिणामं तावत्काल-मुपरुन्धन्ति यावता कालेन वस्तुगत्या स विपरिणामो हठादेव तेषामुपरि

पात्यते। आधिदैविकम्, आधिवार्तिकम्, आधिसामाजिकं वा तद्भवतु, यत् परिनिष्ठितं तत् सततं विपरिणामरोध्येव भवति।

८

जीवितं नाम विपरिणामिनामवस्थाविशेषाणामानुरूप्येण घटमानतया निरन्तरं योजनम्। राजकीयायाः आर्थिक्याः सामाजिक्याः एकैकस्या अपि व्यवस्थितेरस्ति कोऽपि नियमप्रकारः। अस्ति मतसम्बन्धी नियमः, समयाचारस्य च, अत्र चान्तर्भवति सदाचारविषयकः आध्यात्मिकश्च विनयप्रकारः। अर्थक्रियाकारितासु व्यवस्थितिषु च विपरिणमन्तीषु, प्राचीना नियमप्रकाराः दुर्बला भवन्ति, क्रमेण च ते नूतनानां नियमानां स्थानं ददति। गतायामर्धशताब्द्यां संवृत्तस्य यान्त्रिकविपरिणामस्य रंहसा सामाजिकपरिवर्तस्य आवश्यकता संप्रति भूयस्तरीकृता; सततमसमीचीनैव संघटना संभूता। प्राचीने काले जीवितं सरलतरमासीत्; प्रकृत्या समवेततरं च; आसीदवकाश आलोचनस्य ध्यानस्य च। अद्य तु जीवितं क्रमशो भूयसा जटिलीभूतम्; निष्पन्दं मननं क्रमेण न्यूनीभवति। अवकाशे वर्तमानेऽपि, तदा किं क्रियतामिति जनो न जानीते।

विश्रामावकाशः कथमुपयुज्यतामिति एषा समस्या क्रमेण समृद्धिसंपन्नेषु देशेषु प्रमुखतामासादयति, यद्यप्येषा भारतदेशं संप्रति न आयासयति, न वायासयिष्यति उत्प्रेक्षागोचरायामायत्याम्। प्रकृतितो व्युच्छिन्नस्य भूयसा यन्त्रोपायपराधीनीभूतस्य जीवितस्य रसो नश्यति, अर्थक्रियाकारि तद्भवतीति संवेदनेनापि तत् त्यज्यते। सदाचाराध्यात्मनियमा भिद्यन्ते अभिनिवेशनाशोऽनुपतति, जायते च भावना सभ्यतायामस्माकं किमप्यवद्यमस्तीति। केचन प्रकृतिं प्रति निवर्तनं वदन्ति, प्राचीनकालिकं सरलतरं जीवितं प्रति च। किन्तु तादृशे जीविते यो वा को वा गुण आसीत्, स्फुटमेतत् यन्न कापि प्रतिनिवृत्तिः शक्या, अतो जगदेव विपर्यस्तम्। प्रत्यक्तया कोऽपि मनुष्यः सन्न्यासं स्वीकुर्यात्, जीविताच्च प्रव्रजेत्, किन्तु न क्षममेव जनसमुदायेन

केनापि सामस्त्येन तथा कर्तुम्। जीवितस्य यथावत्तत्समस्याभिस्तत्सङ्कटैश्च साकमभ्युपगमनं यत्, तदाधारीकृत्यैव जनसमुदायो भवितुमर्हति, तादृशं च जीवितं यावच्छक्यं सार्थकं च कर्तुमर्हति। यद्येवं न करिष्यति, तन्नङ्क्ष्यत्येव।

वैज्ञानिकयान्त्रिकाभिवृद्ध्या जगतः प्रायः सर्वा आर्थिकसमस्याः समाधातुं शक्या इति, विशिष्य जगति सर्वत्र एकैकस्यापि जीवनाय मौलिकं यद्यदपेक्ष्यते तद्दातुं च शक्यमिति निश्चयस्साधितः। प्रतिजानाति चैषा अभिवृद्धिः उदात्ततरजीवितप्रकाराः सांस्कृतिकाभिवृद्धिमार्गाश्च कालेन भविष्यन्तीति। सर्वयोगक्षेमसंपादनोद्देश्या या राज्यप्रक्रिया, या वर्गविभागविहीना च समाजप्रक्रिया, एते संप्रति न केवलं सामूहिकवादनिष्ठाया एवोद्देश्यभूते किन्तु प्रातिस्विकस्वत्वोच्चयनीतिनिष्ठितानामपि देशानाम्, यद्यपि सरणिरुभयत्र भिद्यते। एवं मौलिकानि उद्देश्यानि परस्परमासन्नतराण्यागच्छन्ति, उपायभेदेनापि तानि उद्देश्यानि अधिगन्तुं शक्यन्ते। उपायाश्चैते न केवलं केषुचिद् युक्तिवादेष्वायतन्ते, किन्तु आयतन्ते ते तस्य तस्य देशस्य जनसमुदायस्य च भौगोलिके, ऐतिहासिके, धार्मिके, आर्थिके, सामाजिके च सन्निवेशविशेषे, संस्कृतिप्ररोहप्रकारे च। यः कोऽपि यथार्थः परिवर्तः स हठादध्यारोपयितुं न शक्यः; स तु स्वयंप्ररोही भवितुमर्हति। देशविशेषः, तत्रापि प्राचीननागरिकतासंपन्नः, भूते सुरूढदीर्घमूलो भवति; स च महान्तमपायं विना नोद्धर्तुं शक्यते, यद्यपि तत्रत्या असत्यभूताः नाल्पप्रायाः प्ररोहाः अपकारावहजीर्णाचारव्यवस्थारूपा उत्खातुं शक्याः, उत्खातव्याश्च। यथा च प्रकृत्या किमपि सामरस्यं प्रतिष्ठाप्यते, तच्चानिष्टापत्तिमन्तरा न सद्यो विपर्यासयितुं शक्यते, एवमेव च जनसमुदाये देशे च प्राचीनजीवितपद्धतीनां सद्यो विपर्यासनं न सुकरं, न वा कर्तव्यतया इष्टम्। समस्यायाः कस्या अपि एवंविधं समाधानम् उत्कटतराः पूर्वतोऽपि कष्टतराः समस्याः प्रति अस्मान्नेष्यति।

एतच्च गोचरयति अस्माकं जीवयात्रास्पदीभूतं बाह्यं प्रपञ्चम्; मनुष्याणामाभ्यन्तरं जीवितं तु ततोऽप्यधिकतया गोचरीकुरुते। ये प्रायो यथाजाता

असंपन्नसंस्काराश्च जनसमाजाः तानधिकृत्य क्रियमाणेषु अभ्युद्धारव्यवसायेषु इदं सुष्ठु विदितं, यद् विपरिणामार्थं अतीव सहसा क्रियमाणः प्रयत्नः अत्यनिष्टोदर्कतया पर्यवसित इति । संस्कारसंपन्नास्समाजाः सहसापतितेन विपरिणामेन न तथा बाध्यन्ते । परन्तु अप्रेरकप्रयायिणां यन्त्राणां युगे आगामिनि आकाशयात्रायुगे च कीदृशाः जीवशरीरेष्वेवान्यत्र च विपरिवर्ताः संभवेयुरिति न कोऽपि वेत्ति ।

बाह्ये विषये यद्येवं स्यात्, तत इतोऽपि महत्तराः विपरिणामाः मनुष्यस्य मनसि, भावेषु, आत्मनि च नूनं संभवेयुः । अद्य, इदंप्रथमतया मनुष्यचरित्रे मनुष्येण स्वव्यवहारेषु स्वव्यवस्थासु च विपरिणामं नित्यसिद्धसहचरतयाभ्युपगम्य जीवितव्यं भवति । यत्सत्यं समापतता विपरिणामेन सह समानवेगतया तेन न गन्तुं पार्यते; विज्ञानयन्त्रोत्पादितानि करणानि उपयुञ्जानोऽपि नैव तान्यवबुध्यते । सर्वांशसामञ्जस्येन समष्टीभूता यथा पुरुषाः संपद्येरन् तथा तानभिवर्धयितुं, समाजे उपयुक्तान् व्यापारान् यथा युवानोऽनुतिष्ठेयुः यथा च संभूयक्रियमाणे जीवितव्यवसाये ते भागिनो भवेयुः तथा तान् सज्जीकर्तुं च विद्याविनय उद्दिष्टः । तस्मिंश्च समाजे प्रत्यहं विपरिवर्तिनि, कथं सज्जीक्रियतां, किं लक्षीक्रियतामिति दुर्बोधं भवति । अत्यन्तं यन्त्रनिष्ठा या समाजसंस्कृतिः, ये च प्राचीनाः सामाजिकजीवितप्रकाराः, तदाधारभूतं च यदध्यात्मदर्शनं, एतयोर्मध्ये सामरस्यं नास्ति । प्रकृत्या सह संबन्धो विपरिवर्तते, स्वात्मना सह संबन्धोऽपि विपरिवर्तमनुभवति । यन्त्रमये समाजे पुरुषगौरवं ह्रासं गच्छति । प्रत्येकः पुरुषः जनतायां नष्टात्मा भवति; केवलं समुदायस्य सर्वस्य अनवरतं सामाजिक-आर्थिक-अभिवृद्धिं लक्षीकृत्य परिकल्पितायां जटिलायां कस्यांचित् व्यवस्थितौ क्रमेण किमपि करणत्वमुपगच्छति ।

प्रत्येकस्य पुरुषस्य परिपोषं स्वातन्त्र्यं च भूयसा वयं बहुमन्यामहे । एतं च परिपोषक्रमम् उपकुर्वन्ति अथवा उपघ्नन्ति तत्तत्प्रेक्षाप्रयुक्ताः दृष्टिप्रकाराः । किन्तु यन्त्रमयता नाम प्रत्येकस्य आत्मनः गौरवापचये प्रबलतमं कारणं भवति ।

९

वेगतः समापतितानामेषां यान्त्रिकपरिवर्तानां फलानि पश्यामः, विशिष्य बालेषु बालिकासु च संप्रति। यूनां प्राप्तवयस्कानां च मध्ये या परस्परप्रतीपता तया पितरः, विद्याधिकारिणः समाजसेवासक्ताश्च व्याकुलिताः। वृद्धैरूरीकृता आचरणप्रक्रियाः नाद्याभ्युपगताः; प्राचीना साध्वाचारमर्यादाः तिरस्कृताः। काष्ठागतानां केषाञ्चन विषये स्तेयाभिघातादिकं, मद्यपानं, तत्तन्नाशनोत्साहः, कामुकता—इत्येतत्प्रावण्यं दृश्यते, दृश्यते च जीवितमन्तरेण कर्तव्यमुद्योग-मन्तरेण च श्रद्धावन्ध्यता सर्वानभ्युपगमशीला निषेधबुद्धिश्च। निरन्तरविपरि-वर्तमये प्रपञ्चे, किमपि अस्ति भविष्यतीति प्रतिज्ञाया निश्चयस्य चाभावे, जीवितसुखास्वादप्रधानाः प्रक्रियाः बलवदाकर्षन्ति। राष्ट्रियसंस्कृतेः अनुस्यूते-रापदायाति, समाजस्य शकलीभावप्रसितता च प्रकटा भवति।

इयमत्युत्कटसंभावनाप्रयुक्ता दृष्टिस्स्यात्, यच्चाद्य संभवति तस्य नेदं न्याय्यं तोलनं भवेत्। किन्तु नात्र कोऽपि सन्देहः यदेता वस्तुगतयः वर्तन्ते; वर्तन्ते च भारतापेक्षया अपर्याप्ताभिवृद्धिकदेशान्तरापेक्षया च अधिकतया अभि-वृद्धेषु प्राप्तसंपत्तिषु च समाजेषु। तथापि तासाम् अवधारणं मुख्यं भवति, यतः तादृशानां वेगानां बाधा अस्मज्जीवितेऽपि संभविष्यति। स्यादेवम्—एतत्सर्वं तरसोपगतसङ्क्रमणयुगस्य अवश्योदितं फलं भवति; संस्कृतेरेव नूतन आधारः, यन्त्रेण सह घटमानः, क्रमेण निर्मितो भविष्यति, भविष्यति च तेन सह नूतनाः प्रेक्षाः, प्रतिनवाः संभूयजीवितप्रकाराः, जीवितस्यैव विशालतरं दर्शनम्।

किमयं वर्तमानमधिकृत्य अतिनैराश्यप्रयुक्तोऽभिप्राय इति न जाने। भारते वा लोके वा संभवद्भिर्व्यतिकरैर्मयि समुत्पादितः संस्कारस्तु न नैराश्यमयो भवति, कापि श्रद्धा, विभक्तुं व्याख्यातुं वा मम न क्षमा, आयतिविषये प्रत्याशया मां पूरयति। भूयसा मे प्राप्तस्य सुदिष्टस्य स्यादेतद् कारणात्। भारतीयजनानां महत् प्रेमैव उत्कृष्टतमं मे भाग्यं संपन्नम्; किन्तु यदाहं देशान्तरं गतः तदापि

सर्वत्र जनेभ्यः सौहार्दं हृदयाह्लादकराणि प्रत्युद्गमनानि च प्रापम्। एवमहं अस्मज्जनेषु महत्प्रेम, श्रद्धां चोपाचिनवम् , देशान्तरजनान् प्रति च गौरवबुद्धिं प्रीतिं च। यद् ददाति कोऽपि, तत्स प्रतिगृह्णाति इति मया साक्षात्कृतम्। प्रीतौ समर्पितायां सा बहुगुणिता प्रत्यागच्छति ; यदि द्वेषः, तदा तं प्रतिलभामहे। सर्वत्र जनाः शान्त्यै, सौमनस्याय, सहयोगाय चोत्कण्ठन्त इति मया दृष्टमनुभूतं च। यद्येतदेवं, यथाहं विश्वसिमि, तदा विग्रहात्सहयोगं प्रति, युद्धचिन्तातः शान्तौ कर्तुं शक्याः कृतीरुद्दिश्य च कार्यस्रोतसो निवर्तनं शक्यं भवितुमर्हति।

भयं नाम, मन्ये, प्रायोऽत्युत्कटमघं भवति, यतो विरोधो हिंसा च भयादेव उत्पद्येते। हिंसा भयस्यैव प्रतिफलनं भवति, एवमेव चानृतम्। अस्माकं प्राचीनेषु ग्रन्थेषु अभिहितम्—दानेषु उत्तमं दानम् अभयदानमिति। भयविरहितः पुरुषः वस्तूनि समीचीनया दृष्ट्या प्रेक्षितुं, मनःकर्मणोः किमपि ऐक्यमपि संरक्षितुं शक्नोति। अद्य भयं विश्वं व्याप्नुवद् , अवलोकयामः महत्तमानि बलिष्ठानि च राष्ट्राणि भयेन बाधितानि। धनं बलं च भयांशं न केवलं न तनूकुरुतः, प्रत्युत तं साक्षाद् वर्धयतः। वीतरागान् लोकोत्तरपुरुषांश्चापहाय न केनाप्यस्मासु मुक्तसर्वभयेन भवितुं शक्यम्। किन्तु एतम् उद्देशं पुरो धारयितुं तत्साधने प्रयतितुं चास्माकं शक्यम्। गान्धिना भारताय दत्तेषु इदमेव उत्कृष्टतमं-जनेषु भयात्मकस्य भावस्य लघूकरणं नाम।

अभयाद् दया क्षमा च भवति। बुद्धं यदा स्मरामः तदा तदीयानुकम्पास्मान् आक्रम्य विवशयति ; अशोकं यदा स्मरामः अद्भुतस्तदीयोऽद्वेष एव संकुचितेभ्यो मतेभ्योऽस्मान् अभ्युत्कर्षति।

राष्ट्रान्तः, मिथो बहूनां राष्ट्राणां मध्ये च, जनजातिं मतं श्रद्धाविशेषं समाजविभागं चान्तरेण सज्ञातैर्विग्रहैः लोकः परिपूर्णः। एषां विग्रहाणां निषेधो वा अवगणना वा अपार्थो भवति, परन्तु उपसर्तुम् अस्माकं ते शक्याः,- न विग्रहद्वारा, किन्तु सान्त्वमार्गेण येन ते समापयितुं शक्याः।

## १०

सार्वराष्ट्रिकदृष्ट्या विश्वशान्तिरद्य प्रधाना समस्या भवति। यानि महान्ति संकटानि, ये च कलहा अस्मान् व्याकुलयन्ति तेषां समाधानमस्यामन्तर्भवन्ति। समाधानं कथमेष्यति इति न मयैतत् वक्तव्यम्। किन्तु एतस्य समाधानस्य अधिगमाय कीदृशमुपायं वयमुपादद्महे, केन पथा प्रचरामश्चेति मनसि नः स्पष्टं निर्धारणीयमस्माभिः। इदं मुहुरुच्यते यदद्य वरणार्थं द्वयमेवेदं वर्तते—प्रायः सर्वनाशास्पदं युद्धम्, एतेषां प्रश्नानां किमपि सान्त्वपूर्वं समाधानं च। एते एव यदि वरणकोटी, तदा किं वरणीयमिति स्पष्टमेव। तस्मिन् वरणे कृते, इदमायाति यद् लोके परस्परमनस्तापवर्धकानि सर्वाणि वर्जनीयानीति। स्थिरनिश्चय एषोऽस्माभिरभ्युपगन्तव्यः यदद्य युद्धं सर्वथा बहिष्कार्यं, यतो नैव तत् प्रतिजानीते जयं वा तदुद्भवानि फलानि वा। ततः युद्धोपकण्ठे वासः, तत्प्रान्तवर्तित्वव्यवहरणं वा ज्ञानाभाव एव भवति। यद्यप्यस्माकमभिप्रायभेदो मिथो भवति, तथापि कोपाविष्टानि खण्डनानि धिक्करणानि च परिहरणीयानि; लोकस्य अर्धो भागो दुष्टो दोषाक्रान्तो वेति येन केनापि जनगणेन यद् वचनं तदपार्थमिति अस्माभिरवधेयम्। प्रत्येकधनस्वाम्यतन्त्रस्य प्रपञ्चस्य वा, सार्वजनिकस्वाम्यतन्त्रस्य प्रपञ्चस्य वा खण्डनं सुकरम्; किन्तु यद्येतयोरुभयोः बहवोऽपकर्षाः सन्ति, उभयोरपि महान्तो गुणाश्च सन्ति; सत्स्वप्यान्तरपरस्परविरोधेषु उभावपि एकस्यामेव दिशि प्रसरतः, उभावपि विज्ञानयन्त्राभिवृद्ध्यधीनव्यवहारा एव भवतः। एकैव गतिरस्ति-अद्य लोकं यथास्थितमभ्युपगत्यास्माभिः परस्परं क्षान्तिः उपचेया इति। परस्परव्यावर्तकानां मतानां ये प्राचीना विग्रहाः ते घोराणामायोधनानामनन्तरं क्रमशोऽशाम्यन्त, नूतना काऽपि क्षमा उपारुरोह। परस्परस्पर्धिनोः आर्थिकसामूहिकवादयोः मध्येऽपि क्षमा न प्ररोढुमर्हतीत्यत्र नास्ति किमपि कारणम्। अन्ततो गत्वा, साक्षाज्जीवयात्रासंबन्धिन्यो या वस्तुस्थितयः तद्वशौ तन्निर्णीतौ च वादावेतौ भविष्यतः। अन्येभ्यस्तत्तदधिजग्मुषः, न तु ततः कस्यापि हठारोपणमभ्युपगच्छतः, एकैकस्य देशस्य स्वीयेनैव

प्रकारेण स्वात्मानमभिवर्धयितुं स्वातन्त्र्यं भवितुमर्हति । अनया रीत्या एकैकापि दृष्टिः दृष्ट्यन्तरोपरि स्वप्रभावं प्रदर्शयिष्यति, स्वयं च दृष्ट्यन्तरस्य प्रभावमनुभविष्यति ।

राष्ट्रियभावना नाम जनानां निरामयोऽभिकाम्यश्च भावो भवति । उपरुद्धा सा तीव्रं वेगमुपजनयति । किन्तु अतिमहत्या प्रभुत्वशक्त्या समन्विता चेत्, सा भवेत् परप्रधर्षिका अतिमर्यादं स्वदेशाभिमानशीला च । अद्यतनयुगीना राष्ट्रियभावना विदेशीयाक्रमणकारिणाम् आधिराज्यानां जात्युत्कर्षभावनानां च प्रतिकाररूपेणोपजाता ।

बहुषु देशेषु अद्यापि स्वजातीयभावना विभिन्नैः प्रमाणैर्वरीवर्ति, किन्तु सा प्रायेण धिक्कृता । केवलं दक्षिणाफ्रिकाराज्ये सा राष्ट्राभ्युपगतशासनदर्शनत्वेन वर्तते । एषा घोरं विरोधस्यास्पदं भवतीति स्पष्टम्; अत्यन्तहेयरूपेण अन्याक्रमणेनाविष्टा सती, सा अवश्यमतिकटुं मनःखेदम्, अतितीव्रं प्रतिक्रियावेगं च जनयिष्यति । साक्षादभिघातरूपेण मार्गेण निर्णेतव्य एष विरोध इति यदवस्थापनं तदगतिकतया उपात्तो मन्त्रो भवति; किञ्च तदनुस्यूततयानीतानि विपत्तिमयानि फलानि भवन्ति; जातीयभावनाविषये तद्विरोधी लोकाभिप्रायः तथा बलवान् भवेत्, यथा न कस्मिन्नपि देशे जनसमूहे वा तस्याः प्रवादः आचरणं वा कर्तुं शक्यं स्यात् ।

यं कं वा प्रकारं गृह्णत् परदेशाक्रमणरूपमाधिराज्यं चाद्यतनजगति सर्वथा अनवसरं भवति; भवति च तद् विरोधबीजम् । बहुषु प्रदेशेषु तदद्यापि वर्तते, तत्प्रयुक्ता प्रेक्षा च बह्वीः बुद्धीः प्रभावयति । किन्तु तन्मतं धिक्कृतं सर्वत्र स्वसमर्थनव्यग्रं तिष्ठति । एवं च या सार्वलौकिकी नीतिः सा जातीयभावनायाः परदेशाक्रमणस्य च परिसमाप्तिसमानयनाय, तत्तद्राष्ट्रस्य स्वस्वदिष्टस्य स्वयमभिनिर्वर्तनस्वातन्त्र्यदानाय च भवितुमर्हति । कतिपयेषु देशेषु एतत् व्यवस्थानाशं व्याकुलीभावं च जनयेत्; किन्तु तत् सङ्कुचिततया स्यात्, विस्तृतान् प्रदेशान् न व्याकुलयिष्यति, किञ्चित्कालानन्तरं प्रायः स्वात्मानं

समीचीनयिष्यति च। एतदेवासमीचीनम्, आपदुदर्कं च भवत्यद्य, यद् एकस्य देशस्य देशान्तरोपरि स्वकीयाध्यवसायं हठादारोपयितुं प्रयतनम्।

भूते काले तद्धेतवो ये वा के वा भवन्तु, अद्य तु युद्धार्थं परैर्मैत्रीबन्धः मानसिको युद्धव्यवहारश्च अभयनाशाय युद्धभयाय च कल्पेते। देशानां स्वस्थतया अभिवृद्धिं वारयतः, लोकवातावरणं च दूषयतः। युद्धवासनामयो व्यवहारो यावद् वर्तते, तावदन्योन्यं क्षमा न भविष्यति। असंपन्नवृद्धीनां देशानामभिवृद्धये तज्जीवितगुणस्य उत्कर्षापादनाय च साह्यमकृत्वा, तत्स्थाने युद्धोपयुक्ता एव गणनाः व्याप्रियन्ते; प्रायश्च जनानामनभीष्टानि प्रत्यग्गतीनि च राज्याङ्गविधानानि उपष्टभ्यन्ते, एवं चाभयाभाव एव भूयः बहुलीक्रियते।

लोकस्य कष्टानि, विग्रहाः, दुराग्रहाश्च इन्द्रजालेन केवलश्रद्धोक्तिभिश्च निवारयितुं शक्यन्त इति सूचना तु वस्तुस्थित्यस्पर्शिनी भवति। किन्तु तत् सर्वथा वस्तुस्थित्यवगाहि स्यात् यदि परस्परद्रोहवासनाः शिथिलीकर्तुम्, अन्ततो युद्धसंभवं वारयितुं च कार्यक्रमः कोऽपि अभ्युपगमार्थमुपस्थाप्यते। अयं कार्यक्रमो मुख्यतः स्वानुरूपाभिः आर्थिकीभिः राज्याङ्गविषयिकाभिश्च नीतिभिरनुसृतः कोऽपि प्रतिनवो बौद्धस्समाधानमार्गो भवति। पञ्चशीलम्, अथवा पञ्चन्यायाः,—यदधिकृत्य एतावद् बहूक्तम्—, एतं मार्गमर्पयति; किन्तु बुद्धेरात्मनश्च यदि परिवर्तो भवेत्, तदैव सरणिरेषा तथ्या भवेत्, न तु निरर्थकशब्दविनिमयमात्रेण। शान्तिर्नाम न युद्धतः कायिक उपरमः, किन्तु सर्वस्मिन्नपि लोके शान्तिमयस्य वातावरणस्य निर्माणार्थं प्रयतनम्।

## ११

भारते सार्वदेशिकेषु व्यवहारेषु इयमेव नीतिरस्माभिरनुसर्तुं प्रायत्यत, यद्यपि सदा तथा कुर्वन्तो वयं सफला अभूमेति नाहं वक्तुं शक्नोमि। अन्ततो गत्वा, विदेशविषया नीतिः राष्ट्रस्य-स्वाभ्यन्तर-अवस्थासु कार्यप्ररोहेषु चायतते। अतश्च लोकव्यवहारेषु कार्यकरी भूमिका कापि अस्माभिर्निर्वोढव्या चेत्, तदा

आभ्यन्तरी वृद्धिरावश्यिका। इतोऽपि यत्सत्यं सा वृद्धिः अपेक्ष्यतेतरामस्माकमेव क्षेमाय।

प्रथमपञ्चवार्षिकयोजनातः परं, द्वितीययोजनायाः प्रथमवर्षद्वयानन्तरं च, बह्वीषु दिक्षु निश्चिता अभिवृद्धिरस्माभिः कृता, यासु काश्चन स्फुटाः, अन्या न तथा प्रकटाः। वृद्धिक्रमः यथास्माभिरिष्येत तथा कतिपयासु दिक्षु न त्वरिता जाता, किन्तु अस्माभिः स्मर्तव्यमिदं, यत् सा वृद्धिः सारवती सार्था च संपन्नेति। कृष्यां व्यापारोद्योगे च सा वृद्धिः प्रकटा; अन्ततो गत्वा अस्यामेवास्माकमायतिरायतेत।

अस्या अभिवृद्धेर्विद्याभ्यासो मूलम्; अद्य च आधारभूतशिक्षां प्रति, यान्त्रिकशिक्षां प्रति च बहु अवधानं दीयते। पाठशालाया महाविद्यालयस्य च पाठ्यक्रमान् कोटिशो बाला बालिकाश्च अधीयते, लक्षशश्च विश्वविद्यालयेषु यान्त्रिकशिक्षास्थानेषु च शिक्ष्यन्ते। एताश्च संख्या भारतीयप्रजासंख्यासु एकदेश एव, बहु कर्तव्यमवशिष्यते च। तथापि एताः संख्या उच्चा एव भवन्ति। पाठशालातः महाविद्यालयतश्च बहिरागच्छन्त एते स्वजीवितविषये नूतनां कामपि प्रेक्षामावहन्ति। एवं च शनैः, किन्तु अनिवार्यतया, सामूहिक्यः अस्माकं व्यवस्थितयः विपरिणमन्ति। महान् प्रायो महाविपरिवर्तकरः परिणामः स्त्रीणां विद्याभ्यासेन सम्भूतः। एता एव बालिकास्तरुण्यश्च भारतीयानां जनानां सर्वस्मिन्नपि जीविते कमपि संस्कारमाधाय्य क्रमेण च तत् विपरिणमयिष्यन्ति। सद्यस्तु विपरिणामा एते ग्रामापेक्षया भूयसा नगरेषु महानगरेषु च वृत्ताः, किन्तु अस्मद्ग्रामा अपि एतैश्चालिताः। कतिपयेषु वर्षेषु आधारभूतशिक्षाक्रमः पाठशालागमनयोग्ये वयसि तिष्ठतः सर्वानपि व्याप्स्यति।

अद्यतनविद्याक्रमं प्रति विमतिर्भूयसी उक्ता; तस्य केषांचनांशानां खण्डने प्रायस्सर्वे एव वयं भागिनः। तथापि तत्त्वमिदं स्थिरं तिष्ठति यद् विद्या जवात्प्रसरीसरीति, अस्मज्जीवफक्किकां विपरिणमयति च।

अस्ति च प्रजासंख्याप्रयुक्ता समस्या। लोक एव विश्वत्र विशेषेण व्यक्ता प्रजासंख्याया वृद्धिस्सञ्जाता, अनया वृद्धिधाट्या, अस्याः शताब्द्या अन्ते लोकप्रजासंख्या ३५०–५०० कोटिमध्ये भवेदिति प्रतीक्ष्यते। क्रि. २००० वर्षावधौ भारते एषा गणना ६०–६८ कोटिमध्यपातिन्यो भवन्ति। वृद्धिधारां कयापि मात्रया यदि वयं निग्रहीतुं शक्नुमः, तदा एषा संख्या अधमपक्षतः ६० कोटिर्भवेदिति प्रतीक्षामहे।

अस्यां प्रजावृद्धौ द्वावंशौ वर्तेते। तत्रैकोऽस्माकमत्यन्तं विचारगोचरं, यद् एषास्माकमार्थिकाभिवृद्धिमार्गे विघ्नायते, यच्चैषा अन्यासु दिक्षु यद्यपि वयमभिवृद्धिं भजामहे तथापि अस्माकं जीवितमात्रां नीचतायामेव स्थापयति। अंशान्तरं तु एषा अतितीव्रा लोकप्रजावृद्धिः लोकस्य उपकरणानां, व्यापारोद्योग-द्रव्याणां च भयंकरेण वेगेन घस्मरा भवति। अस्मिन् विषये यदि निखिलो लोकः, यथा अमेरिकराज्यसमष्टिः तथा व्यवस्यन् वर्तेत, तदा प्रायेण एतस्याः शताब्द्या अवसान एव यावन्ति अवश्यभूतान्युपकरणानि लोकेऽद्य उपलभ्यन्ते तानि कबलीकृतानि स्युः। किन्तु नूनं नैतत् संभवेत्; देशान्तरेषु द्रव्योपयोगवेग इतो मन्दतरो यद्यपि स्यात्, तथापि उपलभ्यमानानि उपकरणवस्तूनि कतिपय-वर्षशतकान्यतिरिच्य न भविष्यन्ति।

एवं फलितं कार्यद्वयमापतति—एकम्, अस्माभिः प्रजाभिवृद्धिधाटी निरोद्धव्या; अन्यत्, जीवितोपकरणकृते अन्य उत्पादकोपायाः अन्यानि वस्तुजातानि च अस्माभिर्मार्गितव्यानि। कदाचित् अणुशक्तिवृद्धिः अन्यान् उत्पादकोपायान् दास्यति। भारते प्रजावृद्धिनिरोधे वयं नितान्तं व्यग्राः, अयं च विषयः न केवलं मुख्यस्सञ्जातः, किन्तु आत्ययिकश्च।

## १२

नस्यस्माभिर्धार्ये आधारभूते द्वे वस्तुतत्त्वे स्तः। एकं विज्ञानयन्त्रद्वारा केषुचिद्राष्ट्रेषु अतिमहती वस्तूत्पादकशक्त्यभिवृद्धिः, तन्मूलं धनं प्रभुत्वं च।

अन्यत्——धनिकानां प्रभुशक्तिमतां चैषां राष्ट्राणामनधिगताभिवृद्धीनां राष्ट्राणां च मध्ये वर्तमानो महान् व्यतिरेकः। अयं भेदो वर्धिष्णुर्भवति ; वस्तुतः गतेषु कतिपयेषु वर्षेषु सोऽतीव विस्तारं गतः, सत्स्वेव प्रयत्नेषु अप्राप्ताभिवृद्धीनां राष्ट्राणां स्थितिमुद्धर्तुम्। यदि यथावत्प्रवृत्ताभ्यः आर्थिकीभ्यः अन्याभ्यश्च वस्तुगतिभ्यः स्वं व्यापारप्रक्रमं पूर्णं प्रदर्शयितुमवसरो दीयते, तदा धनिकानि राष्ट्राणि धनिकतराणि प्रबलतराणि च भविष्यन्ति, अन्यानि तु राष्ट्राणि आधारभूताः स्वकीया अपेक्षा अपि पूरयितुं कृच्छ्रगतानि क्लेशमनुभविष्यन्ति। येषामस्ति, तेभ्योऽधिकतरं दीयते। एकस्य राष्ट्रस्य अन्तरेव अधिकतया अभिवृद्धाः प्रान्ताः इतरप्रान्तापेक्षया अधिकतराभिवृद्धिमधिजग्मिवांसो भवन्ति।

एतत्फलतया विरोधाः युद्धभयं च मिथो राष्ट्राणामुत्पद्यन्ते ; अनभिवर्धितेषु राष्ट्रेषु च सामाजिकः क्षोभः स्त्यायते। एकतः शक्तिर्धनं च सापत्नविग्रहयोर्मूलं भवतः। अन्यतो दारिद्र्यं दुःखं चापि विनिपातान् प्रति विग्रहान् प्रति च नयतः। उभयमपि भये शङ्काकुलतायां च पर्यवस्यति। अतिशयितस्य धनस्य प्रभुत्वस्य वा एकत्रैव समुच्चयः नावहति अभयम्, लोके व्याप्रियमाणानां वस्तुगतीनां समीचीनं संवेदनं विहन्ति च। ततः एते भेदाः राष्ट्राणां मध्ये वा एकस्य राष्ट्रस्याभ्यन्तरे वा, शिथिलीकर्तव्याः।

आणवस्य युगस्य याः समस्याः ता ह्यस्तनलोकीयैः संप्रतिपन्नैः मार्गैः न समाधातुं शक्याः। राज्यतन्त्रे वा वार्ताविषये वा न ते सांप्रदायिका अभिप्रायाः अभीष्टपूरकाणि फलानि सुवते। सार्वराष्ट्रिकेषु व्यवहारेषु भयद्वेषसहयोगितया मानसिकं यद्युद्धं प्रवर्त्यते तस्य प्रज्ञाहीनतां पश्यामः, यत् एतन्मानवजातेरपायानधिकीकरोति, न च समाधानं नेतुं शक्नोतीति स्पष्टमेव। अणुशक्तिपरीक्षाः क्रियन्त एव, एकैका एतादृशी परीक्षा सांप्रतिकीनाम् आगामिनीनां जनसन्ततीनां च अपायभूतानि फलानि धत्ते इति प्रवरेषु विज्ञानशास्त्रिषु अस्मान् बोधयत्स्वेव। तत्किमित्येता अद्यत्वेऽनुपयुक्ताः नीतय अनुस्त्रियन्ते यासु न युक्तिरस्ति, न वा हेतुः, दूरे धर्मः। सद्यः सर्वसंमत्या च सर्वा अणुपरीक्षा

अवसाययितुं क्रमेण शस्त्रसंचयं ह्रासयितुं च निर्णयो भवितेति प्रतीक्षते जनः। एकतरेण पक्षेण कार्यारम्भो भयेन वारितः स्यात्; परन्तु उपपत्तिद्वारा उभय-पक्षाभ्युपगता व्यवस्थितयः साधयितव्याः, या एकैकस्यापि राष्ट्रस्य हिताय भवेयुः।

एषैव युक्तिः आर्थिकेषु वादेषु गमनिकासु च प्राप्नोति; भूयसा महाजनदारिद्र्यबहुले, तदपेक्षया अतिस्वल्पसंख्याकैः समृद्धिमद्भिः अनुकूल-दशापन्नैश्च राष्ट्रैर्युक्तेऽस्मिन् लोके येऽनिवार्यतया निविष्टा अपायाः तेषां न किञ्चिदपि वेदनं भवति। अपर्याप्तसमृद्धिकानां राष्ट्राणां स्वमात्राया उत्कर्षापादनं यद्यात्ययिकतया कार्यं, तथैव समृद्धतरै राष्ट्रैः स्वार्थदृष्ट्यैव एतत्कार्यसंपादन-क्रमस्य शीघ्रता अवश्यकर्तव्या भवति। अधुनातन्यः समस्या एता नूतनलोक-संबन्धिन्यो भवन्ति, प्राचीनलोकसंबन्धिनामुपायानां प्रयोगेण न समाधेयाः।

लोके सामाजिकाभिवृद्धेः महत् प्रातिकूल्यं यथा भवति तथा अति-गरिष्ठा धनसञ्चयाः शस्त्रनिर्माणार्थं यद्व्ययीक्रियन्ते तदतिकरुणं भवति। अन्योन्यप्रतिपत्तये मार्गे प्रकटे, भयमयम् उपपत्तिवैधुर्यमयं च वातावरणं यदनु-बध्नाति तदितोऽपि करुणतरं भवति। प्रतिपत्तिः साङ्ग्रामिकदृष्ट्या न भवति, यया दृष्ट्या अधिकतरं भयमेव अधिकतरा अविस्रंभनिबिडतैव च भवतः। नाहं यं कमपि विशिष्टं देशमपराधिनमभिशंसामि, यतः अधिकया वा न्यूनया वा मात्रया, सर्व एव देशा एतेन भयमयेन वातावरणेन ग्रस्ताः, ततः न च सर्वात्मना स्वान् मोचयितुं प्रभवन्ति। अस्माभिः कर्तुं शक्यमेतावदेव यत् परराष्ट्रैस्सह आस्माकीनेषु अनुबन्धेषु एतादृशं वातावरणं यावच्छक्ति विपर्यास-यितुं प्रयतनम्।

प्रातिस्विकस्वत्वमयस्य युगस्य प्रारम्भकाले,—वस्तुतः संप्रत्यपि भूयसा— वस्तूत्पादने प्रभूततमं नैर्भर्यं निहितम्। तदा तदावश्यकताभूत्। परन्तु वस्तूत्पादनमात्रेण समस्यानां नः समाधानं वा, सुखं वा, सन्तोषो वा न भवतीति क्रमेण व्यक्तमभूत्। संपदे, लाभाय, उपर्युपर्यधिकाय धनाय च या तृष्णा सा दोषमुत्पादयति, ईर्ष्यां कलहं च जनयति। कस्मिन्नपि जनसमुदाये,

विशाले लोके वा, उद्देश्यतया यदि सामाजिकमवैषम्यं लक्षीक्रियते, न वस्तूत्पादनं स्वत एवैतत् साधयति। वस्तुतः तत् भूयस्तरवैषम्योत्पादनप्रवणं भवति। ततः उत्पादितस्य अवैषम्येण विभजनं, तस्य समीचीन उपयोगः, इत्येषा प्रधाना समस्या भवति। अन्ततो गत्वा 'कथं जीवयात्रा विधेया, कथं नाम जीवितं स्वस्य कृते समाजस्य कृते च यावच्छक्यं सफलीक्रियताम्' इति ज्ञानमेव अपेक्षितं भवति। मनुष्यसंबन्धिनीः गणनाः धार्मिकान् प्रश्नान् वा अपहाय प्राकृतिकन्यायानामेव केषांचित् किमपि विवरणं भवति वार्ताशास्त्रमिति नेतः परं गणयितुं शक्यते।

१३

बृहत्तरा एता विचारणीयांशा आभीक्ष्ण्येन मया उद्दिष्टाः, यतस्तेभ्यः पराङ्मुखीभावो दुष्करः, प्रभावश्च तेषामस्मद्राष्ट्रान्तःपातिषु प्रश्नेष्वपि भवति। परंपरागतैर्भावैर्वयं तथा स्यूताः यथा नः समस्यानाम् अद्यतनीयसङ्गत्या परिशीलनं दुष्करं भवति। दारिद्र्यं नाम अधोगतिः, तस्मान्मोक्ष एव तस्य व्यक्तः प्रतीकारो भवति। सति दारिद्र्ये स्वातन्त्र्यविषयिणी वार्ता प्रायो व्याघातदुष्टा भवति। अत्यन्तं दुष्टमिदं, यद् दारिद्र्यस्य स्वस्य सनातनतामापादयितुं शीलं वर्तते। प्रत्युत मर्यादातिक्रान्तं धनं संपत्तिश्च, कस्यामपि व्यक्तौ वा कस्मिन्नपि समाजे वा, स्वनान्तरीयकान् दोषान् बिभ्रतः, ये दोषा अद्यत्वे प्रकाशीभवन्ति। प्रापञ्चिकसंपदः केवलं समुच्चयः मनुष्यस्य आभ्यन्तरे जीवने कामपि शून्यतामापादयेत्।

सामूहिकराज्यनिर्वाहमार्गो नूनमार्थिक एव मार्गः, किन्तु स उत्क्रान्त्यंशान्तराण्यपि परिगणयितुं यतते। संपत्तेः, तथा अवैषम्येण विभजनस्य च प्रापकत्वेऽपि, सामूहिकवादेऽयमपायो वर्तते, यत्स जीवनस्य केभ्यश्चिदर्थगर्भेभ्योंऽशेभ्यः प्रच्युतो भवेत्। प्राधान्येन हेतोरेतस्मादेव व्यक्तिगतं नैर्भर्यम् अवश्यनिधेयं भवति।

भारते अद्यतन्योऽस्माकं समस्याः मुख्यतः आर्थिकीमभिवृद्धिं जीवनमात्रासमुत्कर्षं च विषयीकुर्वन्ति । समाजस्य सामूहिकनिर्वाहप्रक्रियया निर्मापणमस्मदुद्देश्यमिति बुद्धिपूर्वमस्माभिर्निर्धारितम्; यद्यपि तस्याः प्रक्रियायाः सुपरिच्छिन्नं लक्षणमस्माभिर्न कृतम् । चतुरश्रतया लक्षणकरणस्य परिहारोऽपि, मन्ये, एषणीयो भवति, यतस्तानि लक्षणानि अर्थशून्यतया आम्रेड्यमानप्रवादघोषणरूपेण परिणमनप्रवणानि भवन्ति । ये प्रवादा यानि घोषणानि च त्वरितं विपरिणतिमुपेयुषि प्रपञ्चे वैशारद्येन विचारणं विघ्नन्ति । अस्पष्टताया अतिरेकोऽपि फलवत्कार्यकरणमुपरुणद्धि । अतः निश्चितान्युद्देश्यानि, तानि कथं प्राप्याणीति विशदं ज्ञानं च भवितुमर्हन्ति ।

पूर्वं मया सूचितम्—यत् एकैकेनापि देशेन बाह्यतो हठाध्यासं विना अभिवृद्धिरधिगम्या । साह्यमुपदेशश्च प्रत्युद्गम्ये, बाह्यतोऽध्यारोपस्तु निरामयतया वृद्धिं वारयति, परस्पराघातं च जनयति । ततः एकैकस्यापि देशस्य स्वां नीतिं स्वरूपतो निर्धारयितुं स्वातन्त्र्यमनुमन्तव्यम्, न चेत् ततो यावत्संभवं देशान्तराणां हिंसा । नास्मासु कस्यापि तत्त्वं मदीयमेवेति स्वैकाधिकारिता भवतीति, यदस्माकमनुरूपं भवेत् तदन्येषामन्यास्ववस्थासु वसतां नानुरूपं भवेदिति च अस्माभिरभ्युपगन्तव्यम् । अस्माकमनभिरुचितैर्बहुभिर्विषयैस्सह लोकेऽस्मिन् अस्माभिर्वस्तव्यमित्यपि अभ्युपगन्तव्यम्; अस्माकमाचरणमात्रेण नीतिमात्रेण वा, अन्यैस्सह मैत्रीपूर्वेण सहयोगेन च यदस्माभिः परोपरि स्वशक्त्याधानं कर्तुं शक्यते, तन्मात्रमेव कार्यमस्माभिः । अद्य परस्परसंघर्षेण प्रवृत्तानां प्रेक्षाणां मध्ये महति भेदे सत्यपि, सादृश्यांशाः बहुलीभवन्तीति, वस्तुस्थितिश्च ताः आसन्नतरा आनयति चेति श्रद्दधेऽहम् । यदि भयं न भवेत्, बिभीषिकाः हठात्कारश्च नोपयुज्येरन्, एष संगमनक्रमः त्वरितो भविष्यति । अर्थात् राष्ट्राणां मध्ये राज्यतन्त्रक्षेत्रे आर्थिकक्षेत्रे वा स्थूलदृष्ट्या यथास्थिता परिस्थितिः अङ्गीकर्तव्या । समाधानापेक्षिण्यस्समस्याः शान्तिमयैरुपायैस्साधयितव्याः ।

एकस्मिन्नेव राष्ट्रे अन्तःकलहा वर्तन्ते। किन्तु कोऽपि भेदो भवति, यत् तरुणानां सर्वेषामेवाधिकारदायिन्यां जानराज्यप्रक्रियायाम्, एते कलहाः यथाक्रमं राज्यनिर्वाहार्थमुपकल्पितैरेव न्यायमार्गैस्समाधातुं शक्यन्ते। प्रायेण मतसंबन्धिनः कलहा न भवन्त्यद्य। यद्यपि जनजातिप्रयुक्ता समस्या वर्तत एव, तथापि तत्प्रयुक्ता विग्रहाः लोकस्य कतिपयेष्वेव स्थलेषु संकुचिता भवन्ति। प्रान्तीयभावनया भाषाभिमानेन वा प्रयुक्तानां विग्रहाणामतिशोकावहानि प्रेक्षणकानि भारते नः प्रवृत्तानि। किन्तु मुख्यतः अद्य समस्योत्थापकास्तु विषयाः तत्तज्जनवर्गाणां मध्ये प्रातिस्विकानामर्थानां मिथो विरोध एव; एषु च विषयेषु परम्पराप्ररूढाः स्वार्थाभिनिवेशाः नोन्मूलयितुं सुकराः। तथापि भारते दृष्टमस्माभिः यद् प्रबलाः पारंपरिकस्वार्थाधिकाराः, यथा प्राचीनानां राज्ञां महतां भूस्वामिनां च, प्रशान्तैरुपायैस्समाहिताः, यद्यपि एतेन कतिचिद्विशिष्टाधिकारवतामनुकूलतया चिराय सुप्रतिष्ठिता व्यवस्थितिः विशीर्णा। अतः यद्यपि वर्गीयो विग्रहोऽस्तीत्यस्माभिरभ्युपेयम्, तथापि तस्यास्माभिः प्रशान्तैर्मार्गैः अपरिशीलने नास्ति कोऽपि हेतुः। मार्गास्तु ते फलवन्तस्तदैव भविष्यन्ति यदा समीचीनं जनतया स्पष्टं प्रतिपन्नं च लक्ष्यं वयं गोचरे निदध्महे।

१४

प्रातिस्विकतयाहमेवं मन्ये यद् नेतः परमद्यतनयुगस्य अनुरूपो भवति लिप्साप्रधानस्समूहः, यः प्रातिस्विकस्वाम्यप्रयुक्तस्य नयस्य मूलं भवति। पूर्व्यस्य युगस्य सः अनुरूपः स्यान्नाम; नूनं प्रातिस्विकस्वाम्यनयस्य महान्तो लाभाः तत्प्रशस्तये सन्ति; तथापि लोकस्तां दशाम् अतीत्य उपरि गतः। लोकोऽद्य सुतरां जटिलः संकुलश्च; प्रायोऽन्योन्यस्य गृहद्वारे वयमुपविष्टाः। ततो नवीनानां गतीनामवस्थानां च अनुरूपतरा, न एतावत्स्पर्धाकुला, किन्तु इतो महत्तरं सहयोगमावहन्ती कापि उच्चतरा व्यवस्थितिः अस्माभिर्निष्पादनीया। अन्ततोऽनया विश्वैकराज्यस्थापने पर्यवसातव्यम्। तदैवेदं संभवितुं शक्यं

स्यात्, यदा अन्येषां विषयेष्वप्रविश्य स्वेच्छानुरूपं स्वाभिवृद्धिमभिनिर्वर्तयितुम् एकैकस्य राष्ट्रियसमूहस्य स्वातन्त्र्यमयं वातावरणं भवेत्।

लाभाभिप्राये कृतप्रतिष्ठः सञ्जिघृक्षाप्रधानः समूहः प्ररोहशीले नवलोकेऽस्मिन् अनुचितः प्रतिभाति ; नैतावता प्रेरकैः फलोद्देशैर्न भाव्यमित्यर्थः। प्रोत्साहकानि सदैवावश्यकानि भविष्यन्ति, यद्यपि तानि अर्थलाभमात्रपर्याप्तानि न भवेयुः। नूतनव्यवसायार्थं, नवनिर्माणार्थं, साहसकार्यार्थं च य उत्साहः सोऽस्माभिरुत्तेजनीयः, येन अस्माकं जीवितस्य सारवत्ता अमन्दता च दत्ता भवेत्। प्रातिस्विकव्यवसायस्य विस्तृतं क्षेत्रं भविष्यत्येव, किन्तु तेन व्यवसायेन भिन्नया रीत्या प्रवर्तितव्यम्, न तु केवलं सञ्जिघृक्षारूपया रीत्या। भारते विलम्बेन वयं व्यापारोद्योगपरिवर्तात्मिकां दशां प्रविष्टाः स्मः। तस्मिन् काले वयमेतत् कृतवन्तो, यस्मिन् लोकस्य केचन भागाः प्रेरकरहितगत्वरयन्त्राणाम् अणुशक्तेश्च युगे वर्तन्ते। एवं, फलतः, एतयोर्विपरिवर्तयोर्द्वयोरपि सममेवास्माभिः प्रवर्तितव्यं भवति, अयं च महान् भारो भवति। न केवलं न्याय्यं हितं चेति, किन्तु अस्माकमार्थिकसमस्याः समाधातुं गत्यन्तरं नास्तीति हेतोश्च, सामूहिकोद्योगनयमभ्युपगतवन्तो वयम्। कदाचिदुच्यते—त्वरिता अभिवृद्धिः शान्तिमयैः जनतासंमतिपूर्वैश्च मार्गैर्न संभवति, प्रभुत्वपूर्णा बलात्कारमयाश्च मार्गा आश्रयितव्याश्चेति। इमामुक्तिं नाहमभ्युपगच्छामि। वस्तुतः अद्य भारते जनतानुमोदनप्रधानान् मार्गान् हातुं यदि कोऽपि प्रयत्नो भवति, स उत्सादाय कल्पेत, ततश्च अभिवृद्धेः सद्यः संभाव्यमानतां नाशयिष्यति। दीर्घकालदृष्ट्या च प्रातिस्विकपुरुषस्य गौरवे, तस्य यावच्छक्यं स्वातन्त्र्यदाने च श्रद्धालुरस्म्यहम्, यद्यपि अन्योन्यानुस्यूततया जटिले समूहे परपीडाभीतेः कारणात् स्वातन्त्र्यस्य सङ्कोच आवश्यकः।

अस्माभिरूरीकृतमतिमहत्कार्यं महत्या जनतायाः सकाशात् परिपूर्णं सहोद्योगमपेक्षते। स सहयोगो बागमिष्यति, यदि तैरङ्गीकर्तुं योग्यं, तेभ्यः फलानि च प्रतिजानत् लक्ष्यं किमपि न वयं पुरत उपक्षिपामः। अस्माभिः

अभ्यर्थितो विपरिणामः अस्माकं जनानामुपरि भारानावश्यकतयानयति, तेषामपि जनानामुपरि ये लेशतोऽपि भारानेतान् वोढुं न शक्नुवन्ति । आत्मनः कानपि लाभान् य आनयेत् तादृशस्य जनसमूहस्य निर्माणे वयमपि भागिन इति यावत्ते न साक्षात्कुर्वन्ति, तावत्तैर्भारा एते नाङ्गीकरिष्यन्ते, न च ते दास्यन्ति पूर्णं सहयोगम् । 'स्वच्छन्दतया व्यवसायः' इति यदुच्यते स नास्माकं जनसङ्घ-सामान्यस्य कदापि हृदयमावर्जयेत् । मौलिकतया यानि प्रधानानि ततो व्यतिरिक्तानां कार्याणां कृते मुहुरस्माकं वस्तूत्पादनोपकरणानामुपयोगे स पर्यवसास्यति । अर्थात् अतिशयेन लाभदृष्टेः स्वार्थमुपयोगः प्राप्नोति, यस्यां दृष्टौ प्रातिस्विकस्य पुरुषस्य प्रयोजनबुद्धिर्भविष्यति, न तु सर्वस्य समूहस्य ।

समूहे सर्वस्याप्यवैषम्येण तत्तत्प्रतिपादनं साम्यं च जगति संप्रति बलवत्तमा प्रचोदना भवति । प्राचीना प्रभुत्वप्रधाना या व्यवस्थितिः सा स्वल्पसंख्याकानां भूमिस्वाम्ये, अन्येषां संशयग्रस्ततया जीवने च प्रतिष्ठिता अभूत् । तां व्यवस्थां न कोऽप्यधुना अनुमोदते । तथैव संप्रत्यपि प्रचरन्तीनां बह्वीनां व्यवस्थानां जनग्रहणशक्तिः नष्टा; न च ताः जनानां मतिगत्या विज्ञानाभिवृद्ध्या वा घटन्ते ।

१५

यत्कार्यमस्माकं संमुखं वर्तते, तद् उपलभ्यमानानामुपकरणानां संभवता श्रेष्ठतमेन पथा यथा उपयोगो भवति, यथा राष्ट्रियः प्रयत्नोऽस्मल्लक्ष्यं प्रति च प्रेरितो भवति, तथा सावधानतया योजितं सुविमृश्य निर्धारितं च मार्गमपेक्षते । चित्रमेतत् यद् अस्मिन् वैज्ञानिके युगेऽपि सन्ति केचन जना येषां वैयक्तिकलाभ-मेव प्रधानं प्रयोजनं बिभ्रतः प्रातिस्विकप्रयत्नस्य यादृच्छिके मार्गे संप्रत्ययो भवति ।

अस्मद्द्वितीयपञ्चवार्षिकयोजनाया मध्ये वर्तामहे; तृतीया योजना पुरतोऽस्माकं परिवर्तते । तादृशीं दशां वयं प्राप्ताः स्मः, यत्र योजनयानया साक्षात्प्राप्याणि लक्ष्याणि तत्प्राप्त्युपायश्च निर्धारितरूपेण उपन्यस्तव्यानि ।

तृतीययोजनाया अन्ते यथास्मद्राष्ट्रपतिना लोकसभाभिभाषणे निर्दिष्टं तथाशास्महे—अस्माकमाधारभूतानामुद्योगानां, कृषिप्रभवाणां ग्रामाभिवृद्धेश्च विषये आयतौ या प्रवृद्धिः तस्याः सारभूतं मूल्मुपनिहितं भवेत् इति। तृतीययोजनान्ते सर्वा नस्समस्याः समाधास्याम इति न प्रतीक्षामहे, तदनन्तरागतानि बहूनि पञ्चवार्षिकयोजनान्तराणि भविष्यन्ति; किन्तु दारिद्र्यरूपस्य विघ्नस्यास्य भेदने लक्ष्यं बध्नीमः, अस्माकमभिवृद्धिन्यूनता स्थायिनी मा भूदिति। यथाऽहं श्रद्दधे, तथा एतस्मिन् कार्ये यदि सिद्धाः स्याम, ततस्त्वरिततरेण क्रमेण वयं पुरो गमिष्यामः, इतोऽन्यूनतया च पराधीनाः स्याम।

तच्च महान्तं भारमावहेत्, किन्तु ततः पलायनं नास्ति, यदि अस्मल्लक्ष्याण्युद्दिश्य शीघ्रमभिगन्तुं वयं तत्त्वतः श्रद्धालवः कृतनिश्चयाश्च।

नातिचिराद्गतेषु मासेषु भूस्वाम्यं प्रति केचन निर्णया अस्माभिरुपात्ताः, ये कांश्चनाक्षेपान् जनितवन्तः। यदा गरीयान् कोऽपि सामूहिकः परिवर्तो भवति तदा नान्तरीयकतया भवन्तं जनवर्गेषु मिथःकलहमत्र पश्यामः। इममपि कलहं प्रशमेन सहयोगेन च समाधास्यामह इति अहं निश्चिनोमि, यथा एतादृशा अन्ये विग्रहाः पूर्वमस्माभिः समाहिताः।

अस्मद्ग्रामजनानां सहोद्योगमन्तरा मार्गान्तरं नास्तीति अहं निश्चयेन प्रत्येमि। विविधकार्योपयोगिन्यः सहोद्योगशालाः तेषामावश्यक्यः, ततश्च सहोद्योगेन कृषिप्रवृत्तिरपि भवितुमर्हति। नाहं मन्ये अद्य वर्तमानायां दशायां संघस्वाम्येन कृषिप्रवृत्तिः भारतस्य युक्तेति; नाहं अस्मत्कर्षकान् कस्मिन्नपि यन्त्रे अप्रतिज्ञातांशत्वेन स्थितान् इच्छामि। अस्माभिः स्मरणीयं तत्त्वमिदं यद् अस्मिन् देशे जनानामाधिक्यं तदपेक्षया भूमेः स्वल्पत्वं च भवतः इति। एषु प्रश्नेषु मतभेदो वर्तते इत्येतदेकं तत्त्वं सूचयति यत् पुरोगमनं क्रियमाणं दृश्यते, कालपूगागताभ्यः आर्थिकक्षेत्ररेखाभ्यो वयमुत्तराम इति।

साधुना सतापि वादविशेषेणैव केवलं न कर्षकजनतां समुत्साहयितुं वयं पारयेम। सम्यगवगत्य अन्योन्यं मिलित्वा यथा ते स्वात्मावलम्बनतामभि-

वर्धयेयुस्तथा तेषां विधानमेव आवश्यको मार्गः। अत एव ग्रामपञ्चायतनाय ग्रामीयसहोद्योगयोजनार्थे च अधिकारदानं मुख्यं भवति। एतेषामधिकाराणामेते दुर्विनियोगं करिष्यन्तीति या युक्तिः प्रदर्श्यते, तत्र यद्यपि कियानिव सारो भवति, तथापि वस्तुतो नास्ति याथार्थ्यम्। सापायमपि तत् कर्तव्यमेव, यत एवमेव प्रयत्नद्वारा स्खलितद्वारा च जनाः शिक्षेरन्।

सामूहिकाभिवृद्धियोजनाप्रक्रमः सार्धषड्वत्सरेभ्यः पूर्वम् आरब्धः, अद्य लक्षत्रयमितान् ग्रामान् व्याप्नोति। इयं चाश्चर्यभूता अभिवृद्धिः; मन्ये, देशे परिवर्तात्मकानि फलानि प्रसोष्यति, मात्रया प्रसुवती वर्तते चेयमिति। जानेऽहं तस्याः स्खलितानि, किन्तु यानि तया साधितानि तानि प्रकटतराणि। यावता जनता तया समवेता, तावता तस्याः फलानि भविष्यन्ति। राज्याङ्गभूतानां पुरुषाणां शिक्षितानां कार्यनिर्वाहकाणां च मुख्यता अस्त्येव, किन्तु मुख्यपात्रत्वमत्र कर्षकसामान्येनैव निर्वोढव्यम्। एतस्याः सामूहिकाभिवृद्धियोजनायाः कारणात् जानपदेषु प्रदेशेषु नो नूतनः कोऽपि भावः प्रसरतीति मन्ये।

क्षेत्रविषये व्यापारोद्योगविषये वा, राज्याङ्गनिर्वाहप्रतिष्ठायां वा, क्रियाकारित्वधर्मा यदा यदा विपरिणमन्ति तदा तदा व्यवस्थितीनां भेदाश्च अवश्यकर्तव्या भवन्ति; लाभोद्देशप्रतिष्ठितस्य संजिघृक्षामयस्य समूहस्य ये नियामका आसन् तत्स्थाने नूतनाः पुरुषार्थगणनाः भविष्यन्ति। पूर्णतया नूतनप्रक्रियापादनं विलम्बेनैव स्यात्, यतः पर्यन्ते कोटिशो जनानां भावनायाः चेष्टितानां चान्यथाकरणं, तस्य च प्रजातन्त्रानुमतेन मार्गेण तत्संमत्या निर्वर्तनं च पुरःस्थिता समस्या भवति। तथापि विपरिणामस्य गतिक्रमे मान्द्यं नावश्यकम्; वस्तुतः अत्यन्तक्रमिकतां वस्तुस्थितिर्न सहेत।

## १६

अद्यतनभारतेन कापि अत्यन्तसङ्कीर्णता प्रदर्श्यते—आशाया आतङ्कस्य च, आश्चर्यभूताभिवृद्धेरालस्यस्य च, नूतनाया भावनायाः तथा भूतकालस्य

मतानां विरोधो नैव कल्पेत । सामरस्यस्यास्य समापादने साह्यकरणं भारतस्योदात्तो विशेषाधिकारो भवेत् । तच्च अशोकेन शिलालेखेषु उत्कीर्णेन भारतीयेन प्राचीनेन संप्रदायेनानुगतं स्यात् । स्मर्यतां नामास्माभिरशोकस्य सन्देशः—

'आध्यात्मिकसारवृद्धिर्बहुविधा' ।

'तस्य त्विदं मूलं यद् वचोगुप्तिः, यथा आत्ममते पूजा वा परमतगर्हा वा न स्यात्, अप्रकरणे लघुता वा न स्यात् ।

'तस्मिंस्तस्मिन् प्रकरणे पूजयितव्यास्तु परमतीयाः तेन तेनाकारेण । एवं कुर्वन् आत्ममतं बाढं वर्धयति, परमतान्यपि उपकरोति । तदन्यथा कुर्वन् आत्ममतं च छिनत्ति, परमतानि चापकरोति ।

'यो हि कश्चित् आत्ममतं पूजयति परमतं वा गर्हयति आत्ममतभक्त्या, आत्ममतं दीपयेम इति, स च पुनस्तथा कुर्वन् बाढतरमुपहन्ति आत्ममतम् ।'

अशोकस्य काले मतं नाम सर्वविधा देवश्रद्धाः सर्वविधं धर्मं च व्याप्नोत् । अद्य न तथा मतमधिकृत्य वयं विवदामहे, यथा राजकीयान् आर्थिकान् विषयान्, तदर्थकानि दर्शनानि चाधिकृत्य । किन्तु राज्यतन्त्रे अर्थशास्त्रे वा येऽस्मत्तो भिन्नाभिप्रायाः तान् प्रति व्यवहरणे अशोकस्योपदेश-मनुसर्तुमलमस्माकम् । युद्धभावनाया अशोकस्य मनसि न स्थानमासीत्, अद्य च न किमपि स्थानं तस्य भवितुमावश्यकता अस्ति ।

यादृशमद्यतनपरिश्रमेण वयं कुर्मः तादृशमेव श्वस्तनं भारतं भविष्यति । व्यापारोद्योगे अन्यथा च भारतमभिवृद्धिमुपैष्यति, विज्ञाने यन्त्रे च तद् प्रगतिं यास्यति, अस्मज्जनानां जीवितप्रकारस्य मात्रा उन्नतिमेष्यति, विद्या प्रसरिष्यति, आरोग्यविषया परिस्थितयः गुणवत्तरा भविष्यन्ति, कलाः संस्कृतिश्च जन-जीवितानि धन्यानि करिष्यन्ति, इत्यत्र न मे विशयः । दृढेनोद्देशेन, साधुना हृदयेन च वयमस्यै यात्रायै प्रस्थिताः, यात्रापूर्तिं च प्राप्नुमः, यावद्वा तद्दैर्घ्यं भवतु ।

यदुद्दिश्य त्वहं चिन्ताविष्टः तन्न केवलमस्माकं भौतिकी अभिवृद्धिः, परन्तु अस्मज्जनानां जात्यत्वं गाम्भीर्यं च । व्यापारोद्योगमार्गैः शक्तिं संपाद्य, किं ते

प्रातिस्विकधनमार्गणेन लघुजीवनेन च स्वात्मानं नाशयेयुः । तत्तु करुणं स्यात्, यतो भूतकाले यदर्थं भारतमभूत् यदर्थं च मन्ये वर्तमानकाले गान्धिप्रदर्शितरीत्या तदभवत् तस्य प्रतिषेधो भविष्यति । शक्तिरावश्यकी, किन्तु ज्ञानं सारभूतमपेक्षितम् । ज्ञानसहितैव शक्तिः साध्वी ।

यत्स्वस्य भवितव्यं स्वभूतम्, अधिकारो वा तदाश्रित्य सर्वे वयं भाषामहे तत् हठादर्थयामहे च; किन्तु स्वस्य कर्तव्यानि, ऋणभूतानि चाधिकृत्य पुराणो धर्म उपदिशति । ऋणेष्वपाचीर्णेषु स्वभूतानि स्वयमनुपतन्ति ।

विज्ञानयन्त्रयोरभिवृद्धिं मनस आत्मनश्चाभिवृद्ध्या योजयितुं किं वयं शक्नुमः? विज्ञानविषये नास्माभिः कूटता कर्तुं शक्या, यतस्संप्रति जीवितस्य तदेवाधारभूतं तत्त्वं भवति । नतरां शक्यास्माकं कूटता सारभूतानां तेषां तत्त्वानां विषये, यत्कृते भूते काले बहुषु युगेषु भारतं तस्थौ । ततो यावच्छक्ति बलेन च उद्योगाभिवृद्धिमार्गमनुसराम, तदैव स्मराम च भौतिक्यः संपदः क्षमामनुकम्पां ज्ञानं च विना मृत्त्वं भस्मत्वं च भजेयुरिति । स्मराम च 'धन्याः शान्तिसंपादकाः' इति ।

## निकषोपलः

### गुरुवायुपुरेशाक्षरमालादिस्तवत्रयम्

*महामहोपाध्यायाः पैङ्गानाड् गणपतिशास्त्रिणः। प्राप्तिस्थानम् — जि. एस्. एल्. अय्यर् कम्पनि, पोस्ट् बाक्स् ३१५, मद्रास् २। मूल्यं ५० न० पै०।*

श्रीकाञ्चीकामकोटिपीठाधिष्ठितानां श्रीचन्द्रशेखरेन्द्रसरस्वतीसंयमीन्द्राणां श्रीचरणयोः समर्पितमिदं पावनं स्तोत्रकाव्यं प्रथितयशसां गणपतिशास्त्रिणां पाण्डित्यप्रकर्षं प्रकटयति। गणपतिशास्त्रिणः श्रीमतां मन्नार्गुडिराजुशास्त्रिणामन्तेवासिनः शब्दविद्यावेदान्तशास्त्रयोः पारंगताः अस्याः शताब्द्या आरम्भे संस्कृतलोकमभूषयन्।

ग्रन्थेऽस्मिन् गुरुवायुपुराक्षरमालास्तवः, श्रीवातपुरनाथाष्टकम्, गुरुवायुपुरनाथपञ्चरत्नम्—इतीदं स्तोत्रत्रयं प्रकाशितम्। केरलेषु गुरुवायुपुरक्षेत्रं 'गुरुवायूरु' शब्देनाभिधीयमानं प्रसिद्धम्। तदधिनायकस्य भगवतः प्रसादेन सहस्रशो जना समासादिताभीष्टसिद्धयः सम्पन्नाः। तस्मादस्य स्तोत्रत्रयस्य पठनं पुण्यं पापहरं चेत्याकलयामः। गणपतिशास्त्रिणः शताधिकग्रन्थप्रणेतारः श्रूयन्ते। तेषां ग्रन्थानां प्रकाशनं तच्छिष्यैः तदभिनन्दकैश्च प्रकाश्येरन्निति विश्वसिमः।

### अष्टप्रासशतकत्रयम्

*श्रीगोमतीदास एलत्तूर् रामस्वामिशास्त्रिणः। प्रकाशकः—आर्. हरिहर सुब्रमणि, १४ बाझिन् स्ट्रीट्, सैदापेट्, मदरास् १५। मूल्यं रू० २।*

अतीतायां शताब्द्यां सुप्रसिद्धः पण्डित आसीत् श्रीमान् एलत्तूर् रामस्वामिशास्त्रिमहाभागः। शास्त्रेषु कवितामार्गे चाप्रतिहताऽभूत् तस्य नवनवोन्मेषशालिनी प्रज्ञा। असौ विशाखमहाराजस्य काले तिरुविताङ्कूर्राजधान्यामास्थानपण्डितपदमलङ्कुर्वन् मूलकमहाराजस्य केरलवर्मदेवस्य

च विद्यागुरुरासीत् । अनेन बहवो ग्रन्थाः प्रणीताः । तेषां सर्वेषां प्रकाशनेन संस्कृतलोकः समुद्दीपितः स्यात् ।

प्रकृते तदीयेऽष्टप्रासशतकत्रये देवीशतकं शिवशतकं विष्णुशतकं च प्रकाशितम् । प्रौढार्थबन्धा कवितासरणिः, द्राक्षापाकवती च । श्लोकेषु द्वितीयाक्षरप्रासः शोभते शब्दालङ्कारः । काव्येऽस्मिन् प्रतिपादं न केवलं द्वितीयाक्षरं किन्तु तदेव द्वितीयाक्षरं चतुर्दशाक्षरत्वेन संयोजितम् । इत्थं प्रतिश्लोकमष्टौ समानाक्षरप्रासाः सम्भवन्ति । तस्मादष्टप्रासः इति व्यपदेशः सङ्गच्छते । प्रासनिमित्तकः काव्यापकर्षः कुत्रापि नानुभूयते । नूनं विद्वत्कविकृतानां कृतीनां पङ्क्तौ परिगणनामर्हतीदं शतकत्रयम् ।

**श्रीबोधिसत्त्वचरितम्**

*सत्यव्रतः शास्त्री व्याकरणतीर्थः, एम्.ए., एम्.ओ.एल्., पिएच्.डि., देहलीविश्वविद्यालये संस्कृताध्यापकः । प्राप्तिस्थानम्— मोतीलाल् बनारसीदास्, बङ्गलो रोड्, जवाहर्नगर्, दिल्लि । मूल्यं रू० ४ ।*

काव्यमिदं भव्यशब्दार्थभासुरमुत्कृष्टं च पालिजातकेषु निबद्धान् श्रीबुद्धदेवस्य पूर्वजन्मवृत्तान्तान् संस्कृतवाण्या वर्णयति । श्रीमतः सत्यव्रतस्य शब्दशास्त्रपाण्डित्यं काव्यादस्मादनुमीयते ।

सहस्रश्लोकात्मकेऽस्मिन् काव्ये ११ सर्गाः सन्ति । अत्र प्रस्तुताः श्रीबोधिसत्त्वस्य सर्वे वृत्तान्ताः सरसाः सदुपदेशपराश्च सचेतसां चित्तमाददते । काव्यस्य प्रथमतृतीयसर्गौ संस्कृतप्रतिभायां प्रकाशितपूर्वौ प्रतिभावाचकानां विदितावेव ।

**कणः लुप्तः गृहं दहति**

के. *कृष्णसोमयाजी, एम्.ए., एल्.टि. मन्त्री, संस्कृतसेवकसमाजः, रामेश्वरीपुरम्, गुण्टूरु, आन्ध्रप्रदेशः ।*

सर्वजनसंस्कृतमालानाम्ना गुण्टूरुसंस्कृतसमाजः ललितललितया संस्कृतभाषया ग्रन्थान् प्रकाशयति । तद्गतमन्यतमं कुसुममुपरिनिर्दिष्टो ग्रन्थः ।

अत्र रुश्यादेशीयेन 'टाल्स्टाय्' नाम्ना कविना लिखिता कथा सरलया संस्कृतभाषया अनूदितः। सरसा कथा। पदानि प्रसिद्धानि। वाक्येषु न सन्धिः, नापि दीर्घाणि समस्तपदानि। देश्यभाषापण्डितैः संस्कृतभाषामजानद्भिरपि सुबोधोऽयं ग्रन्थः।

ग्रन्थस्यास्य प्रस्तावनायां महतां जनानामभिप्रायान् पुरस्कृत्य संस्कृतभाषायाः व्यावहारिकत्वविषये श्रीमता सोमयाजिना कोऽपि विचारः प्रवर्तितः।

### मनुचरित्रम्

*श्रीमदान्ध्रकवितापितामहेन अल्लसानिपेद्दनार्येण प्रणीतस्य छायानुवादः प्रवराख्यः प्रथमो भागः। रचयिता-कोलाचलयज्ञनारायणदीक्षितः। प्राप्तिस्थानम् —मल्लिनाथगुरुकुलम्, राजेश्वरीपुरम्, गुण्टूरु, आन्ध्रप्रदेशः।*

सरसमिदं पद्यकाव्यम्। प्रथमभागेऽस्मिन् ४८ श्लोकाः सन्ति। उपजातिर्वृत्तम। अत्र प्रथमेषु पञ्चषेषु श्लोकेषु यद्यपि अतिशयोक्तिः परां कोटिमारूढा तथापि ततः परं स्वभावोक्तिरेवानुभूयते। अस्यापरे भागाः प्रकाशमर्हन्ति।

### श्रीसरोजिनीसौरभं नाम नाटकम्

*महीधर वेङ्कटरामशास्त्री, वैयाकरणः साहित्यविद्याप्रवीणः, आयुर्वेदविशारदश्च, राजमहेन्द्रम्, आन्ध्रप्रदेशः। मूल्यं रू० २।*

नव्यमिदं नवाङ्कात्मकं नाटकं डा० वि. राघवन्-महाभागस्योपोद्घातेन भूषितमद्यतनान् सामाजिकान् विषयान् परामृशति। 'वरशुल्कप्रयुक्ता दोषाः, जातिकलहः, ग्रामोद्धारः' इत्यादयो विषयाः सविशेषं निरूपिताः सन्ति। ललितमधुरो गिरां विन्यासः। यथोचितं तत्र तत्र सुश्लिष्टा उपमालङ्काराः सङ्घटिताः। अथ तु क्वचित्क्वचित् यतिभङ्गादयो दोषाः, वैरल्येनापशब्दाश्चाप्युपलभ्यन्ते। एते दोषाः शोधनीयाः।

## सौमित्रिसुन्दरीचरितम्

*श्रीभवानीदत्तशर्मा, एम्.ए., एम्.ओ.एल्., वेदव्याकरणमीमांसा-वेदान्ततीर्थः, साहित्याचार्यः, आयुर्वेदाचार्यः, साहित्यालङ्कारः। मुद्रकः—अध्यक्षः, गिरिजा प्रेस्, रमना, मुजफर्पुर्। मूल्यं न निर्दिष्टम्।*

नवसर्गात्मकमिदं काव्यं लक्ष्मणस्य वनं प्रति प्रस्थानसमये ऊर्मिलया सह सम्भाषणं तस्याः शोकावेगं च वर्णयति। सरसमिदं काव्यमसंशयं सहृदयहृदयमार्द्रयितुं प्रभवति। तत्रापि रामादीनां प्रस्थानदिवसीयसन्ध्यावर्णनं वाचकानां नयनमप्यश्रुपरिप्लुतं करोति। ललितो वाक्यबन्धः व्यङ्ग्यार्थगर्भितश्च। परन्त्वत्र शब्दशास्त्रसम्बन्धिनः प्रमादाः सन्ति बहवः। तत्र प्रथमपद्यमेवोदाहरणमर्हति। तथा हि—

नमामि रामस्य पदारविन्दौ भवाम्बुधेः सन्तरणे तरण्यौ।
यावाश्रियेते जितकामरोषैर्महात्मभिस्त्यक्तसमस्तदोषैः॥

तत्र तत्र वृत्तभङ्गोऽपि दृश्यते। 'अभिलाषा, उच्छवसन्ती, वियोगदीर्घानि' इत्यादयोऽपशब्दाः।

## निष्किञ्चनयशोधरं नाम नाटकम्

*डा० जतीन्द्रविमल चौधुरि, पि.एच्.डि., (लण्डन्), कार्यदर्शी, संस्कृतशिक्षापरिषत्, वेस्ट् बेङ्गाल्। मूल्यं न निर्दिष्टम्।*

निष्किञ्चनयशोधरं नाम नाटकमिदं सप्तभिरङ्कैर्घटितं बुद्धदेवस्य धर्मपत्न्याः यशोधरायाः पावनं चरितं कथावस्तुत्वेन निबध्नाति। बुद्धदेवस्य चरितं गवेषणवर्त्मना परिष्कृत्य नाटकेऽस्मिन् निबद्धम्। पाश्चात्याः खलु विमर्शकाः गोपां बुद्धदेवस्य कलत्रान्तरं मन्यन्ते। ग्रन्थकर्ता तु 'गोपा, सुभद्रका, बद्धकच्छा' इत्यादीनि यशोधराया एव नामान्तराणीति सप्रमाणं निरूपितवान्। एतन्निरूपणानुसारेणैव कथावस्तु नाटकेऽस्मिन् सङ्घटितम्।

अयं चौधुरिमहाभागः सम्प्रति संस्कृतप्रचाराय समर्पितात्मा संस्कृतप्रणयिनां धन्यवादानर्हति । स्वप्रणीतानि नाटकानि भारतवर्षे तत्र तत्र स्वशिष्यमित्रमण्डलद्वारा अभिनयन् भारतीयजनतां संस्कृतभाषोन्मुखीं करोति ।

यशोधराया जीवनचरितं करुणरसाप्लुतम् । तदनुरोधेन नाटकेऽस्मिन् करुणरसः प्रधानतयोपनिबद्धः । अथाप्यन्येऽपि रसाः यथोचितमङ्गतया विनिवेशिताः । सूर्य-चन्द्र-स्थूलोदरादीनां वचनानि हास्यरसमुद्गिरन्ति । तत्र तत्र सरसानि गीतानि, पद्यान्यपि यथास्थानं विनिवेशितानि । अभिनये सर्वमिदं शोभेततराम् । मनोहरं मुद्रणम् ।

काव्यावलिः

*शिरोमणिः सन्निधानं सूर्यनारायणशास्त्री, पि.ओ.एल्., संस्कृताध्यापकः, राजाबहदूर् वेङ्कटरामरेड्डि स्त्रीविद्यालयः, हैदराबाद् । मूल्यं रू० ३ ।*

अस्यां काव्यावलौ (१) विवेकानन्दम्, (२) पूर्णपात्रम्, (३) रामदासम्, (४) त्रिकम्—कीरसन्देशम्, विप्रवीरम्, मधुकोशः—इत्येतानि खण्डकाव्यानि सङ्कलितानि । तत्र रामदासं पूर्णपात्रं च संस्कृतप्रतिभायां निरूपितपूर्वम् । इदानीमवशिष्टा भागा अत्र विचार्यन्ते ।

(१) विवेकानन्दनाम्नि काव्ये वर्ण्यः पुरुषः सुगृहीतनामा श्रीमान् विवेकानन्दः भारतमातुः यशस्कराणां पुत्राणामन्यतमः । तस्य विश्वविश्रुतं चरितममरवाण्या वर्णयता शास्त्रिणा अमरतां नीतम् । ललितमधुरा कवेः शैली । असमस्तपदा वाक्यरचना । रसवती च वाग्धारा । तथापि तत्र तत्र विसन्धिदूषितानि पादानि ।

(२) कीरसन्देशः—विद्युल्लता नाम रमायाः सखी शापेन कीरत्वमापन्ना रुक्मिण्याः सन्देशं श्रीकृष्णायार्पयति । अत्र कवेः कल्पनाशक्तिरभिव्यज्यते । खण्डकाव्येऽस्मिन् विविधानि वृत्तान्युपयुक्तानि कविना । अत्राप्यार्यावृत्ते प्रथमतृतीयपादयोः क्वचित् क्वचित् ह्रस्वान्तत्वं दृश्यते । पादान्तस्थो विकल्पेनेति वचनं न सार्वत्रिकम् । किञ्च—

श्रुतिपेयानि श्रुण्वन्नधस्तलं प्राप चूतवृक्षस्य ।

इत्यत्र प्रथमपादे वृत्तभङ्गः। श्रुधातोः शत्रन्तं रूपं शृण्वन्निति, न तु श्रुण्वन्निति।

(३) विप्रवरनामके काव्ये विप्रवरस्य खड्गतिक्कस्य तदश्वस्य च सङ्ग्रामाङ्गणदर्शितपौरुषस्य चरितं रसवत्तरया गिरा वर्ण्यते। काव्यमिदं स्वकृतस्य आन्ध्रभाषामयस्य काव्यस्य स्वकृतोऽनुवादः। अत्र वीररसानुगुण ओजस्वी बन्धः।

(४) मधुकोशाभिधं काव्यं नामानुरूपं शृङ्गाररसप्रधानं भवति। उपोद्घाते कविना कृतेरस्य यद् भाणत्वं, अथवा श्रव्यभाणत्वमित्यश्रुतं किमपि समर्थयितुमिष्यते स वृथा प्रयास इति भाति।

कविरयं संस्कृतभाषायामिव आन्ध्रभाषायामपि प्रवीणः अभिनन्दनमर्हति।

श्रीजवाहरवसन्तसाम्राज्यम्

*साहित्याचार्यः पण्डितश्रीजयरामशास्त्री, पाहडि, धीरजबाजार्, दिल्लि। मूल्यं न निर्दिष्टम्।*

काव्येऽस्मिन् सप्त सर्गाः सन्ति। कविरयं श्लेषालङ्कारप्रियो दृश्यते। तत्र तत्र क्लेशेन श्लेषालङ्कारः सङ्घटितः। नन्दनशब्दस्य लण्डनरूपोऽप्यर्थो विवक्षितः। शब्दरचना न सरला सर्वत्र। सर्वथा व्याख्यासव्यपेक्षमिदं काव्यम्।

काव्येऽस्मिन् जवाहरवसन्तसाम्राज्यस्योत्कर्षः प्रतीयमानोऽपि बन्धपारुष्येण तिरोहितशोभो नातीवात्मानं प्रकाशयति। श्रीजवाहरस्य नाम ज्वाहर इति वैरूप्यं प्रापितम्। असेम्बलि, चेम्बर, मेम्बर, गवर्नरादयः शब्दाः काव्येऽस्मिन् लब्धप्रवेशाः संस्कृतभाषायां शब्ददारिद्र्यमिव सूचयन्ति।

प्रथमसर्गे अष्टपञ्चाशत्तमे श्लोके 'आगम' शब्दः वृक्षवाचकत्वेन प्रयुक्तः। तत्र प्रयोगः कोशश्च मृग्यः। वंशस्थशिखरिण्यादौ प्रथमतृतीयपादयोः ह्रस्वान्तत्वं श्राव्यत्वभङ्गहेतुर्भवति।

कविरयं देशभक्तः सत्याग्रहव्यवसायमनुप्रविष्टो महान्तं क्लेशमनुभूतवानिति, अमुद्रितास्वस्य कृतिषु 'गान्धिकल्पद्रुमः' कवेरिमं मनोभावं व्यनक्तीति च ज्ञायते।

आत्मदानम्

*श्रीभाष्यं विजयसारथिः, बि.ओ.एल्., विश्वेश्वरसंस्कृतान्ध्रकलाशाला, एकशिला (वारङ्गल्, आन्ध्रप्रदेशः) । मू० रू० १ ।*

मधुरमिदं गीतकाव्यं विश्वेश्वरसंस्कृतान्ध्रकलाशालाव्यवस्थापकस्य श्री के. शे. आकारपु नरसिंगगुप्तस्य धर्मपत्न्या श्रीमत्या अनन्तलक्ष्मीदेव्या कृतेन धनसाहाय्येन नव्यसंस्कृतपरिषद आश्रये मित्रपञ्चकेन प्रकाशितम् । यद्येवमेव धनिनः सर्वे दानशौण्डा भवेयुस्तर्हि संस्कृतसाहित्यलोकः प्रतिनवैः ग्रन्थजातैः समुत्तेजितो भविष्यति ।

आत्मदानं नाम गीतकाव्यमिदं शब्दार्थसुन्दरं नव्यकल्पनामेदुरं च विलसति । निरङ्कुशाः कवयः, तत्रापि विशेषतो गीतकवयः । संस्कृतभाषानिबन्धेषु प्रगतिमिच्छता कविना व्याकरणविरोधाः छन्दश्शास्त्रविरोधाश्च न गणिताः । एतादृशी प्रगतिस्तु प्रायो नाभीष्टा भवेद्विदुषाम् । प्रतिभाशालिनः कर्तुरस्य ज्ञायते सन्त्यन्या दश संस्कृतकृतय इति ।

श्रीशौरिराजस्तवः

*पण्डितरत्नं ति. एस्. श्रीनिवासाचार्यः । प्राप्तिस्थानम्—एस्. शौरिराजय्यङ्गार्, 'श्रीरामप्रसादः', सर्दार् रोड्, उडुमलप्पेट्टै, मद्रास्-प्रदेशः ।*

प्रबन्धार एते मद्रनगरस्थिताया श्रीभाष्यकारसंवर्धिनीसंस्कृतपाठशालायाः भूतपूर्वाध्यक्षाः । चोलदेशविराजमानतिरुक्कण्णपुरग्रामाभिजनानामेतेषां तत्र ग्रामे कृतालये शौरिराजे महती भक्तिः या तदा तदा तद्दैवतविषयकस्तोत्राभिष्यन्दरूपेण प्रवहति स्म । पुस्तकेऽस्मिन् एतैः श्रीनिवासाचार्यैः कृतानि शौरिराजसुप्रभातम्, तत्प्रपत्तिः, तन्मङ्गलमिति स्तोत्राणि प्रकाशितानि । २४१-श्लोकात्मके पूर्वोत्तरभागद्वयघटिते मुख्यभूते प्रथमस्तोत्रे न केवलं क्षेत्रमाहात्म्यविषयाः परं तु नूतना उत्प्रेक्षाः, वेदान्ताभिप्रायाश्च तत्र तत्र स्तोत्ररीत्या संवलिता दृश्यन्ते । प्रायः प्रसादसुभगा शैली । अन्ते विशिष्यावधेयोऽयं विषयः, यदेतैः द्राविडाम्नायभूतदिव्यप्रबन्धतः काश्चिद् गाथा अनूद्य

संस्कृतश्लोकरूपेण दत्ताः। ग्रन्थोऽयं ग्रन्थलिप्या द्राविड्यनुवादेन च सुष्ठु मुद्रितः।

**शबरीचरितम्**

*महाकवि श्रीसुन्दरेशशर्मा, वेस्ट् मैन् स्ट्रीट्, तञ्जापुरम्। मूल्यं ७५ न० पै०।*

चतुर्दशपुटात्मकमिदं काव्यं रामायणप्रसिद्धायाः शबर्याः पावनं चरितं वर्णयति। मधुराक्षरैर्गीतैः मनोहरं रामायणश्लोकैरुपगूढं च चरितमिदं शबर्या श्रीरामाय दत्तं फलमिव स्वदते। द्राविडभाषागीतान्यप्यत्र संयोजितानि। अनेकेषां ग्रन्थानां रचयिता श्रीमान् सुन्दरेशशर्मा रामचन्द्रभक्तश्च रचनामेतां हरिकथाकालक्षेपकृते भागवतानां यथा उपयुक्तं स्यात्, तथा तत्कलासंप्रदायानुसारेण सन्दृब्धवान्।

**भारतीयसांस्कृतिकनिधिः**

*डा० रामजी उपाध्यायः एम्.ए., डि. फिल्., सागरविश्वविद्यालये संस्कृतविभागाध्यक्षः। प्राप्तिस्थानम्—१. गान्धिविश्वपरिषत्, टाना, सागर, म० प्र०। २. चौखाम्बासंस्कृतसीरीज्, पो० बा० नं० ८, वाराणसी, १। मूल्यं, रू० १०।*

विपुलमगाधं च संस्कृतग्रन्थाम्भोराशिं भारतीयमितिहासं च निर्मथ्य सम्पादितोऽयं ग्रन्थः सर्वान् संस्कृतिविशेषान् क्रोडीकृत्य दर्शयति।

अत्र हि पूर्वं षोडशसंस्काराः, आश्रमधर्माः, सामाजिकसंस्थानम्, उपभोग्यानि, व्यवसायाः, मनोविनोदाः, राजनीतिकजीवनम्, दार्शनिकप्रवृत्तयः, धार्मिकप्रवृत्तयः, शिल्पकलाः, विज्ञानम्, काव्यसाधनानि, वैदेशिकप्रसारः इत्येते विषयाः महता प्रबन्धेन निरूपिताः। क्वचित् क्वचित् विमर्शकमार्गमवलम्ब्य विषयो विचारितः। केषाञ्चित् संस्काराणां वैज्ञानिकदृष्ट्या वैद्यकदृष्ट्या च समर्थनं कृतम्। अपारे संस्कृतग्रन्थसमुदायपारावारे सञ्चरतां जनानां ग्रन्थोऽयं नूनमुपकाराय कल्पेत। सुगमा भाषारीतिः। प्रायः आङ्गल-

वाण्यामेतादृशा ग्रन्था उपलभ्यन्ते; तदिदंप्रथमतया संस्कृतवाण्यामीदृशं ग्रन्थमवतारितवते ग्रन्थकृते धन्यवादा देयाः ।

**जीवनज्योतिः, प्रबन्धप्रकाशः (प्रथमद्वितीयौ भागौ)**

*डा० श्रीमङ्गलदेवशास्त्री, एम्.ए., एम्.ओ.एल्., डि. फिल् (आक्सफोर्ड्) प्रकाशकः—के. मित्र, इण्डियन् प्रेस् लिमिटड्, प्रयाग्, मूल्यं (जीवनज्योतिः) रू० २ न० पै० ५०, (प्रबन्धप्रकाशः) प्रतिभागं रू० ३ ।*

ग्रन्थकर्तुरस्य परिचयः पूर्वस्यां सञ्चिकायां कृत एव, यत्र तदीयः अमृतमन्थननामको ग्रन्थः समालोचितः ।

जीवनज्योतिर्नामकः तस्य प्रकृतो ग्रन्थः रश्मिनामकैः एकविंशत्या भागैः समुल्लसन् वेदकालिकीं संस्कृतिं प्रकाशयन् जनजीवनस्य मार्गे नव्यं ज्योतिः प्रसारयति । जीवनसङ्गीतम्, दुःखमीमांसा, भावसंशुद्धिः, वैदिकसुधासन्दोहः, वैदिकोदात्तभावनाः, वैदिकं राष्ट्रियसङ्घटनम्, इत्यादयोऽनेके विषयाः श्रुतिवचनोदाहरणपूर्वकं साधु निरूपिताः ।

ग्रन्थकृता वेदानुशिष्टां संस्कृतिमुपपाद्य जनानां जीवनविषये नूतना दृष्टिरुपस्थापिता । ग्रन्थस्यास्य परिशीलनेन आविर्भूतनूतनज्योतिरुत्साहसम्पन्ना भविष्यति भारतीया जनता ।

प्रबन्धप्रकाशस्य प्रथमभागे विविधविषयका उपन्यासाः प्रकाशिताः । ग्रन्थेऽस्मिन् प्रथमतः प्रबन्धरचनाप्रकारः सविस्तरं निरूपितः प्रबन्धान् चिकीर्षतामवधानमर्हति । शिक्षायाः प्रधानमुद्देश्यम्, भारतीयसंस्कृतौ स्त्रीजातेः स्थानम्, गीतायाः कर्मणो यज्ञस्य च स्वरूपम्—इत्यादयो विषयाः जनानां हृदये प्रतिनवमुद्बोधं जनयिष्यन्ति ।

प्रबन्धप्रकाशस्य द्वितीयभागे भारतवर्षीयेषु बहुषु विश्वविद्यालयेषु ग्रन्थकर्त्रा कृतानि दीक्षान्तभाषणानि प्रकाशितानि वर्तन्ते । अभिनवभारते संस्कृतज्ञानां स्थानम्, पाठ्यपद्धतेः परिष्कारः, देववाण्या अवनतिरस्माकं कर्तव्यं च इत्यादयो विषयाः सविशेषं विमृष्टाः । वैदिकवासनोद्भासिता एव दृश्यन्ते श्रीशास्त्रिमहाभागस्य सर्वे प्रबन्धाः ।

दीक्षान्तभाषणम्—

*वाराणसेयसंस्कृतविश्वविद्यालय-द्वितीयतृतीय-दीक्षान्तमहोत्सवे कुलपते: उत्तरप्रदेशराज्यपालस्य श्रीरामकृष्णराव्-महोदयस्य दीक्षान्तभाषणम् ।*

सरसमृदुलया वाण्या श्रीरामकृष्णराव्-महोदयः संस्कृतविश्वविद्यालयस्य कर्तव्यं, संस्कृताध्ययनस्योपयोगः, संस्कृताध्ययनं कथं कर्तव्यम् इत्यादिकान् विषयान् सोपपत्तिकं विचारयति । संस्कृतज्ञैरवश्यं विज्ञानशास्त्रमपि परिशीलनीयम्, अन्यथा ते लोकबाह्या भविष्यन्तीत्यभिप्रैति । तच्च विज्ञानशास्त्रं संस्कृतभाषयैव परिशीलनीयमित्यप्याशेते । इरान्देशे प्राचीनां हिब्रूभाषां व्यवहारभाषापदमारोप्य यथा राज्यकार्यनिर्वाहः क्रियते, तथैव संस्कृतभाषाऽपि राष्ट्रभाषापदमारोययितुं शक्येति राव्महाभागस्याभिप्रायं श्लाघामहे । संस्कृतभाषाविषये विवदमानैः भाषणमिदमवश्यं पठितव्यम् ।

शारदा—गणराज्यदिनविशेषाङ्कः

*सम्पादकः पण्डितवसन्त अनन्त गाडगीळ । प्रकाशनस्थलम्—सचिन अँण्ड् कं०, २५ बाङ्क् स्ट्रीट्, फोर्ट्, मुम्बई १, अथवा श्री. म० म० दत्तोवामनपोद्दार, ७७ शनिवार पुणें २ । अस्य विशेषाङ्कस्य मूल्यं रू० १ । शारदाया वार्षिकं मूल्यं रू० ५ ।*

संस्कृतभाषापत्रिकाणामन्यतमैषा शारदानाम्नी शब्दतोऽर्थतश्च सहृदयानां हृदयमाकर्षति । प्रतिपाद्या विषयाश्च मनोहरा नवीनच्छायाहारिणश्च । तथाहि—क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ जवाहर, धाता धत्ते धियं कवेः, भारतीयत्वविमर्शः, परिशील्यतां भारतीयत्वबुद्धिं समर्थयन्ती संस्कृतभाषा; समस्यापूर्तयः, बुद्धेः फलमनाग्रहः, श्रीरामचन्द्रस्तोत्रम्, सप्तदशः प्रजापतिः, श्रीगीतासमन्वयः, मध्यमोऽपि स्मृतस्तेषामुत्तमः प्रथमश्च सः, एतत्तस्य तरोर्बीजम्, विद्यावतां सकलमेव गिरां दवीयः, इवमीमांसा, इत्येतच्छीर्षका विषया अत्र प्रतिपाद्यमानाः सहृदयानां सादरमवलोकनमर्हन्ति । भाषारीतिश्च गुणवती शोभतेतराम् ।

**मालवमयूरः (मासिकं पत्रम्)—**

*सम्पादकः—शास्त्री पं० रुद्रदेवत्रिपाठी एम्.ए. । सम्पादको व्यवस्थापकश्च—शास्त्री पं. जयदेवत्रिपाठी, शङ्करवेदान्ताचार्यः । प्राप्तिस्थानम्—मालवमयूरकार्यालयः, मन्दसौर, (म. प्र.) वार्षिकं मूल्यं रू० ५१, एकाङ्कस्य मूल्यं० ५० न० पै० ।*

अतीते कार्तिके मासि शुक्लपक्षे प्रकाशितमिदं पत्रम् । अत्र ईश्वरस्मरणपूर्वकं चित्रपद्यामृतम् , कालिदासं प्रति, कविकुलतिलकवन्दनम्, भारतीयकलायाः प्रेरकः कालिदासः, संस्कृतसुखशिक्षा, साहित्यसमीक्षणम्, नवग्रहचरितं नाम लघुनाटकम्,—एते प्रबन्धाः प्रकाशिताः, अनेकेऽवधेया विषयाश्च विचारिताः । अन्ते सम्पादकीयमपि प्रकटितम् ।

**गुरुकुलपत्रिका (मासिकी)**

*सम्पादकः श्रीधर्मदेवविद्यामार्तण्डः । प्रकाशकः—धर्मपालविद्यालङ्कारः, गुरुकुल, कांगडी विश्वविद्यालयः, हरिद्वारम् । वार्षिकं मूल्यं देशे रू० ४, विदेशे रू० ६ ।*

अस्याः पत्रिकायाः सम्पादको धर्मदेवविद्यामार्तण्डः प्रसिद्धः पण्डितः । त्रयोदशवर्षदेशीया तेन सम्पाद्यमानैषा पत्रिका प्राधान्येन वैदिकधर्मान् व्याख्यातुं प्रवृत्ताप्युच्चावचान् विषयान् विचारपदमारोपयति । अत्र लेखकाः सर्वे प्रख्याता विद्वांसः । न केवलं वैदिकाः, नापि केवलं लौकिकाः, किन्तु ख्यातिवादादयो गहनाः शास्त्रीया विषया अपि सुगमया सरण्या निरूप्यन्ते । संस्कृतप्रणयिनः सर्वे पत्रिकामिमां पठेयुरिति विश्वसिमः ।

**उद्गातृदशाननम्**

*रचयिता—श्री य. महालिङ्गशास्त्री, एम्.ए.बि.एल्., साहित्यचन्द्रशाला, तिरुवालङ्गाडु, तञ्जापुर डिस्ट्रिक्ट् ।*

प्रथितधवलयशसां श्रीमदप्पय्यदीक्षितानां वंशे समुत्पन्नोऽयं प्रकृतस्योद्गातृदशाननस्य रचयिता श्रीमान् महालिङ्गशास्त्री । प्रसिद्ध एवासौ

संस्कृतकविः, यस्य कृतयः काश्चित् प्रकाशिताः काश्चित्समालोचिताश्च संस्कृतप्रतिभायाम् ।

सप्ताङ्कात्मकमिदमुद्भ्रान्तदशाननं नाम नाटकं रावणकृतस्य कैलासशैलोत्तम्भनस्य कथां प्रस्तौति ।

नाटकमिदं व्यङ्ग्यार्थानुविधायिना मनोहारिणा शब्दसन्दर्भेण विराजमानमुत्कृष्टानां नाटकानां पङ्क्तौ परिगणनमर्हति । नाटकेऽस्मिन् कथावस्तुघटनेऽपि महन्नैपुण्यमाविष्कृतं कविना ।

कविरयं गद्यानां पद्यानां नाटकानां गीतानां च रचने प्रख्यापितात्मप्रभावः प्रथते ।

## आदर्शराघवः पुष्पाञ्जलिः

*श्रीसोमनाथशर्मा, प्रधानपण्डितः, ठमेल, नेपाल् । 'मूल्यममूल्यं प्रेम'।*

वेदान्ततत्त्वोद्भासितमिदं स्तोत्राणामुत्तमं स्तोत्रं रघुकुलतिलकस्य श्रीरामस्य चरणयोः समर्पितः पुष्पाञ्जलिः श्रीरामस्य महिमानमनुवर्णयति । आध्यात्मिककाण्डः आधिदैविककाण्डः आधिभौतिककाण्ड इति त्रेधा विभक्तोऽयं ग्रन्थः त्रिंशता स्तबकैः समुल्लसति । रमणीयः शब्दार्थसन्दर्भः । कमनीयः कविताविलासः । शालिनीमालिनीमन्दाक्रान्तादिवृत्तेषु प्रथमतृतीयपादयोः ह्रस्वन्तत्वं यदि परिहृतं तदा अनवद्यं स्यात् ।

नेपालदेशे काष्ठमण्डपनगरे सुप्रसिद्धा इमे वयोवृद्धा ज्ञानवृद्धाः पण्डितप्रवराः । एतेषां कृतिषु अन्यतमं सिद्धान्तकौमुद्याः संग्रहेण प्रतिसंस्करणं, यदद्य मुद्र्यमाणं वर्तते ।

## सङ्गीतसौभद्रम्

*कर्ता—श्री. भि. बेलण्कर् । प्राप्तिस्थानम्—गीर्वाणसुधाप्रकाशनम्, झावबा वाडी, मुंबई २ । मू० २ रू० ।*

श्रीमतो बेलण्करस्य द्वे कृती प्रतिभायां निरूमितपूर्वे । तस्येयं तृतीया कृतिः यापि मराठीसाहित्यादनूदिता । मराठीरङ्गे किर्लोस्करुपज्ञं सङ्गीतसौभद्रं

नाम नाटकमजानानो नास्त्येव। अनेन संस्कृतानुवादेन अनुवादकाभीष्टे द्वे कार्ये साधयितुं शक्येते—प्रथमं महाराष्ट्रप्रदेशतो बहिर्वर्तमानानां नानाप्रान्तीयानां मराठीसौभद्रस्य सुभुद्रां लक्ष्मीमास्वादयितुमवकाशः; द्वितीयं संस्कृतरङ्गं तत्र तत्र प्रवर्धयितुमुत्सुकानां सुप्रसिद्धप्रयोगवस्तुलाभश्च। अण्णासाहेब्-किर्लोस्कर् आधुनिकयुगे महाराष्ट्ररङ्गस्य प्रोज्जीवयितासीत्। संस्कृतनाटकेभ्यः पुराणकथाभ्यश्च उद्धृत्य तेन यानि महाराष्ट्रनाटकानि निबद्धानि तेषां प्रधानः जनावर्जकश्च अंशः तत्र योजितानि गीतानि। बहवः कर्णाटसंगीतरागाः तेन आदृताः। एतादृशस्य गीतानुविद्धस्य नाटकस्य संस्कृतानुवादे अनुवादकस्य गीतज्ञा सहधर्मचारिणी परं साह्यकरी आसीत्। एष च अनुवादः मुम्बई-ब्राह्मणमहासभया गते मासे रङ्गे प्रयोजितः सहृदयैस्तत्रत्यैस्सर्वैः श्लाघित इति ज्ञात्वा प्रमोदामहे। मुद्रणं सचित्रं सुन्दरं च भाति।

**आह्निकस्तवः**

*श्रीकपालिशास्त्रिभिः प्रणीतः। प्रकाशकः—मा. पु. पण्डितः, अरविन्दाश्रमः। पाण्डिचेरि। मूल्यं रू० १।*

स्तोत्रग्रन्थेऽस्मिन् अष्टौ स्तवाः सन्ति। तत्र प्रथमः आह्निकस्तवः नूतनवर्षारम्भे पठनीयः। ततः अरविन्दत्रिपादीस्तवः। अत्र त्रयो भागाः सन्ति, एकैकस्मिन् भागे चतुर्विंशतिः श्लोकाः। तत्र अरविन्दयोगिदृष्टस्य नूतनस्य गायत्रीमन्त्रस्याक्षराणि क्रमशः प्रथमाक्षरत्वेन निबध्य विरचितैः श्लोकैः विलसत्येकैकोऽपि भागः। अरविन्दयोगिना दृष्टो गायत्रीमन्त्रः—

तत्सवितुर्वरं रूपं ज्योतिः परस्य धीमहि।
तन्नः सत्येन दीपयेत्॥ इति।

अत्रत्याः श्लोकाः सर्वे निरर्गलं गलिता अयत्नसिद्धाश्च। तृतीयः सूक्तस्तवः। अत्र ऋग्वेदीयप्रथमण्डलस्य नवमेऽनुवाके अग्निदेवताकानि नव सूक्तानि श्रीमदरविन्ददर्शनानुरोधेन सरसैः संस्कृतश्लोकैरनूदितानि। ग्रन्थेऽस्मिन् विराजमानाः सर्वे स्तवाः सुश्लिष्टैः श्लोकैरुपनिबद्धाः श्रीकपालिशास्त्रिणां सर्वाभिनन्द्यं वैदुष्यं प्रकटयन्ति।

## साम्राज्यलहरी

*बुद्धिसागरः पराङ्गुलिः, मीमांसाचार्यः, प्राप्तिस्थानम्—अनन्त-विजय, टंगाल दरबार, पूर्वद्वार, काठमाडौँ, नेपाल । मूल्यं न निर्दिष्टम् ।*

बुद्धिसागरोत्पन्ना लहरीयं गर्भीकृतविविधशास्त्रार्था कर्तुः शास्त्राभिज्ञतां व्यनक्ति । लहर्यामस्यां १०१ श्लोकाः सन्ति । प्रतिश्लोकमन्तिमः पादः—'ऋते त्वत् कः क्षाम्येत् सततमपराधाञ्जननि मे', इत्येवं सङ्घटितः ।

इयं मानसपूजारूपेण प्रवृत्ता स्तुतिः । अस्य ग्रन्थस्य प्रस्तावनायां पूजान्तरापेक्षया मानसपूजायाः प्राशस्त्यं निरूपितम् । शिखरिणीवृत्तम् । प्रथमतृतीयपादयोर्बहुत्र ह्रस्वान्तत्वं दृश्यते । 'मीमांसन्तः' इत्यादयः शोधनापेक्षिणः शब्दा वैरल्येनोपलभ्यन्ते ।

ग्रन्थकर्तायं नेपाले काठ्मण्डु (काष्ठमण्डप) नगरे वीरपुस्तकालयेऽधिकृतः । अनेन 'संस्कृतसन्देशः' इति काचन संस्कृतपत्रिकापि काष्ठमण्डपतः प्रकाश्यमानासीत्, या पुनरपि अनुस्यूततया प्रकाशीभविष्यतीति आशंसामहे ।

## धर्मरक्षणम्

*भूपतिलक्ष्मीनारायणः । श्रीवेङ्कटेश्वरविश्वविद्यालयः । प्राप्तिस्थानम्—त्रिलिङ्गग्रन्थालयः, तिरुप्पति । मूल्यं न निर्दिष्टम् ।*

नवीनां रीतिमनुसृत्य रचितमिदं नाटकं नातिदीर्घैः षड्भिरङ्कैर्घटितमभिनययोग्यं च भवति ।

नाटकीयं कथावस्त्वत्र महाभारतादुद्धृतम् । भगवतः श्रीकृष्णस्य सन्धिप्रयत्नः विफलो जातः । ततः स भीष्मं द्रोणं कर्णं च विदुरस्य गृहमानाय्य तान् समरविमुखान् कर्तुं यतते । सोऽपि यत्नः विफलतामगात् । स्वधर्मं रक्षितुकामास्ते श्रीकृष्णस्य वचनं न कर्णे चक्रुः । ततः श्रीकृष्णकृतेन एकलव्यवधेन सह नाटकमवसितम् । अयमन्तिमः कथांशः न सर्वैरप्यभिनन्द्येत । ग्रन्थकर्तुः सरला शैली अभिनन्दनमर्हति । नात्र श्लोकाः सन्ति । नापि विष्कम्भादिविभागः । केवलं गद्यमयं नाटकम् ।

**दुर्गास्तोत्रम्**

*श्रीमता अरविन्देन वङ्गभाषायां निबद्धस्य स्तोत्रस्य संस्कृतानुवादः ; अनुवादकः—श्रीजगन्नाथः, अरविन्दाश्रमः, पाण्डिच्चेरि । मूल्यं न निर्दिष्टम् ।*

तत्रभवता अरविन्दयोगिना एकत्रिंशता स्तोत्रैर्घटितं देशभक्तिपरिप्लुतमिदं स्तोत्रं रामणीयकस्य परं भागमाश्रयति । एकतमं स्तोत्रमिहोदाह्रियते—

मातर्दुर्गे विभूतिस्ते पुण्यभारतभूरसौ ।
श्यामला सर्वसौन्दर्यराशिना सुविभूषिता ॥
ज्ञानशक्त्योस्तथा प्रेम्णः प्रतिष्ठा परमा च या ।
शक्तिसम्भृतयेऽकार्षीदात्मसंवरणं चिरम् ।
आगतं तद्युगं मातरागतं तद्दिनं तथा ।
यदोढविश्वभारासौ भवत्युत्थानतत्परा ।
एहि मातः प्रकाशस्व त्वमाविर्भव भारते ।

स्तोत्रेणानेन तस्य परमा देशभक्तिः महाकवित्वं च प्रकटीभवति । अत्र स्तोत्राणि पद्यैः गद्येन च दत्तानि । जगन्नाथकृतः संस्कृतानुवादोऽपि निरवद्यः ।

**कथामञ्जरी**

*अरविन्दाश्रमवासिन्याः श्रीमातुः कृतिः । अरविन्दाश्रमः, पाण्डिच्चेरि । मूल्यं रू० ३ ।*

‘ बेल्-हिस्तायुर्स् ’ समाख्यस्य फ्रेञ्च्भाषाग्रन्थस्य संस्कृतानुवादरूपा मञ्जरीयं समाकर्षति सहृदयानां चेतः । ‘ आत्मसंयमः, सत्साहसम् , प्रफुल्लता, स्वावलम्बनम् , धैर्यमध्यवसायश्च, सरलजीवनम् , दूरदर्शिता, सत्यनिष्ठा, यथार्थनिर्णयः, व्यवस्था, विरचनं च विनाशनं च ’, इत्येते चेतस्संस्कारा-धायका विषया तत्तत्कथोदाहरणपूर्वकं मधुस्यन्दिन्या वाण्या प्रतिपाद्यन्ते । यत्सत्यं श्रीमातुरियं वाणी बालानामुद्बोधाय भविष्यति । ग्रन्थस्यान्ते प्रकाशितं शब्दार्थविवरणमत्यन्तोपयोगि भवति ।

सन्मार्गः

*चिदम्बरं श्री. के. एस्. नरसिंहशास्त्री । प्रकाशकः—के. वै. रामशर्मा, प्रधानाध्यापकः, मे. चे. विद्याशाला, चिदम्बरम् , दक्षिणभारतम् । मूल्यं २५ न० पै० ।*

तत्रभवती 'औवै' नाम्नी द्राविडविदुषी भक्तिभरितानामुपदेशपराणां च काव्यानां प्रणेत्री द्रविडेष्वद्यापि धवलेन यशसा जीवति । तया कृतानां द्राविडभाषासूक्तीनामद्यापि बालैः पठ्यमानानां संस्कृतानुवादोऽयं 'सन्मार्गो' नाम । एतस्यानुवादकः श्रीमान् शास्त्री द्राविड्यां गैर्वाण्यां च परमं वैदुष्यं भजते, व्याकरणादिशास्त्राभिज्ञश्च । अयमनेकेषां लघुग्रन्थानां प्रणेतृत्वेन प्रसिद्धः । एतदीयः 'तिरुक्कुरल्' नामकस्य प्रसिद्धस्य द्राविडग्रन्थस्य संस्कृतानुवादः संस्कृतप्रतिभायां प्रकाश्यमानो वाचकानां विदितचर एव ।

'सन्मार्गे'ऽस्मिन् ४० श्लोकाः सन्ति । एषां श्लोकानां सम्मुखे मूलभूतानि द्राविडपद्यान्यपि मुद्रितानि ।

श्रीमातृमुक्तावलिः

*श्रीमाता, अरविन्दाश्रमः, पाण्डिच्चेरि । मूल्यं ०-८-० ।*

सूक्तिमुक्तावलिरियं वर्षारम्भदिनात् यावदब्दान्तं पठनीयैः श्लोकैः सन्दब्धा अरविन्दाश्रमवासिन्याः श्रीमातुर्मुखान्निर्गलितानां वाचामनुवाद इति ज्ञायते । कृतिरियं गभीरभावा जनेषु नवजीवनमुद्बोधयति चेतश्च विकासयति ।

अनुवादकाः श्रीमन्तः कीर्तिशेषाः कपालिशास्त्रिणः, यैरन्तेऽत्र स्वकृतं स्तोत्रद्वयमप्यायोजितम् ।